*Sanskrit Academy Series - 21*

*A. 18*

# SĀHITYARATNĀKARA

OF

# DHARMASŪRI

**with**

Nauka & Mandara Commentaries.

PART - I

**Sanskrit Academy**

Osmania University, Hyderabad-7

( A. P. )

**1972**

*Sanskrit Academy Series - 21*

*A. 18*

# SĀHITYARATNĀKARA

OF

## DHARMASŪRI

with

Naukā of Carla Veṅkaṭasūri

ānd

Mandara of Mallādi Lakṣmaṇa Sūri

PART - 1

(1 - 5 TARAṄGAS)

*General Editor :*

DR. B. R. SASTRY, M. A., Ph.D.

Director, Sanskrit Academy

*Edited by :*

K. RAJANNA SASTRI, M.O.L.,

Samskrita Sahityaratna, Vidyapravina

**Sanskrit Academy**

Osmania University, Hyderabad-7

( A. P. )

A. D. 1972 Sàka 1894

संस्कृतपरिषद्ग्रन्थमाला – २१

अ. १८

धर्मसूरिविरचितः

# साहित्यरत्नाकरः

बल्लवेङ्कटसूरिकृतया नौकया श्रीमल्लादिलक्ष्मणसूरिकृतेन मन्दरेण च
समलङ्कृतः

प्रथमो भागः

(१–९ तरङ्गाः)

प्रधानसम्पादकः

डा. बोम्मकण्टि रामलिङ्गशास्त्री, एम्.ए., पिएच्.डि.

संचालकः, संस्कृतपरिषत्

सम्पादकः

के. राजन्नशास्त्री, एम्.ओ.एल्.

संस्कृतसाहित्यरत्नम्, विद्याप्रवीणः

संस्कृतपरिषत्, उस्मानियाविश्वविद्यालयः

हैदराबाद–७.

१९७२ शक १८९४

# CONTENTS



-:o:-

## PREFACE

We have great pleasure in placing in the hands of scholars Part I, i. e., the first five Tarangas of Sahityaratnakara of Varanasi Dharma Suri together with its two commentaries, viz., Nauka and Mandara.

The author of Sahityaratnakara as well as the authors of the two commentaries mentioned above belong to Andhra Pradesh which has made a notable contribution to Alankara Sastra in the history of Sanskrit Literature.

The two commentaries, viz., Nauka and Mandara included in the present edition are being published for the first time in Devanagari script.

Sahityaratnakara is an extensive and erudite treatise on Sanskrit Poetics. It is divided into ten Tarangas and deals with all topics of Alankara Sastra except Dramaturgy.

Varanasi Dharma Suri, the author of Sahityaratnakara lived in the 16th century A. D. He was born at Pedapulivarru, Repalle Taluk, Guntur District, Andhra Pradesh and was the son of Parvatanatha and Yellamamba. In his later days he became an ascetic and took the name of Ramananda or Govindananda Sarasvati. For a time he lived at Varanasi. He wrote over a dozen works of which only five have been published. His Ratnaprabha, a Vyakhya on Sankara's Bhashya on Brahmasutra is a widely read work in Vedanta literature.

Dharma Suri was a great devotee of Sri Rama. All the poems that he wrote as illustrations in Sahityaratnakara are in praise of Sri Rama. He has no respect for poets who praised Kings in their writings just to "fill their bellies".

अलङ्क्रियाः पूर्वतरैः प्रणीता न योजिताः काश्चन नायकेन ।
कैश्चित्तु कुक्षिम्भरिभिर्निबद्धाः क्षोदीयसा काश्चन नायकेन ॥

(Sahityaratnakara, I-31).

The author of the Nauka commentary, Charla Venkata Suri lived in the second half of the 18th century. He was the son of Lakshmanarya and Surimamba. He was a pupil of Anivilla Venkata Sastri of Kakaraparti Agrahara, West Godavari District, Andhra Pradesh.

The author of the Mandara commentary, Malladi Lakshmana Suri lived in the 19th century. It is said that he was a resident of Kakinada, East Godavari District, Andhra Pradesh.

The present text of Sahityaratnakara was edited by Sri K. Rajanna Sastri who conducted research in our Academy during the years 1964–1966 under the Government of India Scheme of Research Scholarships to the Products of Traditional Sanskrit Pathashalas, 1962–'63. Sri Rajanna Sastri's work was supervised by Sri D. G. Padhye, Research Assistant, Sanskrit Academy. Sri Rajanna Sastri has given a comprehensive Introduction in Sanskrit to the present work.

The Academy wishes to express its gratitude to the Government of India and the Government of

Andhra Pradesh for their financial assistance towards the publication of this important work.

We are deeply indebted to Sri N. Narotham Reddy, Vice-Chancellor, Osmania University for the keen interest he has been evincing in the work and progress of the Academy.

We are thankful to the Bhandarkar Oriental Research Institute, Poona, for lending us the manuscript of the Sahityaratnakara.

Our thanks are also due to the Adyar Library, Adyar, Madras for promptly furnishing us with some missing portions in the Nauka commentary on the first Taranga of Sahityaratnakara.

The Director, University Publications & Press, Osmania University, deserves our thanks for his co-operation in printing this work in a very short time.

Our thanks are also due to Sri D. G. Padhye, Sri V. Sundara Sarma, Sri Anantacharya Deval and Sri A. N. Varakhedkar, staff members of the Research Section of the Academy for their whole-hearted co-operation in this project.

Hyderabad, B. R. SASTRY
25th July, 1972.

—:•:—

# प्रास्ताविकम्

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ।। (वै.श.५५)

विरलाः खलु तादृशाः पुमांसो येषां यशश्चन्द्रचन्द्रिकाभिर्धवलितं सद् राराजते विश्वम् । कति वा नोत्पन्नविनष्टा येषां नामापि नो जानीमहे । अत एव खल्वध्रुवेणानेन शरीरेण ध्रुवं यशः सम्पादनीयम् । सुस्थिरयशःसमुपार्जने च नान्यत् साधनम् ऋते च काव्यात् । उक्तं हि –

यतः क्षणध्वंसिनि सम्भवेऽस्मिन्
काव्यावृतेऽन्यत् क्षयमेति सर्वम् ।
अतो महद्भिर्यशसे स्थिराय
प्रवर्तितः काव्यकथाप्रसङ्गः ।।

इति । कथितं चाप्यालङ्कारिकमूर्धन्येन रुद्रटेन --

स्फारस्फुरदुरुमहिमा हिमधवलं सकललोककमनीयम् ।
कल्पान्तस्थायि यशः प्राप्नोति महाकविः काव्यात् ।। (रु.१.८१)

अमरसवनादिभ्यो भूता न कीर्तिरनश्वरी
भवति यदसौ संवृद्धापि प्रणश्यति तत्क्षये ।
तदलममलं कर्तुं काव्यं यतेत समाहितो
जगति सकले व्यासादीनां विलोक्य परं यशः ।। (रु.१.२२)

इति । पूर्वपुण्यविभवैः खलु वश्या भवति भगवती वाग्देवता । सा च स्थाने विनियुक्तैव चरितार्था भवति । उक्तं च कविकुलललामेन जगद्धरभट्टेन –

अस्थाने गमिता लयं हतधियां वाग्देवता कल्पते
धिक्काराय पराभवाय महते तापाय पापाय वा ।
स्थाने तु व्ययिता सतां प्रभवति प्रख्यातये भूतये
चेतोनिर्वृतये परोपकृतये प्रान्ते शिवावाप्तये ।।

इति । ( स्तुतिकुसुमाञ्जली )

अत एव साहित्यरत्नाकरस्यास्य प्रणेता निखिलशास्त्रनिष्णातः पण्डितमण्डल-मण्डनायमानः महाकविः श्रीधर्मसूरिर्लोकोत्तरगुणोत्तरश्रीरामभद्रपुण्यश्लोकमुपकीर्त्य निजकवितां चरितार्थयामास । श्रुतिपथमतिथीक्रियतां तस्येयमुक्तिः –

भो मातः कविते हितं मम वचः किञ्चित् समाकर्णय
श्रीमद्रामगुणस्तवामृतवती मर्त्यस्तुतिं मा कृथाः ।
कस्तूरीघनसारचन्दनरसन्यासोत्सवास्वादवित्
को वा विस्रवसाप्रपूयपिशितालेपाभिलाषी भवेत् ।।

इति । (साहित्यरत्नाकरे १०.८४)

सोऽयं धर्मसुधीः नैकविधसाहित्यप्रक्रियासु सिद्धहस्ततां प्रदर्श्य विद्वद्भावुकानां मनःप्रमोदं विदधानः साहितीप्रपञ्चे चिरस्मरणीयतामभजदित्यत्र न संशयावकाशः ।

अथेदं प्रस्तूयते – यदयं धर्मसुधीः कुत्रत्यः किंसामयिकः किंवंश्यः काश्चास्य कृतय इत्यादि ।

जन्मस्थानम् —

धर्मसूरिरयं स्वजन्मना कृष्णानदीतीरस्थं "पेदपुलिवर्रु" ग्रामं विभूषयाञ्चकार । श्रूयते चाद्यापि एतद्वंश्यास्तत्र निवसन्तीति । हरितसगोत्राश्च ते धर्मसूरिणममुं स्वमूलपुरुषत्वेन समाचक्षते । यतश्च तेषां सन्ध्यावन्दनकर्मणि आनुवंशिकतया विधीयमाना ध्रुवोपस्थानादिविशेषाः पण्डितवंश्यत्वम्, अन्यत्रत्येभ्यो हरितसगोत्रेभ्यो वैलक्षण्यं च ख्यापयन्तीति च ।

कालः —

कविवतंसेनानेन स्वसाहित्यरत्नाकरे सर्वज्ञसिङ्गभूपालविरचितरसार्णव-सुधाकरादेकं पद्यं समुद्धृतम् ।

यथा –

तत्राद्यो भूपालेनोक्तः । (रसार्णव०रसिकोल्लासे०श्लो० २२१)

युवानौ यत्र संक्षिप्तान् साध्वसव्रीडिताविभिः ।
उपचारान् निषेवेते स संक्षिप्त इतीरितः ।।

इति । (साहित्य०रत्न)

तथा च चतुर्दशशताब्दोत्तरार्ध (१३६०–१४००) वर्तिनः सर्वज्ञसिङ्ग-भूपालादर्वाचीनोऽयं कविवर्यो धर्मसूरिरिति निश्चीयते ।

अथास्योत्तरावधिर्नाद्यापि निश्चयधियमनुधावति ।

केचित्त्वभिप्रयन्ति – यद् दोनूरि कोनेरुनाथकविविरचितमस्ति बालभागवताख्यं काव्यद्वयमान्ध्रभाषायाम् । तत्रैकं द्विपदच्छन्दोबद्धम् । अन्यच्च पद्यबद्धम् । प्राय एतद्धर्मसूरिप्रणीतबालभागवतकाव्यस्यान्ध्रानुवादरूपं स्यात् काव्यद्वयम् । अतश्च धर्मसुधीः षोडशशताब्दपूर्वार्धं (१५४७ A.D) विद्यमानात् कोनेरुनाथकवेः प्राचीन इति तर्क्यत इति । तथापि धर्मसूरिकृतबालभागवतकाव्यमेव नाद्य यावदुपलब्धम् । उपलभ्यते तु पद्यद्वयं तत्रस्थं साहित्यरत्नाकरनरकासुरविजयव्यायोगयोः समुद्धृतम् । यदि समुपलब्धपद्यद्वयार्थोऽपि समुपलभ्येतान्ध्रबालभागवतकाव्ये, तर्ह्येव सिद्धं स्यान्नः समीहितम् ।

अन्ये पुनः —

आन्ध्रभाषोपनिबद्धच्छन्दःशास्त्रप्रणेतुः 'अप्प'कवेः (१६५६ A.D) प्राचीनोऽयं कविवर्यः । यतश्चाप्पकविना स्वग्रन्थे साहित्यरत्नाकरस्थत्वेन पद्यमिदं समुदाजह्रे –

साहित्यरत्नाकरे –

प्रभूनुद्दिश्य पद्यं वा प्रबन्धं वा कदाचन ।
न वक्तव्यं न वक्तव्यं मातृकापूजनं विना ॥

इत्येवं समाचक्षते । तदेतदविचारितरमणीयम् । समुदाहृतपद्यस्य साहित्यरत्नाकरेऽस्मिन्ननुपलभ्यमानत्वात् । गौरनकविनापि स्वविरचितलक्षणदीपिकायां[1] पद्यस्यास्य पद्यान्तराणां च साहित्यरत्नाकरस्थत्वेन समुदाहृतत्वात् कोऽप्यन्यः साहित्यरत्नाकराख्यः छन्दःशास्त्रविषयको ग्रन्थः स्यादिति समुदाहृतपद्यपर्यालोचनया सम्भाव्यते ।

तथा च नायं कविः सप्तदशशताब्दोत्तरार्धं (१६५६ A.D) वर्तिनोऽप्पकवेः प्राचीन इत्युत्तरावधिनिर्णयो युक्तिसहः ।

भवति च लिङ्गं कवेरस्य नियतकालनिर्णायकम् । यद्यैतिहासिका अत्र श्रद्दध्युः । तच्चेदम् —

---

1. सेयं लक्षणदीपिका (आन्ध्रभाषोपनिबद्धा छन्दःशास्त्रविषयिका) नाद्य यावन्मुद्रिता । किन्तु लिखितप्रतिः उस्मानियाविश्वविद्यालयान्ध्रविभागे प्राचार्य (रीडर्) पदमधितिष्ठता डॉ. बि. रामराजुमहोदयेन स्वग्रन्थालये 2585 क्रमसङ्ख्याता सुरक्षिता वर्तते ।

जित्वा रामावधानिप्रवरमुरुमरुद्वेगवद्वेदचर्चा-
गोष्ठ्या नारायणार्यः सदसि बुधशतैः श्लाघ्यमानावधानः ।
सन्तुष्टाद् धर्मभूपावलभत शिबिकां चामरच्छत्रपूर्वं
गर्वाखर्वावधानीश्वरशरभघटागण्डभेरुण्डचिह्नम् ॥
(साहित्यरत्ना० १.२१)

इति ।

कविज्येष्ठपितृव्यवर्णनपरमेतत् पद्यम् । अत्र हि तस्य धर्मभूपात् शिबिकादि-प्राप्तिः वर्णिता । कोऽयं धर्मभूपः किंसामयिकः कुत्रत्यः इत्याद्यद्ययावदनिर्णीतमेव । यदि धर्मभूपकालो निर्णीतः स्यात्, तर्हि जितमस्माभिः ।

तथा च धर्मसूरिरयं चतुर्दशतकोत्तरार्ध(१३६०-१४७७)वर्तिनः सर्वज्ञ-सिङ्गभूपालात् प्राचीनः इत्यतोऽधिकं वक्तुं न पार्यते ।

कृष्णमाचार्यास्तु षोडशशताब्दवर्तिनममुं समाचक्षते[1] ।

वंशानुक्रमः -

कविरयं साहित्यरत्नाकरे स्ववंशमित्थं वर्णयति[2]–अङ्गिरोमुनिवरसुतस्य हरितमुनेर्गोत्रेऽतीव विख्यातो वारणासीति वंशः । तत्र त्रिपुरारिसोमयज्वादयोः वाराणसीविहितनित्यनिवासदीक्षाः शुभतपःश्रुतशीलवृत्ताः समभवन् । तेषु त्रिपुरारिविदुषः पार्वत्यां धर्मपण्डितः (कवेः पितामहः) समुद्भूतः । सोऽयं नितान्तं शिवभक्तः । अत एव सप्तवारविहितैः 'प्रासाद'मन्त्रसुपुरश्चरणैर्महेशं सन्तोष्य तस्मान्निजवंशजानामासप्तममविच्छिन्नपाण्डितीं वरत्वेन सञ्जग्राह । तस्य च नागाम्बिकायां नारायणपर्वतेशरामाख्यं सुतत्रयं सञ्जज्ञे । तत्राद्यो नारायणपण्डितो वेदपारगः, परिक्रमणचक्रवर्तीति ख्यातो ब्रह्मरथेन क्षितौ बहुशश्चचार । द्वितीयश्च पर्वतनाथसूरिः (कवेः पिता) अशेषागमपारदृश्वा षड्दर्शनीनिष्णातश्च । अयं हि वादेन जनार्दनाख्यपण्डितं जित्वा तस्य 'वादिकेसरि' बिरुदं स्वयं जग्राह । वैष्णवं (पण्डितं मतं वा) प्रच्याव्य मायावादिभयङ्कराख्यबिरुदेनापि लोके विख्यातः सञ्जज्ञे । तृतीयश्चापि रामाह्वयपण्डितः षट्छास्त्रपाण्डितीमण्डितो गङ्गाझरी-सदृशवाग्वैभवश्च । तेषु पर्वतनाथसूरेर्यल्लमाम्बायामहं (धर्मसुधीः) समुत्पन्न इति । लोचनगोचरीक्रियतां तस्येदं पद्यम् –

---

1. History of classical Sanskrit literature. P. 799
2. साहित्यरत्नाकरे प्रथमतरङ्गे 12–28 पद्यानि ।

तस्मात् पर्वतनाथसूरिजलधेः श्रीयल्लमाम्बाविधद् –
गङ्गासङ्गजुषो लसद्गुणमणेर्लब्धोदयश्चन्द्रवत् ।
सोऽहं धर्मसुधीर्गवां विलसितैः कर्तुं रसालङ्क्रिया-
संस्फूर्तिं समुदञ्चयेयमधुना साहित्यरत्नाकरम् ॥

(प्रथमे. श्लो. १८)

सक्षिप्तचरितम् —

धर्मसूरिरयं धर्मसुधीः धर्मभिट्ट (धर्मभट्ट) श्चेत्यप्याख्यायते । धर्मसिंह इत्यपि क्वचिदस्य नाम समुपलभ्यते । क्षत्रियकुलोचितमिति तत् समुपेक्ष्यमेव । स्वविद्यागुरुरनेन न कुत्राप्यनुस्मृत इति निखिलशास्त्रनिष्णातेभ्यः स्वपित्रादिभ्य एव सकला विद्या अधिगता इति सम्भाव्यते । स्वपूर्ववंश्यानां विद्योपदेशविधया शिष्यानु-गृहीतृत्वस्य वर्णितत्वात् । विशेषतश्च पित्रादिपाण्डित्यस्य वर्ण्यमानत्वाच्च । कवि-कुलवतंसोऽयं न केवलं षट्छास्त्रपाण्डितीमण्डितः, अपि तु चतुर्दशविद्यास्थानसिद्धान्त-रहस्यविज्ञानवांश्च । उक्तं हि तेनैव......'चतुर्दशविद्यास्थानसिद्धान्तरहस्य-विज्ञानवता श्रीधर्मसंख्यावता विरचिते श्रीमद्रघुपतिगुणमणिगणधामनि साहित्य-रत्नाकरनामन्यलङ्कारशास्त्रे रसनिरूपणं नाम दशमस्तरङ्गः' ॥ इति ।

अधीतशास्त्राणां प्रचारेणैव चारितार्थ्यमिति मत्वा तत्तच्छास्त्रग्रन्थानां व्याख्या विरच्यापि दिगन्तविश्रान्तयशाः सञ्जज्ञे । उक्तं च साहित्यरत्नाकरे प्रथमदशमयोः समाप्तौ --

व्याख्याविख्यातकीर्तेर्विवरणगुरुवाक्साङ्ख्यमुख्यागमानां
तस्यालङ्कारशास्त्रे (सार. १.३८) ॥....इति ।

प्रौ पाण्डितीमण्डितममुं प्रसन्नगम्भीरपदा वाक् वश्येवान्ववर्ततेति हेम्नः परमामोदः । तर्ककर्कशगिरः कथं सुधारसनिष्यन्दिन्या वाग्झर्याः प्रवृत्तिरित्याशङ्कां कविः समाधत्ते--

तर्के कर्कशतां गताऽपि नितरां वाग्वैखरी सत्कवेः
माधुर्यं प्रकटीकरोति कविताकालेषु किं वाऽद्भुतम् ।
पद्यास्त्यन्तकठोरतामुपगता ग्रीष्मे मयूखावलिः
किं नाविष्कुरुते नवामृतभरं भासांनिधेः प्रावृषि ॥

(नरकासुर. श्लो. १६)

एतादृशी सार्वपथीनपाण्डिती ललितमधुरकविता च प्राय एकत्र दुर्लभे एव ।

कविवर्या इमे नितान्तं रामभक्ताः । तद्भक्त्यतिशयश्च तदीयरचनासु सर्वत्राप्यनुभूयते । रचनाश्च प्रायः सर्वाः श्रीरामायैव समर्पिताः ।

वयसि च चरमे गोविन्दानन्दसरस्वतीपादेभ्यः चतुर्थाश्रमदीक्षां स्वीचक्रुः । तदनु च काश्यामुषित्वाऽनेन रत्नप्रभाख्या शाङ्करभाष्यव्याख्या विरचितेति तन्मङ्ग-लाचरणप्रस्तावे --

वन्दे चर्मकपालिकोपकरणैर्वैराग्यभाग्यात् परं ।
नास्तीति प्रदिशन्तमन्तविधुरं श्रीकाशिकेशं शिवम् ।।

इति श्रीकाशीविश्वनाथसंस्मरणतः सम्भाव्यते रत्नप्रभायां स्वनाम्नोऽख्या-पनात् निजदीक्षागुरुवर्यगोविन्दसरस्वतीसंस्मरणाच्च स्वगुरुनाम्नैव व्यवहृता रत्न-प्रभाकर्तृत्वेन प्रथां गताः । ब्रह्मामृतवर्षिण्याख्या ब्रह्मसूत्रगुरुवृत्तिश्चाप्येतत्कृतित्वेन प्रसिद्धा । उभयत्र च प्रत्यधिकरणं मङ्गलाचरणपद्ये श्रीराममेव परब्रह्मत्वेन ध्यात्वा तदधिकरणार्थो व्यञ्जित इति रामभक्तिप्राचुर्येण रामानन्दसरस्वती-त्याख्ययाऽपि कृतिद्वयकर्तृताऽस्य प्रथिता । परं ग्रन्थस्पतया न किमपि नाम समुपलभ्यते । स्वनामख्यापनस्य कर्तृताभिमानव्यञ्जकत्वेन तत् परिहृतं स्यादिति भाति । एवं शास्त्रार्थविचारजनितसत्त्वातिरेकबुद्धिपरिपक्वतावशात् निर्ममो निरहङ्कारश्च सन् ब्रह्मभूयाय चकल्पे ।

अथाऽस्य कृतयः —

१. साहित्यरत्नाकरः
२. बालभागवतकाव्यम्
३. पञ्चतन्त्रकाव्यम्
४. हंससन्देशकाव्यम् (प्राकृतम्)
५. कंसवधनाटकम्
६. नरकासुरविजयव्यायोगः
७. सूर्यशतकम्
८. कृष्णास्तुतिः
९. दत्तरत्नाकरः
१०. ब्रह्मामृतवर्षिणी (ब्रह्मसूत्रगुरुवृत्तिः)
११. भाष्यरत्नप्रभा
१२. पञ्चपादिकाविवरणाविव्याख्याः
१३. अलङ्कारप्रबन्धाः

कृतिपरिचयः —

तत्र साहित्यरत्नाकरपरिचयस्त्वग्रे करिष्यते ।

बालभागवतकाव्यम् —

काव्यमिदमनुपलब्धम् । श्रीकृष्णचरितात्मकमिति सम्भाव्यते । अत्रत्यं पद्यद्वयं नरकासुरविजयव्यायोगसाहित्यरत्नाकरयोः समुद्धृतम् । तदिदं पद्यद्वयम्-

विनिन्दिताः केचन पङ्कजन्मना
जडेन दोषोपहिता अपि स्वतः ।
ममोक्तयो विष्णुपदस्पृशो बुधैः
कला इव ग्राह्यतमाः कलानिधेः ॥
(नरकासुर०श्लो०१५)

निविश्य नीरन्ध्रनिकुञ्जमध्यमा –
नमी समीराः सहसा ससम्भ्रमाः ।
न शक्नुवन्तीह पुनर्विनिर्गमे
लताङ्गनालिङ्गनलालसा ध्रुवम् ॥
इति । (सा०र० ७.२४)

पञ्चतन्त्रकाव्यम् —

नेदं काव्यमुपलब्धरचनासु कुत्राप्यनुस्मर्यते । नाप्यद्ययावन्मुद्रितम् । किन्तु Auftrecht.C.C.I.No.२६८० इत्यतः सत्तामात्रं ज्ञायते ।

हंससन्देशकाव्यम् —

प्राकृतभाषोपनिबद्धं काव्यमेतदद्यावध्यनुपलब्धमेव । केवलमस्मात् काव्यात् साहित्यरत्नाकरे समुद्धृतमेकं पद्यं – 'जातं सीतानयनयुगलं' (सा.र.१०.१६) इत्येव बुद्धिपद्धतिमवतरति ।

यद्यपि मद्रपुरीप्राच्यलिखितपुस्त ण्डागारे अविज्ञातकर्तृकं हंससन्देशकाव्यमुपलभ्यते । तथापि भिन्नविषयत्वान्नैतत्कर्तृकमिति महोपाध्यायैरचण्टवेङ्कटसाङ्ख्यायनशर्ममहोदयैः निश्चितपूर्वमेव[1] ।

कंसवधनाटकम् —

एतदप्यनुपलब्धमेव । पद्यत्रयं चात्रस्थं साहित्यरत्नाकरे समुद्धृतम् –

१. 'वक्षोजाङ्गणचुम्बि' (सा.र.७.१४१) ।
२. 'आरूढः कुरथं' (सा.र.१०.३८) ।
३. 'रोषाद् दक्षिण' (सा.र.१०.४०) ।
इति ॥

---

1. 'भारती' मद्रपुर्यान्ध्रसाहित्यमासिकी १९३१ जूनमाससञ्चिका ।

नरकासुरविजयव्यायोगः —

अयं हि व्यायोगः 'नरकासुरध्वंस' इत्याख्ययापि प्रथितः। मुद्रितश्चाय-मान्ध्रलिप्यां द्विवारं (१८६४, १८८५ A.D) मद्रपुरी'वाविल्ल' मुद्रणालये। नागरलिप्यां च १९६१ क्रैस्टाब्दे उस्मानियाविश्वविद्यालयीयसंस्कृतपरिषदा मुद्राप्य प्रकाशितः। अनूदितश्चाप्ययमान्ध्रभाषायां श्रीकोक्कोण्डवेङ्कटरत्नकविवर्यैः। अस्मिन् हि व्यायोगे बालभागवतकाव्यादेकं पद्यं समुद्धृतम् —

[1]विनिन्दिताः केचन (नरका. प्रस्ता. १५)
अत्रत्यानि षट् पद्यानि यथातथं साहित्यरत्नाकरे पठितानि। यथा —

१. नमस्तमःकर्दम (नरका. श्लो. ७, सा. र. १. ३)।
२. तद्धाटीतीव्र (नरका. श्लो. २८, सा. र. ७. ८२, ९. ३)।
३. त्यक्तप्रभञ्जनाधम (नरका. श्लो. ७२, सा. र. ७. १२८)।
४. नीतक्षपः (नरका. श्लो. ५, सा. र. २. २७)।
५. शुम्भच्छुण्डाल(नरका. श्लो. ४८, सा. र. ५. २;७. ३६; ९. ५४)।
६. डाकिन्यः कौतुकिन्यः (नरका. श्लो. ८५,सा. र. १०. ३६)।

पद्यचतुष्टयं तु यथोचितं परिवृत्य पठितम्। यथा —

१. शौरेः कोदण्ड (नरका. श्लो. ५६, सा. र. ९. १४)।

पद्यमिदं 'शौरेः कोदण्डकाण्डात्'इति स्थाने 'रामस्योच्चण्डचापात्'इति परिवृत्य साहित्यरत्नाकरे पठितम्।

२. 'प्रक्षुभ्यच्छम्भु' (नरका. श्लो. ७६, सा. र. ९. ५०)।

इदमपि चतुर्थचरणान्ते 'क्षेममस्यच्छलोक्तैः' इत्यत्र 'मानवं दानवेन्द्रः' इति परिवृत्य पठितम्।

३. कुप्यत्कल्पान्तकाली (नरका. श्लो. ८५, सा. र. ९. २)।
पद्यमेतत् पूर्वार्धे समानमुभयत्र।

४. विख्यातेऽजनि (नरका. श्लो. १३, सा. र. १०. ९७)।

---

1. पद्यमिदं बालभागवतपरिचयप्रस्तावे समग्रतया पठितमिति दृश्यतां तत्रैव।

पद्यमिदं तृतीयचतुर्थचरणयोः समानमुभयत्र । अन्यान्यपि पादपादार्धसमाप्ति बहुशः समुपलभ्यन्ते ।

सूर्यशतकम्—

अनुपलब्धमेतत् । पद्यद्वयमत्रस्थं साहित्यरत्नाकरे समुद्धृतम् –

१. बिम्बं ध्वान्तव्यधा (सा. र. ६. १४) ।

२. या दासत्राणरक्ता (सा. र. ६. १५) ।

इमे च पद्ये सूर्यबिम्बतदश्ववर्णनपरे । तथा च शतकमिदं तत्तद्वर्णनाक्रमेषु मयूरकविरचितसूर्यशतकमनुकुर्यादिति मन्यामहे । विशेषतः शब्दालङ्कारसमलङ्कृतं चेति च ।

कृष्णास्तुतिः —

कृष्णानदीस्तुतिरूपाया अस्याः पद्यमेकं समुद्धृतम् —

१. कृष्णा मुष्णातु (सा. र. ६. २)

एषाप्यनुपलब्धैव ।

दत्तरत्नाकरः —

धर्मशास्त्रविषयकोऽयं ग्रन्थः स्यात् । उपलब्धरचनासु न कुत्राप्ययमनुस्मर्यते । नाप्यद्ययावदुपलब्धः । Dr. Huttzch महोदयकथनेनास्य सत्तामात्रं ज्ञायते ।

ब्रह्मामृतवर्षिणी —

सेयं ब्रह्मसूत्रगुरुवृत्तिरूपा । मुद्रिता च आन्ध्रलिप्यां नेल्लूरसरस्वतीनिलयमुद्रणालये १९०० क्रैस्टाब्दे अन्नवरंवेङ्कटराघवशर्मणा सम्पादिता[1] । तदनु च नागरलिप्यां पुण्यपत्तनस्थानन्दाश्रममुद्रणालये मुद्रिता ।

सेयं वृत्तिश्चतुर्थाश्रमस्वीकारात् पूर्वमेव रचितेति श्रीवेमूरनृसिंहशास्त्रिणां कथनम्[2] । आरम्भे रामध्यानरूपमङ्गलनिबन्धनेन श्रीरामायैव कृतिसमर्पणेन च

---

1. Catalogue of the Library of the India office vol II - Part - I Sanskrit Books 1938 London Page No. 513.

2. भारती मद्रपुर्यान्ध्रसाहित्यमासिकी १९३१ फरवरीसञ्चिका ।

व्याख्यात् रामभक्त्यतिशयो व्यज्यते । बहुत्र पङ्क्तिसाम्यं शैलीसाम्यं प्रत्यध्याय-प्रतिपादसङ्गतिकथनं पूर्वपक्षसिद्धान्तयोः फलनिरूपणं श्रीरामाय कृतिसमर्पणं च ब्रह्मामृतवर्षिणी भाष्यरत्नप्रभयोरेककर्तृकतां द्रढयन्ति ।

भाष्यरत्नप्रभा --

प्रचुरप्रचारा सेयं निर्णयसागरमुद्रणालये नैकवारं मुद्रिता । शाङ्करभाष्य-व्याख्यारूपा । रामानन्दसरस्वती – गोविन्दानन्दसरस्वतीत्याख्याद्वयेनास्याः कर्तृता प्रसिद्धा । विस्तरस्तु पूर्वत्र (संक्षिप्तचरिते) द्रष्टव्यः । सेयं कृतिः श्रीरामायैव समर्पिता –

वक्षस्यक्ष्णोश्च पार्श्वे करतलयुगले कौस्तुभाभां दयां च
सीतां कोदण्डदीक्षामभयकरयुतां वीक्ष्य, रामाङ्गसङ्गः ।
स्वस्याः क्व स्यादितीत्थं हृदि कृतमनना भाष्यरत्नप्रभेयं
स्वात्मानन्दैकलुब्धा रघुवरचरणाम्भोजयुग्मं प्रपन्ना ।।

अत्र च प्रत्यधिकरणं श्रीराममेव परब्रह्मत्वेन ध्यात्वा तदधिकरणार्थः संसूचितः । समन्वयसूत्रभाष्यव्याख्यायां च परमतप्रत्याख्यानपुरःसरं --

रामनाम्नि परे धाम्नि कृत्स्नाम्नायसमन्वयः ।
कार्यतात्पर्यबाधेन साधितः शुद्धबुद्धये ।।

इति रामनाम्नि परब्रह्मण्येव वेदवाक्यसमन्वयो दर्शितः । एवं श्रीराम-भक्त्यतिशयः प्रसक्तानुप्रसक्ता जनश्रुतिश्च भाष्यरत्नप्रभायाः श्रीधर्मसूरिकर्तृकतां द्रढयतः । विशेषस्तु वेमूरुनृसिंहशास्त्रिनिबन्धे[1] भारत्यां मुद्रिते द्रष्टव्यः ।

पञ्चपादिकाविवरणादिव्याख्याः —

नामशेषतां गता एताः सर्वा व्याख्याः । स्मृतास्तु स्वकृतित्वेन साहित्यरत्नाकरे --

धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातो यल्लमाम्बाकृतसुकृतफलं पर्वतेशस्य भाग्यम् ।

---

1. भारती मद्रपुरीतः प्रकाशिता आन्ध्रसाहित्यमासिकी १९३१ फरवरी सञ्चिका ।

व्याख्याविख्यातकीर्तेर्विवरणगुरुवाक्साङ्ख्यमुख्यागमानां
तस्यालङ्कारशास्त्रे विलसति दशमो रामवर्ण्ये तरङ्गः ॥

इति ।

अलङ्कारप्रबन्धाः —

साहित्यरत्नाकरात् पूर्वमेव कविनानेन कश्चनालङ्कारप्रबन्धो विरचित इति तदुक्तितो ज्ञायते ।

यथा —

काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतुः । (सा. र. ३. १५) इति ।

व्याख्यातं चात्र मन्दरकृद्भिः—"काव्यानां हंससन्देशादीनां अलङ्काराणामलङ्कार-प्रबन्धानां कृष्णास्तुतेः रविशतकस्य उन्नाटकानां कंसवधाद्युत्कृष्टनाटकानाम्" आदिशब्देन नरकध्वंसादिव्यायोगादीनां च प्रणेतुः निर्मातुः" इति ।

तथा च कोऽप्यलङ्कारप्रबन्धः प्रबन्धा वा साहित्यरत्नाकरात् पूर्वं विरचिता नामशेषतां गता इति सम्भाव्यते ।

धर्मसूरिकर्तृकं स्तोत्रद्वयमन्यत् समुपलभ्यते —

१. मङ्गलस्तोत्रम्[1] (चैत्यस्तुतिस्तोत्रम्) ।

२. पार्श्वजिनस्तोत्रम्[2] ।

स्तोत्रद्वयमिदं जैनकविधर्मसूरिकर्तृकमिति न साहित्यरत्नाकरकारकर्तृकम् ॥

साहित्यरत्नाकरः, तद्व्याख्याश्च —

---

1. मङ्गलस्तोत्रमिदं चतुर्विजयमुनिसम्पादिते 'निर्णयसागर'मुद्रिते (1928 A. D.) जैनस्तोत्रसमुच्चये समुपलभ्यते । तत्र मातापित्रादिकं न निर्दिष्टम् । किन्तु जैनपूर्वाचार्यत्वेन वर्णितम् ।

२. स्तोत्रमिदम् अयुतविजयमुनिसम्पादिते 'साराबाई मनिलाल नबाब – अहमदाबाद' इत्यनया प्रकाशिते (1932 A. D.) जैनस्तोत्रसन्दोहे उपलभ्यते । अत्र च कवेर्विषये न कोऽपि विशेषो दत्तः । जैनत्वे तु न सन्देहः—सं ।

अलङ्कारशास्त्रमिदं कारिकावृत्त्युदाहरणैस्त्रिधा विभक्तम्। अत्र चोदाहृत-पद्येषु सर्वत्र श्रीराममेवोपवर्ण्य नायकैक्यं सम्पादितम्। अत एव प्राचीनालङ्कारिक-ग्रन्थेषु नैयून्यमापाद्य स्वग्रन्थस्यातिशय उपवर्णितः कविना। यथा --

अलङ्क्रियाः पूर्वतरैः प्रणीताः
न योजिताः काश्चन नायकेन।
कैश्चित्तु कुक्षिम्भरिभिर्निबद्धाः
क्षोदीयसा काश्चन नायकेन॥

दिव्येनोत्तमनायकेन घटिता सेयं ममालङ्कृतिः
सद्वृत्ताकृतिना विदेहतनयावक्षोरुहस्थायिना।
तत्तादृग्दशकण्ठकीर्तिपयसो नैल्यावहश्रीजुषा
निस्त्रासेन महेन्द्रनीलमणिनोदारेण संशोभते॥

इति। (सा.र.१.३१, ३२)

वर्ण्यैक्यादत्र केवलमेकं पद्यं कालीदासीयं समुदाहृतम् (सा.र.२.३०) --

रावणावरजा तत्र राघवं मदनातुरा।
प्रतिपेदे निदाघार्ता व्यालीव मलयद्रुमम्॥
(रघु. १२.३२)

अन्यानि तु सर्वाणि स्वीयान्येव। ग्रन्थमिमं रघुकुलतिलकयशोघनसार-सुरभितत्वेन समुपवर्णयता कविवतंसेन स्वरामभक्त्यतिशयो व्यञ्जितः। ग्रन्थस्यास्य सङ्ग्रथनाय ग्रन्थकर्त्रा प्राचीननवीनालङ्कारिकग्रन्था नैके पर्यालोडिताः। उक्तं हि --

प्राचीनाभिनवप्रबन्धविहितग्रन्थानुसन्धायिना
सोऽयं साहसिकेन सम्प्रति मया नूत्नः प्रबन्धः कृतः।
कस्तुष्येदमुनाऽध्वना ह्यसुलभो बोद्धा च निर्मत्सरः
सर्वज्ञो गतमत्सरोऽस्ति हि रमारामः स सन्तुष्यतु॥
(सा.र.१०.९५)

अत्र च परिच्छेदा ग्रन्थनामानुगुण्येन तरङ्गत्वेन संज्ञिताः। ते च तरङ्गाः प्रतिपाद्यविषयमनुसृत्य गन्थारम्भसमर्थनाभिधा-लक्षणा-व्यञ्जना-गुण--शब्दा-लङ्कार-अर्थालङ्कार-दोष-ध्वनि-रसा इत्याख्याता दश। तत्र-

१. ग्रन्थारम्भसमर्थनाख्ये प्रथमे --

काव्यमीमांसाया अध्ययनविधिमूलकत्वसमर्थनं ग्रन्थकर्तुः पूर्वमीमांसायामादरातिशयमभिव्यनक्ति । सर्वथा तदिदं समर्थनं प्रशस्यतमम् ।

२. अभिधाख्ये द्वितीये --

शक्तिवादः परमतप्रत्याख्यानपुरःसरं समीचीनतया निरूपितः ।

३. लक्षणाख्ये तृतीये च --

आलङ्कारिकानभिमतां जहदजहल्लक्षणां समर्थयता स्वस्योत्तरमीमांसाभिमानो व्यञ्जितः ।

४. चतुर्थे च व्यञ्जनाख्ये --

व्यञ्जना सुष्ठु संलक्ष्य समुदाहृता ।

५. पञ्चमे गुणतरङ्गे --

तत्तन्मतानुसारेण गुणान् सङ्ख्याय, गुणान्तराण्युक्तगुणेष्वन्तर्भाव्य --

ओजःप्रसादमाधुर्याण्युक्तिकान्तिसुशब्दताः ।
गाम्भीर्यं भाविकं रीतिमूचुः केचिद् गुणान्नव ॥

इति नवैव गुणाः संलक्ष्य समुदाहृताः ।

अथ --

एवं सूक्ष्मधियां मार्गमाश्रित्योदाहृतं मया ।
माधुर्यौजःप्रसादास्तु सौशब्द्येन समन्विताः ॥

गुणाश्चत्वार एवैते मम सूक्ष्मतरेक्षितुः ।
त्रय एवेति वाऽत्यन्तं मनसे रोचते मतम् ॥

इति प्रकरणमुपसंहृतम् ॥

६. षष्ठे च --

विविधाः शब्दालङ्काराश्चित्रबन्धविशेषाश्च पूर्वप्रबन्धानुदाहृताः समुदाहृताः ।

अलङ्कारशास्त्रमिदं कारिकावृत्त्युदाहरणैस्त्रिधा विभक्तम् । अत्र चोदाहृत-पद्येषु सर्वत्र श्रीराममेवोपवर्ण्य नायकैक्यं सम्पादितम् । अत एव प्राचीनालङ्कारिक-ग्रन्थेषु न्यूनत्वमापाद्य स्वग्रन्थस्यातिशय उपवर्णितः कविना । यथा —

अलङ्क्रियाः पूर्वतरैः प्रणीताः
न योजिताः काश्चन नायकेन ।
कैश्चित्तु कुक्षिम्भरिभिर्निबद्धाः
क्षोदीयसा काश्चन नायकेन ॥

दिव्येनोत्तमनायकेन घटिता सेयं ममालङ्कृतिः
सद्वृत्ताकृतिना विदेहतनयावक्षोरुहस्थायिना ।
तत्तादृग्दशकण्ठकीर्तिपयसो नैल्यावहश्रीजुषा
निस्त्रासेन महेन्द्रनीलमणिनोदारेण संशोभते ॥

इति । (सा.र.१.३१, ३२)

वर्ण्यैक्यादत्र केवलमेकं पद्यं कालीदासीयं समुदाहृतम् (सा.र.२.३०) —

रावणावरजा तत्र राघवं मदनातुरा ।
प्रतिपेदे निदाघार्ता व्यालीव मलयद्रुमम् ॥
(रघु. १२.३२)

अन्यानि तु सर्वाणि स्वीयान्येव । ग्रन्थमिमं रघुकुलतिलकयशोघनसार-सुरभितत्वेन समुपवर्णयता कविवतंसेन स्वरामभक्त्यतिशयो व्यञ्जितः । ग्रन्थस्यास्य सङ्ग्रथनाय ग्रन्थकर्त्रा प्राचीननवीनालङ्कारिकग्रन्था नैके पर्यालोडिताः । उक्तं हि —

प्राचीनाभिनवप्रबन्धविहितग्रन्थानुसन्धायिना
सोऽयं साहसिकेन सम्प्रति मया नूत्नः प्रबन्धः कृतः ।
कस्तुष्येदमुनाऽध्वना ह्यसुलभो बोद्धा च निर्मत्सरः
सर्वज्ञो गतमत्सरोऽस्ति हि रमारामः स सन्तुष्यतु ॥
(सा.र.१०.९५)

अत्र च परिच्छेदा ग्रन्थनामानुगुण्येन तरङ्गत्वेन संज्ञिताः । ते च तरङ्गाः प्रतिपाद्यविषयमनुसृत्य गन्थारम्भसमर्थनाभिधा-लक्षणा-व्यञ्जना-गुण-शब्दा-लङ्कार-अर्थालङ्कार-दोष-ध्वनि-रसा इत्याख्याता दश । तत्र—

१. ग्रन्थारम्भसमर्थनाख्ये प्रथमे --

काव्यमीमांसाया अध्ययनविधिमूलकत्वसमर्थनं ग्रन्थकर्तुः पूर्वमीमांसायामादरातिशयमभिव्यनक्ति । सर्वथा तदिदं समर्थनं प्रशस्यतमम् ।

२. अभिधाख्ये द्वितीये --

शक्तिवादः परमतप्रत्याख्यानपुरःसरं समीचीनतया निरूपितः ।

३. लक्षणाख्ये तृतीये च --

आलङ्कारिकानभिमतां जहदजहल्लक्षणां समर्थयता स्वस्योत्तरमीमांसाभिमानो व्यञ्जितः ।

४. चतुर्थे च व्यञ्जनाख्ये --

व्यञ्जना सुष्ठु संलक्ष्य समुदाहृता ।

५. पञ्चमे गुणतरङ्गे --

तत्तन्मतानुसारेण गुणान् सङ्ख्याय, गुणान्तराण्युक्तगुणेष्वन्तर्भाव्य --

ओजःप्रसादमाधुर्यण्युक्तिकान्तिसुशब्दताः ।
गाम्भीर्यं भाविकं रीतिमूचुः केचिद् गुणान्नव ॥

इति नवैव गुणाः संलक्ष्य समुदाहृताः ।

अथ --

एवं सूक्ष्मधियां मार्गमाश्रित्योदाहृतं मया ।
माधुर्यौजःप्रसादास्तु सौशब्द्येन समन्विताः ॥

गुणाश्चत्वार एवैते मम सूक्ष्मतरेक्षितुः ।
त्रय एवेति वाऽत्यन्तं मनसे रोचते मतम् ॥

इति प्रकरणमुपसंहृतम् ॥

६. षष्ठे च --

विविधाः शब्दालङ्काराश्चित्रबन्धविशेषाश्च पूर्वप्रबन्धानुदाहृताः समुदाहृताः ।

७. सप्तमे तु —

षड्भी रसवदाद्यलङ्कारैः सह अष्टषष्टिरर्थालङ्काराः सर्वस्वकारैकावलीकारादिमतेन संलक्ष्य समुदाहृताः । अलङ्कारपौर्वापर्यसङ्गतिनिरूपणं पूर्वोत्तरमीमांसाशास्त्रीयपद्धतिमनुस्मारयति ।

८. अष्टमे च दोषाख्ये —

सर्वपददोषलक्ष्यत्वेनैकमेव पद्यं समुदाहृत्य तस्यैव निर्दुष्टत्वेन पुनर्ग्रथनं ग्रन्थकर्तुरवधाननैपुणीं सूचयति । तदिदं पद्यम् —

पाथोवाहपदस्त्रिसप्तदशदोर्गल्लश्च वै गुह्यके –
शादीनादिहवे कजारिपितृजिज्जित्योर्जितो दैवतान् ।
युद्धे क्लेशगतोऽम्बिकारमणलब्धोर्वर्थ्यवद्रावणः
कोपाच्छोणितलोचनो रघुपतेर्धाम्ना विदग्धोऽभवत् ॥
(सा.र. ८.१)

तस्यैव निर्दुष्टत्वेन यथा —

पाथोराशिनिकेतनो द्विदशदोर्दण्डो धनेशादिकान्
सङ्ग्रामाङ्गणसीम्नि शक्रविजयी जित्वोर्जितो निर्जरान् ।
युद्धेऽहङ्कृतिमान् मृगाङ्कमकुटाल्लब्धोदयो रावणः
कोपाद् रक्तविलोचनो रघुपतेर्दग्धोऽभवत्तेजसा ॥
(सा.र. ८.२)

उभयत्र पदार्थस्य क्रमिकत्वं विशेषः ।

९. नवमे पुनः —

ध्वनिः सोपपत्तिकं व्यवस्थाप्य सावान्तरभेदः समुदाहृतः । रीतिशय्यापाकादयश्च ।

१०. दशमे रसतरङ्गे —

रससद्भावः सपूर्वपक्षसिद्धान्तं समर्थितः । रसोत्पत्त्याविवादाश्च सोपपत्ति

निराकृताः । शान्तस्य रसत्वं समर्थ्य वत्सलस्नेहभक्तीनां रसत्वं निराकृतम् । शृङ्गारो विस्तरेण समुदाहृतः । अन्ये तु यथोचितं संलक्ष्योदाहृताः । सात्विक-व्यभिचारिभावाः शृङ्गारचेष्टाः रसाभासादयश्चेत्यलं बहुना ।

ग्रन्थेऽस्मिन् नाटकवर्जं सर्वे विषयाः सङ्गृहीताः । तथा च ग्रन्थस्यास्याध्ययनेन न केवलमलङ्कारशास्त्रपाण्डित्यमेव, अपि तु शास्त्रान्तरेष्वपि यथोचितः परिचयः सञ्चितः स्यादिति नात्र संशीतिलवोऽपि ।

अथास्य व्याख्याः --

१) नौकाख्या चर्लवेङ्कटसूरिकृता
२) मन्दराख्या मल्लाबिलक्ष्मणसूरिकृता
३) नौकाख्या मधुसूदनमिश्रशर्मविरचिता
४) अलङ्कारसुधाकराख्या महामहोपाध्यायकृष्णमिश्रविरचिता चेति ।

आसु --

मल्लादि लक्ष्मणसूरिविरचितमन्दरसमेतः साहित्यरत्नाकरः मद्रपुरीसरस्वतीनिलयमुद्रणालये १८७१ क्रैष्टाब्दे, नेल्लूरुसरस्वतीनिलये च १८८५ क्रैष्टाब्दे मुद्रितो द्विवारमान्ध्रलिप्याम् । नागरलिप्यां च मधुसूदनमिश्रशर्मविरचितनौकायुतः १९०१ क्रैष्टाब्दे 'बमरा' नगरस्थ'सुबल' मुद्रणालये मुद्रितः । चर्लवेङ्कटसूरिकृतनौका त्वधुनैव सूर्यालोकमधिजिगमिषति । अलङ्कारसुधाकरस्त्वपूर्ण एवेति नाद्ययावन्मुद्रितः ।

व्याख्यातृपरिचयः --

१) चर्लवेङ्कटसूरिः --

नौकाख्यव्याख्यारचयिताऽयं श्रीसूरमाम्बालक्ष्मणपण्डितयोः सूनुः ब्रह्मान्तर्वाणिपौत्रः नैध्रुवकाश्यपसगोत्रः रामानुजसम्प्रदायवैष्णवः[1] । पश्चिमगोदावरीमण्डलान्तर्गतकाकरपर्त्यग्रहारवास्तव्यात् श्रीअणिवेल्लवेङ्कटशास्त्रिणः सकला विद्या अधिजगाम । अयं हि १७४५ क्रैष्टाब्ददेशीयः । अस्य कृत्यन्तरं वेङ्कटा-

---

1. नौकारम्भपद्यानि श्री. एम् कृष्णमाचार्य संस्कृतसाहित्यचरितं च । (सा.र.पू. १२)

द्रीयमिति । यद्यं वैष्णवोऽपि चन्द्रशेखरं मङ्गलाचरणे स्तौति, तदस्य परिपक्व-बुद्धितां सूचयति ।

यथा ---

चूडालमिन्दुकलया कलयामि यामि
यामिन्यधीशनयनं जयिनं पुरां च ।
मन्दाकिनीचटुलतुङ्गतरङ्गसङ्ग -
त्वङ्गज्जटालमनिशं शरणं गिरीशम् ॥ (सा.र.पृ. २)

२) मल्लादिलक्ष्मणसूरिः ---

पण्डितोऽयं 'काकिनाड'वास्तव्यः । एकोनविंशशताब्दान्तिमभागे विबङ्गत इति श्रूयते । अस्य कृतयः ---

१) साहित्यरत्नाकरव्याख्या मन्दराख्या
२) काव्यप्रकाशव्याख्या बुधमनोरञ्जनी
३) चम्पूभारतव्याख्या

प्रायः सर्वा अप्यस्य रचना प्रकाशिताः ।

अनर्घराघवव्याख्याता लक्ष्मणसूरिस्तु[1]तञ्जापुरनिवासी भिन्न एव ।

३) मधुसूदनमिश्रशर्मा ---

अस्य व्याख्यापि नौकाख्यैव । अयं हि उत्कलदेशीयबलभद्रपुरवास्तव्यः । बामण्डा (बंमरा) धिपतेरास्थानसदस्यः । सेयं नौका स्वेनैव सुढलमुद्रणालये (बंमरा) मुद्रापयित्वा १९०१ क्रैस्टाब्दे प्रकाशिता वीरश्रीसच्चिदानन्दयुवराजस्यानुकूल्येनेति तद्व्याख्यापूर्वरङ्गतोऽवगम्यते । अस्य च -

१) मायाशबरीविलासः
२) हनुमत्सन्देशः
३) तारावली

इति कृतित्रयमस्तीति तदुक्तित एव जानीमहे । सा चेयमुक्तिः -

---

1. E. V. V राघवाचार्याणां 'साहित्यरत्नाकरमु-नौकामन्दरमुलु' इति निबन्धः काकिनाडस्थान्ध्रसाहित्यपरिषत्पत्रिकायां (1929) मुद्रितः ।

वीरश्रीबलभद्रपूर्वकपुरे यो जातु विश्राम्यति
बामण्डाधिपतेः सदस्यपदवी यस्मिंश्च विश्राम्यति ।
श्रीमायाशबरीविलासहनुमत्सन्देशताराभिध–
ग्रन्थानां मधुसूदनो रचयिताऽहं सोऽपि सोऽहं द्विजः ॥

(व्याख्यापूर्वरङ्गे)

अयं १९२९ क्रैष्टाब्दे जगन्नाथक्षेत्रेऽवसदिति श्रूयते ।

४) महामहोपाध्यायकृष्णमिश्रः —

अयं हि पण्डितः उत्कलदेशीयः कौत्सगोत्रः रामदीक्षितपौत्रः परमानन्दपुत्रः । उक्तं च स्वव्याख्यारम्भे –

नानाशास्त्रविशारदो द्विजवरो यो रामनामा महान्
यज्वा कौत्सकुलावलीहिमकरः प्रादुर्बभूवोत्कले ।
कृष्णस्तत्तनयात्मजः कविसुधीः साहित्यरत्नाकरा –
लङ्कारस्य सुधाकराख्यममलं व्याख्यानमाख्यात्यसौ ॥
इति ।

प्रथमतरङ्गान्ते च –

इति श्रीकौत्सकुलकैरवशरन्निशाकरन्यायवैशेषिकशेषभाष्याबिशास्त्राकूपारा–बिपारङ्गतसाहित्यसङ्गीतज्योतिःप्राकृतच्छन्दोनिगमवित्सर्वङ्कषमहामहोपाध्यायकवि–कोविदकृष्णमिश्रविरचितायां साहित्यरत्नाकरटीकायां ग्रन्थारम्भसमर्थनप्रथमतरङ्ग–विवरणप्रथमा कौमुदी इति तदुषिततः सर्वतोमुखपाण्डिती सुव्यक्ता । व्याख्यापरि–च्छेदाश्च कौमुदीनाम्ना समाख्याता इति च स्पष्टम् । व्याख्यातुरस्य समयस्तु नैव ज्ञायते ।

व्याख्येयं पञ्चमावधि पूर्णतया षष्ठसप्तमयोश्च स्खालित्येन समुपलभ्यत[1] इत्यपूर्णेव, नाद्ययावन्मुद्रिता च ।

---

1. लिखितप्रतिः मद्रपुरीप्राच्यलिखितपुस्तकभाण्डागारे सुरक्षिता वर्तत इति "T. C. G. O. M. L. Madrās. Vol-IV-Part-I Skt. B. (1928) No. R. 3361" इत्येतदवलोकनेन ज्ञायते ।

– सं.

उपसंहारः –

एवं हि पण्डितमण्डलमण्डनायमानो धर्मसुधीः काव्यालङ्कारनाटकादिसाहित्य-प्रक्रियाभिरुत्तरमीमांसादिदर्शनव्याख्याभिश्च दिगन्तविश्रान्तविख्यातिमुपेत्य विद्या-प्रपञ्चे चिरस्मरणीयतामुपगतः सन् लालसते ।

परमिदं विषादस्थानं यदेतादृशपाण्डितीविलसितस्य कविवतंसस्य त्रिचतुरा एव रचनाः सूपलभ्यन्त इति ।

निवेदनम् –

साहित्यरत्नाकरव्याख्याचतुष्टये मधुसूदनमिश्रविरचितनौका नातीव प्रीतिकरी विदुषाम् । अलङ्कारसुधाकरव्याख्या त्वपूर्णैव । चर्लवेङ्कटसूरिमल्लादि लक्ष्मणसूरिविरचितौ नौकामन्दरौ च विद्वन्मनोमोदं विदधाते । तयोश्चैकत्र संक्षिप्ता विषया अपरत्र विवृता इति साहचर्यस्य शोभाहेतुतां विभाव्य साहित्यरत्नाकरोऽयं नौकामन्दराभ्यामुभाभ्यां समलङ्कृत्य पाठान्तरविशेषांशटिप्पणैश्च संयोज्य परिष्कृतः । टिप्पणमुपनिबध्नता मया मूले व्याख्ययोश्च दुर्बोधविषयाः स्पष्टप्रति-पत्त्यर्थं व्याख्याताः । अनुदिनमभिवृद्धमालङ्कारिकशास्त्रमनुसृत्य सूक्ष्मेक्षिकया केचन आलङ्कारिकविषया विवेचिताः । अतश्च पुरोभागितामनुद्भाव्य विद्वद्भा-वुकैरनुग्राह्योऽयं जनः ।

परम्परागतसंस्कृतपाठशालानुसन्धानच्छात्रवृत्तियोजनामनुसृत्य केन्द्रशासनिन-युक्तेन मया अल्पीयस्येव समये वत्सरद्वयात्मके महान् कार्यभारोऽयमतिवाहितः । यदि च क्वचन मानवसहजभ्रमप्रमादादिवशात् स्खालित्यानि स्युः तत् क्षन्तव्योऽय जन इति सहृदयान् विद्वदवतंसान् सम्प्रार्थये ।

परिष्करणार्थमुपात्ता ग्रन्थाः –

१) अत्र ( उस्मानियाविश्वविद्यालयीयसंस्कृतपरिषत् )त्यः Acc. No. 695 क्रमसङ्ख्यातः द्वितीयषष्ठसप्तमदशमतरङ्गमात्रात्मकोऽपूर्णः 'क' संज्ञितः ।

२) भाण्डारकरप्राच्यसंशोधनसंस्थातो लब्धः (308) क्रमसङ्ख्यातः प्रायो नातीव शुद्धः पूर्णः – 'ख' संज्ञितः ॥

३) मद्रपुरी–'अड्यार' प्राच्यलिखितपुस्तकभाण्डागारतः प्राप्तः (D. 29-74-5) क्रमसङ्ख्यातः नौका (चर्ल वेङ्कटसूरि) व्याख्यामात्ररूपः ।

४) मन्दरव्याख्योपेतः मद्रपुरीसरस्वतीनिलये १८७१ क्रैष्टाब्दे मुद्रित आन्ध्रलिप्याम् ।

५) मधुसूदनमिश्रविरचितनौकाव्याख्योपेतः 'सुढल'मुद्रणालये १९०१ क्रैष्टाब्दे नागरलिप्यां मुद्रितः धन्यवादार्हेभ्यः श्री E V.V. राघवाचार्यमहोदयेभ्योऽधिगतः ।

६) प्रथमतरङ्गे नौकायां कश्चिद् भागो लुप्तः आसीत् । अडयारहस्तलिखितसंग्रहालयाधिपतिभिः कृपया प्रपूरित इति तेऽपि धन्यवादार्हाः ।

सर्वविधसाहाय्यं विधाय प्रोत्साहितवद्भ्यः संस्कृतपरिषत्सम्बन्धिभ्यः सर्वेभ्यो मान्येभ्यो धन्यवादाः समर्प्यन्ते ।

संस्कृताभिवृद्धये नितान्तं प्रयतमानं भारतशासनं सर्वथा प्रशस्यमभिनन्दनीयं च सर्वैः संस्कृतबन्धुभिः । अथ च– ईदृशानार्घकार्येषु साहाय्यमितोऽधिकं वितीर्य संस्कृतप्रणयिनः प्रोत्साहयेदिति समाशास्यते –

संस्कृतपरिषत्<br>
उस्मानियाविश्वविद्यालयः<br>
हैदराबाद (भाग्यनगरम्)<br>
दिनाङ्कः ५.७.१९६६

विदुषामाश्रवः–<br>
के. राजन्नशास्त्री<br>
आन्ध्र प्रदेशीय 'करीमनगर'<br>
मण्डलान्तर्गत'धर्मपुरी' वास्तव्यः

—

# साहित्यरत्नाकरस्थविषयानुक्रमणिका

## प्रथमो भागः

— ० —

॥ श्रीः ॥

श्रीधर्मसूरिप्रणीतः

# साहित्यरत्नाकरः

( नौका-मन्दर'इति व्याख्याद्वयसंवलितः )

## प्रथमस्तरङ्गः – ग्रन्थारम्भसमर्थनम्

१. मङ्गलाचरणम् —

आलिङ्ग्य गाढमुदरं पितुरर्धजाने-
रुत्सङ्गवर्त्यवतु बालगजाननो नः[१] ।
यत्कुम्भयोर्गिरिसुताकुचपार्श्वभाजोः
स्तन्यं पिपासति गुहस्त्रिभिराननाब्जैः ॥१॥

---

नौका

[२]अथ तत्रभवान् धर्मभट्टाख्यो महाकविः –' मोक्षोपयोगिनो रामवासुदेवादयो मताः' 'रामं मोक्षाय चिन्तयेत्' इत्यादिविधेः श्रीराममीमांसाया मोक्षसाधनतां श्रवणविधेरिव शारीरिकमीमांसायाः प्रतीतत्वाद् अलङ्कारशास्त्रप्रणयनापदेशेन श्रीरामचन्द्रगुणवर्णनमेव कर्तुकामः प्रारिप्सितस्याविघ्नपरिसमाप्तये प्रचयगमनाय च 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते' (१.३.२ पा०सूत्रस्थमहाभाष्य०) इत्यादिभगवद्भाष्यकृद्भाषिताद्, 'आशीर्नमस्क्रिया वस्तुनिर्देशोऽपि वापि तन्मुखम्' (का.द. १.१४)

---

मन्दरः

कल्याणं कलयन्तु कल्यकमलप्रान्तोत्पतद्भ्रमर-
प्रायाः केऽपि समस्तसम्पदयनप्रत्यग्रकल्पद्रुमाः ।
काम्याः पद्मभवादिभिः सकुतुकाः कालुष्यविध्वंसने
कारुण्यामृतवर्षकालजलदाः कल्याः कटाक्षाः श्रियः ॥१॥

---

१. वः –ख. २. नौकाप्रारम्भे चेमे श्लोकाः समुपलभ्यन्ते-

श्रीमन्नैध्रुवकाश्यपान्वयभवः सर्वस्य मोदङ्करः
श्रीमद्वेङ्कटदेशिकस्य विदुषामग्रेसरस्यात्मजः ।
ध्यात्वा नौपुरिवेङ्कटावनिधरस्येशस्य युग्मं पदं
श्रीमद्भागवतान् प्रणम्य शिरसा रामानुजो वैष्णवः ॥१॥

**नौका**

इत्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वप्रतिपादकाचार्यदण्डिवचनाच्च शिष्टाचारपरम्परापरिप्राप्तमङ्गलकर्तव्यतामावश्यकीं कुर्वाणः 'सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठतः' इत्यादिवचनप्रामाण्यात् प्रारिप्सितपरिपन्थिप्रत्यूहप्रशमनपटुतरं गणपतिप्रार्थनारूपं मङ्गलमादावन्तेवास्यनुग्रहार्थं श्लोकतो निबध्नाति —आलिङ्ग्येति । नन्वत्र —

देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥(छं.शा. बृहलायुधटीका)

---

**मन्दरः**

मल्लादिवंशे महिते मनीषी
　　मान्यो मनोज्ञोऽजनि लक्ष्मणोऽसौ ।
साहित्यरत्नाकरतत्त्वदोग्ध्रीं
　　तां मन्दराख्यां विवृतिं विधत्ते ॥२॥

---

शार्वर्यब्दे कृष्णपक्षे त्रयोदश्यां शुभावर(ह)म् ।
प्रक्रमे लिखितुं नौकाव्याख्यानं सादरं भृशम् ॥ २ ॥

चूडालमिन्दुकलया कलयामि यामि
　　यामिन्यधीशनयनं जयिनं पुरां च ।
मन्दाकिनीचटुलतुङ्गतरङ्गसङ्ग-
　　त्वङ्गज्जटालमनिशं शरणं गिरीशम् ॥३॥

श्रीचर्लान्वयलक्ष्मणाख्यविदुषः श्रीसूरमाम्बापते-
　　जातः सर्वबुधेन्द्रमान्यमहिमा श्रीवेङ्कटार्याद् गुरोः ।
लब्धाशेषकलाविशेषविभवः **श्रीवेङ्कटाख्यो** बुधः
　　सन्तुष्ट्यै विवृणोम्यहं सुमनसां **साहित्यरत्नाकरम्** ॥४॥

आस्माकीनजनोऽयमित्यतिकृपां विन्यस्य नित्यं मयि
　　व्यालम्ब्यैतदि[म्व्यैवमि]मां मया विरचितां **नौकाभिधां** व्याकृतिम् ।
सौजन्यामृतसिन्धवः सहृदयाः सर्वे गुणग्राहिणो
　　निर्व्याजं विहरन्तु भङ्गभरिते **साहित्यरत्नाकरे** ॥५॥

लोकोत्तारकरामनामघटितोदारप्रबन्धोत्तमं
　　कुर्वन् कृत्यरतिं स्वकीयकवितामत्युज्ज्वलां लम्भयन् ।
धन्यो **धर्मसुधीवरः** सुमनसामग्रेसरस्तद्वचो-
　　व्याख्यानैककृतिः कृती यदि तदा किं नो भवेयं त्वहम् ॥६॥

Triennial Catalogue of Manuscripts G.O.M.L. Madras Vol. 1 Part-1 Skt. B. 1928. No. 444.

नौका

'वर्णं गणं च काव्यस्य मुखे कुर्यात् सुशोभनम् ॥'

इति वचनात् भद्रवर्णभद्रगणानामेव प्रयोक्तव्यता प्रतीयते। प्रकृते तु 'आ'कारस्य ईषत्परितापाद्यर्थकत्वेन लकारस्य च 'रो दाहं 'व्यसनं लकौ' इति वचनात् [1]आपत्प्रदत्वेन वर्णशुद्धिर्नास्ति तथा – 'व्योम शून्यं वितनुते द्यौरन्तलघुश्च क्षयम्' इति वचनात् तगणस्य व्योमदेवताकस्य क्षयकृत्त्वेन [2]गणशुद्धिरपि नास्ति इति कथमिदं पद्यमादौ कविः प्रायुङ्क्त इति चेत्, सत्यम्। तथापि आकारस्य विधुसन्तोषादिरूपदेवताभद्रादिवाचकत्वेन 'लः पुंसि शक्रे, ला स्त्री स्यात्' इति लकारस्यापि देवतावाचकत्वेन तत्सामर्थ्यादेव आकारलकारयोरदुष्टता अन्यथा तन्महत्त्वं न स्यात्। उक्तं हि भगवतैव 'देवताद्यर्थकानामदुष्टता' इति। तथा तगणस्यापि चन्द्रदैवत्यभगणसान्निध्याददुष्टत्वम्। तथा चोक्तं चमत्कारचन्द्रिकादौ —

---

मन्दरः

दुर्व्याख्याविषदूषितां भगवतीं श्रीधर्मसूरेर्गिरं
भावालङ्कृतिसङ्गतिप्रकटनव्यावृत्तकौतूहलाम्।
दर्शं दर्शमचेतसां सुमनसां सम्प्रीतये सादरं
व्याख्यां मन्दरसंज्ञिकां वितनुते सल्लक्षणां लक्ष्मणः ॥३॥

धर्माभिख्यकवेर्गिरां विवरणे कोऽन्यः कृती गौतमाच्-
छेषाहेर्हयवक्त्रतोऽम्बुजभवाद् वाचस्पतेर्वायुजात्।
इत्येवं प्रतिभाति मे तदपि तद्व्याकर्तृता विश्रुता
जाता विश्वपतिप्रसादमहिमप्रोद्यद्वचोवैभवात् ॥४॥

साहित्यरत्नाकरमन्थनोद्यत्-
काङ्क्षायुतानां विबुधव्रजानाम्।
सम्प्रीणनायैव स लक्ष्मणाख्यः
प्रस्थोज्ज्वलं मन्दरमातनोति ॥५॥

---

१. आधाप्रदत्वे च-मातृका। २. गुणशुद्धि॰-मातृका।

**नौका**

नित्यं भगणसान्निध्यात् सर्वाभीष्टफलप्रदम् (दः) ।
कर्तुः कारयितुश्चैव तगणो व्योमदैवतः ॥

इति (भद्र)कत्वमल्य(न्त्य)लघुकस्तगणो व्योमदैवतः । 'तगणः सर्वसौभाग्य-दायकः सर्वदा [1]भवेत्' इति । तस्मात् वर्णगणादिशुद्धिरस्त्येव । तर्हि दोषता(दुष्टता)ख्यापकवचनानां का गतिरिति चेत् स्वयमेव विभावय । केवलं[2] गुणमत्र ब्रूमः । वस्तुतस्तु 'आलिङ्गय' इत्यस्याव्ययत्वेन शुभावहत्वम् । अत एव अन्वर्थसंज्ञया शुभावहत्वमित्येव मुरारिरपि 'निष्प्रत्यूहमुपास्महे' (अनर्घ. १.१) इत्यव्ययमादौ प्रायुङ्क्तेति सन्तोष्टव्यम् इत्यलं पल्लवितेन ।

श्लोके 'बालगजाननोऽवतु' इति क्रियाकारकसम्बन्धः । गजाननः कीदृशः इत्यपेक्षायां तं विशिनष्टि—पितुरर्धेति । पितुर्जनकस्य । अर्धं [3]जाया यस्यासावर्धजानिः अर्धनारीश्वरः तस्य । 'जायाया निङ्' (पा. ५.४.१३४) इति समासान्तो निङादेशः । उदरं कुक्षिं गाढं यथा तथा आलिङ्गय आश्लिष्य । उत्सङ्गे अर्थात् पितुरेव ऊरौ वर्तत इति उत्सङ्ग[4]वर्ती अङ्कनिषण्ण इत्यर्थः । एवं

---

**मन्दरः**

साहित्यरत्नाकरतत्त्वबोधे
　　नालं हि नौकेति विरेमुरेके ।
केचिद् विमोहान् मृगतृष्णिकायां
　　वातायुवत्तत्र मुधा भ्रमन्ति ॥६॥

साहित्यरत्नाकरमप्रमेयं मथा मथित्वा मम मन्दरेण ।
गृह्णन्तु सर्वे विबुधा यथेच्छं गुणादिरत्नानि रसामृतं च ॥७॥

आद्यत्वबुद्धिं परिहृत्य नौका-
　　मेतां च टीकां कलयन्तु कल्याः ।
लोकः करेणोरवलोककाले
　　कर्णादिवत् पश्यति दन्तयुग्मम् ॥८॥

---

१. भादितो-मातृका । २. केवलं गणमात्रं-मातृका । ३. गिरिजायाः-मा. । ४. वर्ति—मा. ।

**नौका**

सति चमत्कारमाह — यदिति। यत्कुम्भयोः यस्य गजाननस्य कुम्भयोः गिरिसुताकुचपार्श्वभाजोः पार्वतीकुचपार्श्ववर्तिनोः सतोः। गुहः षडाननः। 'सेनानीरग्निभूर्गुहः' इत्यमरः (१.१.३९)। त्रिभिराननाब्जैः। अत्र [1]आननानि अब्जानीवेति पूर्व(पदार्थ)प्रधानोपमितसमासः। न त्वाननान्येव अब्जानीति रूपकसमासः। तथा सत्यब्जानां प्राधान्येन तेषां स्तन्यपानासम्भवेन 'पिपासति' इत्यसङ्गत्यापत्तेः। तथा च अब्जसदृशैराननैरित्यर्थः। स्तन्यं स्तनसम्भवं (पयः) पिपासति, पातुमिच्छतीत्यर्थः। पिबतेः सन्। 'सन्यङोः' (पा. ६.१.९) इति द्वित्वम्। 'सन्यतः' (पा. ७.४.७९) इत्यभ्यासस्येत्त्वम्। अत्र उत्तरवाक्यस्थयच्छब्दानुरोधात् पूर्ववाक्ये 'स' इति तच्छब्दो नाध्याहर्तव्यः, सामर्थ्यलभ्यत्वात्। तदुक्तं काव्यप्रकाशे (७.१८८) 'यच्छब्दस्तूत्तरवाक्यानु[2]-गतत्वेनोपात्तः, सामर्थ्यात् पूर्ववाक्या[3]नुगतस्य तच्छब्दस्योपादानं नापेक्षते' इति। उदाहृतं च तत्रैव —

---

**मन्दरः**

> व्याख्या ह्यसावद्यतनप्रणीते —
>
> त्युत्सृज्य मात्सर्यमनार्यवर्यम्।
>
> सन्तः सचित्ताः सदयाः श्रमज्ञा
>
> नन्दन्तु निन्दन्तु मम प्रमोदः ॥९॥

अथ तत्रभवान् आलङ्कारिकसार्वभौमो धर्मसुधीः साहित्यरत्नाकराभिधानमलङ्कारनिबन्धनं चिकीर्षुश्चिकीर्षिताविघ्नपरिसमाप्तिसाधनं बालगजाननानुग्रहाशंसनरूपं मङ्गलमादौ शिष्यशिक्षार्थं ग्रन्थतो ग्रन्थाति-आलिङ्गयेति। अत्र आदौ 'आलिङ्गय' इत्यानन्दहेतुभूतपरिरम्भाभिधायकस्याव्ययपदस्य भद्रादिवाचकत्वात् वर्णगणादिशुद्धेरभ्युच्चयः।

> देवतावाचकाः शब्दा ये च भद्रादिवाचकाः।
>
> ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा॥ (छं.शा. हलायुधटीका)

---

१. आननस्य—मा.। २, ३. वाक्यार्थानु-मा.।

**नौका**

'साधु चन्द्रमसि [1]पुष्करैः कृतं
मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे
तेन साहसमनुष्ठितं पुनः ॥ (का.प्र. ७.१८८)

इति —। एवमुत्तरत्रापि ज्ञेयम्। अत्र बालपदार्थे आलिङ्गनपूर्वकोत्सङ्गवर्तित्व(स्य)हेतुत्वात् कुम्भयोः कुचसान्निध्येन आलिङ्ग(न)पदार्थस्य हेतुत्वाच्च पदार्थहेतुकं काव्यलिङ्गद्वयम्। अस्य काव्यलिङ्गद्वयस्य च आननकुम्भयोर्गुहस्य [2]कुचत्वभ्रान्तिजनकत्वात् भ्रान्तिमदलङ्कारस्य च अङ्गाङ्गिभावेन सङ्करः। एतेषां लक्षणानि तु उपरिष्टात् स्वयमेव वक्ष्यन्ते ॥१॥

---

**मन्दरः**

इति। अत एव मुरारिश्रीहर्षादयोऽप्यादितो 'निष्प्रत्यूहम्' (अनर्घ. १.१) 'निपीय' (नैष. १.१) इत्याद्यव्ययप्रयोगमकुर्वन्। अर्धं वामभागो जाया यस्य तस्यार्धजानेरर्धनारीश्वरस्य पितुर्जनकस्य महादेवस्योदरं गाढमालिङ्ग्य। उत्सङ्गे दक्षिणाङ्के वर्ती आसीनः। एतेन पितुः प्रेमास्पदत्वाद् भक्तेभ्यः श्रेयः प्रदापयितुं च प्रवीण इति द्योत्यते। बालगजाननः नोऽस्मान् अवतु रक्षतु। अत्र 'बाल' इति विशेषणेन ग्रहणधारणपटुत्वादस्मत्प्रार्थनामविस्मृत्य अखिलश्रेयः-परिपन्थिप्रत्यूहप्रशमनक्षम इति ध्वन्यते। यस्य बालगजाननस्य कुम्भयोः गिरिसुताया अर्धाङ्गभूतायाः पार्वत्याः कुचस्य पार्श्वभाजोः सतोः, गुहः षण्मुखः, त्रिभिः। आननान्यब्जानीवेत्युपमितसमासः। रूपकसमासे तु उत्तरपदार्थप्राधान्येन पानक्रियानुपयोगात्। 'त्रिभिः' इत्यस्य असाधारणधर्मत्वेन उपमितसमासबाधका(कत्वा)भावाच्च। तैश्च स्तन्यं पिपासति पातुमिच्छति। एतेन पार्वतीपरमेश्वरयोः सरससंलापादिसन्तोषसमये सति तादृशानन्दहेतुभूतस्य बालगजाननस्य चुम्बनादिलालितत्वेनानन्दपारवश्यात् आश्रिताशास्यार्पणोचितत्वं व्यज्यते। अत्र अर्धनारीकुचप्रान्तगतयोः कुम्भयोः कुमारस्य कुचभ्रान्तिरभूदिति भ्रान्तिमदलङ्कारः। 'आननाब्जैः' इत्युपमेति तयोः संसृष्टिः ॥१॥

---

१. पुष्कलैः —मा.। २. °भ्रान्तिजननत्वात्—मा.।

श्रेयो मे विदधातु शारदशशिश्रीभासुराभा सुरा-
हारासारनिरासकारिमधुरव्याहारिणी हारिणी ।
मुक्ताभूषणपोषणस्मितलवश्रीसाधुनासाऽधुना
लावण्येन निजेन निर्जितवती रम्भारती भारती ॥२॥

---

नौका

अथ स्वस्य ग्रन्थनिर्माण (णे) सन्ततवाक्प्रसरणार्थं वाग्देवतां प्रार्थयते— श्रेय इति । शारदशशिनः शरच्चन्द्रस्य श्रीः कान्तिरिव भासुरा प्रकाशमाना आभा कान्तिर्यस्याः सा तथोक्ता । सुराणाम् इन्द्रादीनाम् आहारोऽमृतम् । 'अमर्त्या अमृतान्धसः' (अमर. १.१.८) इति कोशात् । तस्य आसारो धारासम्पातः । 'धारासम्पात आसारः' इत्यमरः (१.२.१२)। तस्य निरासकारिणः तिरस्कारिणः, ते च ते [1]मधुरव्याहारा मनोज्ञ[2]वाचः, ते अस्याः सन्तीति तादृशी । 'न कर्मधारयाद्'— इति निषेधस्यानित्यत्वात् साधुरेवायं प्रयोगः । हारिणी मनोहारिणी हारवती[3] वा । मुक्ताभूषणस्य मौक्तिकालङ्कारस्य पोषणः पोषकः यः स्मितलवः स्मितलेशः तस्य श्रिया कान्त्या साध्वी मनोज्ञा नासा नासिका यस्याः सा तथोक्ता । निजेन स्वेन लावण्येन रम्भा[4]रती रम्भा नाम (अ)तिसुन्दरी

---

मन्दरः

'श्रेयांसि बहुविघ्नानि' इत्यन्तरायबाहुल्यभयात् पौनःपुन्येन मङ्गलमाचरति — श्रेय इत्यादिभिश्चतुर्भिः । शारदस्य शशिनः श्रीरिव भासुरा प्रकाशमाना आभा कान्तिर्यस्याः सा तथोक्ता । सुराहारासारस्य सुधाधारावर्षस्य निरासकारिणो मधुरव्याहाराः स्वादुभाषणानि यस्याः सा तथोक्ता । हारिणी सन्ततहारानुषङ्गा । मुक्ताभूषणस्य नासाग्रवर्तिनः स्थूलमौक्तिकस्य पोषणः पुष्टिप्रदो यः स्मितलवो मन्दहासलेशः तस्य श्रिया साध्वी रम्या नासा यस्याः सा तथोक्ता । 'साधु-र्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति विश्वः (९६.१२) । निजेन स्वकेन लावण्येन —

'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते' (उज्ज्वल. ११.२६) ।

---

१. °व्याहारिता-मा. । २. मनोज्ञा वाचः -मा. । ३. हारवति—मा. । ४. रति—मा. ।

**नमस्तमःकर्दमदुर्दमाम्बुधि-**
**प्रनष्टचेष्टाखिलजन्तुसन्ततिम् ।**
**प्रसार्यमाणैः पटुदीर्घरश्मिभिर्-**
**जगत्त्रयीमुद्धरते विवस्वते ॥३॥**

---

नौका

स्वर्वेश्या, रतिः कामप्रिया च[1] ते निर्जितवती । सर्वातिशायिसौन्दर्यवतीत्यर्थः। एतादृशी वाग्देवता भारती, अधुना इदानीं मे मह्यं श्रेयो ग्रन्थनिर्माणकौशलरूपसम्पत्तिं विदधातु तनोत्वित्यर्थः । अत्र 'शारदशशि' इत्याद्ये विशेषणे उपमालङ्कारः । 'सुराहारा'[2]—इत्यादिद्वितीयेऽपि च 'निरासकारि'—पदप्रयोगात् स एवालङ्कारः । अत एव—'द्वेष्टि जयति' इत्यादौ उपमेत्याह आचार्यदण्डी । मुक्ताभूषण°' इति तृतीये तु स्मितलवस्य मुक्ताभूषणपोषकत्वासम्भवेऽपि (°त्वासम्बन्धेऽपि) सम्बन्धोक्तेरतिशयोक्तिः । 'निर्जितवती' इत्यत्र स्वभावोक्तिः । एतेषां परस्परनैरपे[3]क्ष्यात् संसृष्टिः ॥२॥

अथ 'आरोग्यं भास्करादिच्छेत्' इत्यादिना भास्करस्यारोग्यप्रदत्वश्रुतेस्तदर्थं भास्करं प्रार्थयते—नम इति । तमोऽन्धकारस्तदेव [4]कर्दमस्तेन

---

मन्दरः

इत्युक्तलक्षणलक्षितकान्तिविशेषेण रम्भां रतिं च निर्जितवती, स्वसौन्दर्यातिशयाधःकृतरम्भारतिरित्यर्थः । भारती शारदा अधुना मे मह्यं श्रेयः कल्याणं विदधातु तनोतु । अत्र वृत्त्यनुप्रासयमकयोः संसृष्टिः ।

'एकद्वित्र्यादिवर्णानां पुनरुक्तिर्भवेद् यदि ।
सङ्ख्यानियममुल्लङ्घ्य वृत्त्यनुप्रास ईरितः' ॥ (प्र.रु. ७.२)

इति । 'अर्थे सत्यर्थभिन्नानां वर्णानां या[5] पुनःश्रुतिः ।
यमकं पादतद्भागवृत्ति तद् यात्यनेकताम्' ॥ ((का.प्र. ९-११७)

इति च लक्षणात् ॥२॥

नम इति । तमोऽन्धकार एव कर्दमदुर्दमाम्बुधिः जम्बालदुरवगाहाब्धिः तस्मिन् प्रनष्टाश्चेष्टाः यस्याः सा तादृशी अखिलजन्तुसन्ततिः यस्यां सा तथोक्ता

---

पाठ १. °दुर्गमाम्बुधि–नौका ।

---

१. ते च–मा. । २. सुरासुरेत्यादि°–मा. । ३. निरपेक्षात्–मा. । ४. कर्दमे–मा. । ५. शब्दानां. सा.मा. ।

नित्यं रसार्द्रहृदयेन्धनसम्प्रयुक्त-
दाक्षायणीविरहदारुणपावकस्य ।

नौका

दुर्गमे दुष्प्रवेशे अम्बुधौ संसाराब्धौ प्रनष्टा विध्वस्ताः चेष्टा हितहितप्राप्तिपरिहारार्थाः[1] क्रिया येषां तेषाम् अखिलजन्तूनां सकलप्राणिनां सन्ततिं सन्दोहम् । [2]'सन्ततिः पङ्क्तिविस्तारे पारम्पर्ये सुतान्वये' इति रत्नमाला (१९१३ पं.)। प्रसार्यमाणैः सर्वतो व्याप्ती[3]कृतैः पटुभिः समर्थैः दीर्घरश्मिभिः आयतकिरणैः । त्रयोऽवयवा अस्याः त्रयी । 'सङ्ख्याया अवयवे तयप्' (पा. ५.२.४२)। 'द्वित्रिभ्यां' (पा. ७.२.४३) इत्यादिना (तस्य) अयजादेशः । 'टिड्ढाणञ्°' (पा. ४.१.१५) इत्यादिना ङीप् । जगतां त्रयी तां स्वर्गमर्त्यपातालत्रयम् उद्धरते उद्धर्त्रे विवस्वते भास्कराय । 'नमःस्वस्ति°' (पा. २.३.१६) इत्यादिना चतुर्थी । नमः नमस्कारः, अस्त्विति शेषः । यथा लोकाः पङ्कमग्नान् दीर्घपाशप्रसारेणोन्नयन्ति, तद्वदिति भावः ॥३॥

नित्यमिति । रसोऽनुरागः स एव रसो जलं तेनार्द्रं द्रवयुक्तं यद् हृदयमेव इन्धनं तेन सम्प्रयुक्तस्य, दाक्षायण्या दक्षकुमार्या सतीदेव्या यो विरहः स एव दारुणपावकः दारुणो वह्निः तस्य । उद्भूतां प्रभूतां धूमकलिकां धूमरेखाम्

मन्दरः

ताम् । पङ्कमग्नवद् निशायां निखिलप्राणिनोऽपि निद्रया निश्चेष्टा भवन्तीति भावः । जगत्त्रयीं पटुभिर्दीर्घैश्च रश्मिभिः किरणैरेव पाटवदैर्घ्यविशिष्टरज्जुभिः । 'अभीशु(किरण)प्रग्रहौ रश्मी' इत्यमरः (३.३.१३७)। उद्धरते अत्यधःपङ्कमग्नानां समुद्धरणं दृढतरैः दीर्घैश्च प्रग्रहैरेव कर्तव्यमिति भावः । अत्र तमसि विशिष्टाम्बुधित्वारोपस्य किरणेषु तादृशप्रग्रहत्वारोपस्य च हेतुहेतुमद्भावात् परम्परितरूपकालङ्कारः ॥३॥

नित्यमिति । रसोऽनुराग एव रसो द्रवस्तेनार्द्रं यद् हृदयं तदेवेन्धनं

१. °परिहारार्थः–मा. । २. 'सन्ततिः पङक्तिविस्तारपारम्पर्यसुतान्वय'–मा. । ३. व्याप्तिकृतैः–मा. । ४. उत्तरयन्ति–मा.

उद्भूतधूमकलिकामुपकण्ठमूलं
क्ष्वेलच्छलेन वहते [1]महते नमोऽस्तु ॥४॥

लक्ष्मीं वक्षसि तारहारवलये तस्याः प्रियं सोदरं
बिभ्रच्छुभ्रमणिं परं च नयने नाभौ च भद्रासनम् ।
ऊरुभ्रूगलनाभिरोमलतिकामित्राणि पञ्चायुधा-
न्याश्लिष्यन् करपङ्कजैरवतु नः कश्चिन्महाकामुकः ॥५॥

**नौका**

उपकण्ठमूलं कण्ठमूलसमीपे । विभक्त्यर्थेऽव्ययीभावः । क्ष्वेलच्छलेन हालाहल-व्याजेन नित्यं सर्वदा वहते [1]धर्त्रे । 'हालाहलापदेशप्रवृत्तप्रियविरहा[2]ग्निजात-धूममेव दधानाय (इत्यर्थः) । महते पूज्याय शिवाय । 'महसे' इति पाठे तेजः-स्वरूपाय शिवाय । 'नमः स्वस्ति॰ (पा. २.३.१६) इत्यादिना चतुर्थी । नमः अस्त्वित्यर्थः । अत्र 'क्ष्वेलच्छलेन' इति 'च्छल'शब्देना[3]सत्यत्वप्रति-पादनादपह्नवालङ्कारः । स च 'रसार्द्र' इत्यादिपावकविशेषणोपोद्बलित इति ध्येयम् ॥४॥

अथ श्रीकृष्णं प्रार्थयते —

लक्ष्मीमिति । कश्चिदनिर्वाच्यो महाकामुकः श्रीकृष्णः नोऽस्मान् अवतु रक्षत्विति क्रियाकारकसम्बन्धः । तत्र महाकामुकत्वं प्रकटयन् तं

**मन्दरः**

तेन सम्प्रयुक्तः सङ्गतः स चासौ दाक्षायणीविरहः सतीवियोगः स एव दारुणपावकः तस्य । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः (३.३.२२७)। उद्भूतां स्फुटां धूमकलिकां धूमाङ्कुरम् । अत्र 'क्ष्वेलच्छलेन' इति च्छल-शब्देन क्ष्वेलत्वमपह्नुत्य धूमकलिकात्वारोपाद् अपह्नवभेदः । 'रसार्द्र'इत्यादौ रूपकमिति तयोरङ्गाङ्गिभावेन सङ्करः ॥४॥

लक्ष्मीमिति । वक्षसि लक्ष्मीं बिभ्रत् । एतदग्रे विशेषणत्रितयेऽप्यन्वेति । तारे स्वच्छे हारवलये । 'मुक्ताशुद्धौ च तारः स्यात्' इत्यमरः (३.३.१६६)

पाठ. १. महसे–मन्दर. मधु. ।

१. धत्ते–मा. । २. ॰विरहाग्निजात–मा. । ३. ॰नानित्यत्व–मा. ।

नौका

विशिनष्टि—वक्षसि वक्षःस्थले लक्ष्मीं श्रीदेवीं बिभ्रद् दधानः। बिभर्तेः लटः शत्रादेशः, श्लौ,[1] 'श्लौ' (पा. ६.१.१०) इति द्वित्वे—'भृञामित्' (पा. ७.४.७३) इत्यभ्यासस्येत्त्वम्। किं च तारे परिशुद्धे हारवलये मौक्तिकहारे तस्याः श्रियः (प्रियं) सोदरम् इष्टा[2]नुजम्, शुभ्रमणिं कौस्तुभाख्यं बिभ्रत्। किञ्च नयने नेत्रे परम् अन्यं सोदरं चन्द्ररूपं बिभ्रत्। एवं नाभौ नाभिस्थले तस्या एव भद्रासनं कमलरूपं सिंहासनं च बिभ्रत्, [3]दधदित्यर्थः। अपि च ऊरू च भ्रुवौ च, गलः[4] कण्ठश्च, नाभिश्च रोमलतिका चेत्येतेषां मित्राणि सुहृद्भूतानि। तत्सदृशानीति यावत्। अत एव उपमालङ्कारः। पञ्चायुधानि गदाशार्ङ्गशङ्खचक्रासयः तान् करपङ्कजैः पङ्कजसदृशहस्तैः आश्लिष्यन् आलिङ्गन् वहन्नित्यर्थः। एतेन महाकामुकत्वं स्फुटमेव। एवं च सकलजयसामग्रीसम्पन्नः श्रीकृष्णो रक्षत्विति भावः। स्वभावोक्तिरलङ्कारः ॥९॥

---

मन्दरः

तस्याः लक्ष्म्याः प्रियं सोदरं प्रेमास्पदसोदरभूतं शुभ्रमणिं कौस्तुभरत्नम्। 'तस्याः' इत्यप्यग्रे विशेषणत्रयेण योज्यम्। नयने वामनेत्रे परम् अन्यं सोदरं चन्द्रं च। नाभौ भद्रासनं सिंहासनभूतं पद्मं च। तस्याः पद्मालयत्वात् तस्य पद्मनाभत्वाच्चेति भावः। ऊरु—भ्रू—गल—नाभि—रोमलतिकानां मित्राणि, तत्सदृशानीत्यर्थः। पञ्चायुधानि गदा-शार्ङ्ग-पाञ्चजन्य-सुदर्शन-नन्दकाख्यानि करपङ्कजैराश्लिष्यन् आलिङ्गन्। शार्ङ्गमंसेनेति बोध्यम्। कश्चिद् विलक्षणः महाकामुकः अर्थात् पुरुषोत्तमः नोऽस्मान् अवतु रक्षतु। वक्षसि लक्ष्मीधारणात् कामुकत्वम्। हारादिषु तत्सोदरादिधारणात्, करेषु तदवयवोपमानायुधाकलनाच्च महाकामुकत्वमित्याकूतम्। अत्र पदार्थानां विशेषणगत्या महाकामुकत्वं प्रति हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' (सा.द.१०.६२) इति लक्षणात् ॥९॥

---

१. श्लो—मा.। २. इष्टानुभु—मा.। ३. दधती—मा.। ४. गलश्च कण्ठं च—मा.।

२. **स्ववंशानुक्रमोपक्रमः --**

> **अनन्तमत्यन्तविशुद्धविग्रहं**
> **महश्चिदानन्दमयं निरामयम्।**
> **अशेषवेदान्तविचिन्त्यवैभवं**
> **प्रशस्तमस्ति प्रविभास्वरं स्वतः ॥६॥**

---

**नौका**

इत्थं प्रचुरमङ्गलं विधाय कविः स्वकीर्त्यनुवृत्तये ग्रन्थस्य प्रचयगमनाय च स्ववंशपरम्परां वर्णयिष्यन् तत्कारणं जगद्रूपेण वर्तमानं तेजो[1] निर्दिशति-- अनन्तमिति। अनन्तम् अपरिच्छिन्नम्। 'अनन्तं ब्रह्म'-(तै. २.१.१) इति श्रुतेः। अत्यन्तविशुद्ध(वि)ग्रहं स्फटिकवन्निर्मलस्वरूपम्। 'निष्कलङ्क' (ना. उ. २) इत्यादिश्रुतेः। चिदानन्दमयं ज्ञानानन्दस्वरूपम्। 'नित्यं विज्ञानं' इत्यादिश्रुतेः। निरामयं, सत्स्वरूपमित्यर्थः। 'सत्यं' (तै. २.१.१) इति श्रुतेः। स्वतः स्वेनैव। सार्वविभक्तिकस्तसिल्[2]। प्रविभास्वरं प्रकाशमानं, स्वप्रकाशमित्यर्थः। तद्बोधकश्रुतेः। अत एव प्रशस्तं सर्वोत्तमम्। नन्वेतादृशतेजःसत्त्वे किं मानमत आह-अशेषेति। अशेषैः वेदान्तैः उपनिषद्वाक्यैः विचिन्त्यं विचार्यं वैभवं विभुत्वं पूर्वोक्त-स्वरूपाभिन्नं यस्य तत्, तादृशं महः तेजोऽस्ति, वर्तत इत्यर्थः। तथा च एतादृशतेजसि एता (उपनिषद) एव मानमिति भावः ॥६॥

---

**मन्दरः**

एवं बहुधा मङ्गलमाधाय स्वाभिजात्यप्रख्यापनाय अन्वयपरम्परामाख्याति-अनन्तमिति। अनन्तं त्रिविधपरिच्छेदरहितम्, अत्यन्तविशुद्धविग्रहं चिन्मयत्वान्निष्कलङ्कस्वरूपं चिदानन्दमयं ज्ञानानन्दमयं, निर्गता आमया रोगा यस्मात् तत् (निरामयम्), अशेषवेदान्तैर्विचिन्त्यं वैभवं महिमातिशयो यस्य तत तथोक्तम्। अत एव प्रशस्तं स्वतः स्वेनैव विभास्वरं प्रकाशमानं महः अस्ति अत्र वृत्त्यनुप्रासः। लक्षणं तूक्तम् ॥६॥

---

१. तेभ्यो-मा.। २. °स्तसिः -मा.।

तदव्ययं ज्योतिरनाद्यविद्यया
वृतं रजःसत्त्वतमोगुणाढ्यया ।
प्रजापति-श्रीपति-पार्वतीपति-
प्रपञ्चरूपाणि मुहुः प्रपद्यते ॥७॥

तदेकदाऽऽत्मन्यखिलं चराचरं
निधाय नारायणनामकं महः ।
फणीन्द्रपर्यङ्कतले पयोनिधौ
चिराय रेमे निजयोगनिद्रया ॥८॥

---

नौका

पूर्वोक्तस्यैव सच्चिदानन्दस्वरूपस्याघटितघटनापटुतः मायावृतत्वेन त्रैविध्यमाह—तदिति । तत् पूर्वोक्तं तेजो रजःसत्त्वतमोगुणैः (आढ्यया) प्रकाशमानया । तदात्मिकयेति यावत् । अनाद्यविद्यया अनाद्यज्ञानेन । अनादित्वं चास्याः 'अजाम्' (म.ना. ८.४) इत्यादिश्रुतिसिद्धम् । वृतम् आवृतं सत् । अत एव प्रजापतिश्रीपतिपार्वतीपतिप्रपञ्चरूपाणि ब्रह्मविष्णुरुद्ररूपव्यापाररूपतां मुहुः पुनः पुनः प्रपद्यते, प्रपन्नं भवतीत्यर्थः । रजोगुणस्य प्राधान्यात् ब्रह्मा[1], सत्त्वगुणप्राधान्ये विष्णुः, तमोगुणप्राधान्ये रुद्र इति विवेकः ॥७॥

तदिति । एकदा हिरण्यगर्भप्रलये तत् पूर्वोक्तं नारायणनामकं महः विष्णुस्वरूपं तेजः चराचरं[2] स्थावरजङ्गमात्मकम् अखिलं विश्वम् आत्मनि

---

मन्दरः

तदिति । अव्ययमनन्तमनादि च तत् पूर्वोक्तं ज्योतिः तेजः रजःसत्त्वतमोगुणाढ्यया अविद्यया 'अजाम्' (म.ना. ८.४) इत्यादिश्रुतिप्रतिपादितया मूलप्रकृत्या वृतम् आवृतं सत् प्रजापतिश्रीपतिपार्वतीपतीनां च प्रपञ्चस्य स्थावरजङ्गमात्मकस्य जगतश्च रूपाणि मुहुः पुनःपुनः प्रपद्यते प्राप्नोति । तद् ब्रह्मात्मकमेव तेजो गुणत्रयविशिष्टप्रकृतिप्रसक्तिप्रभावात् अनेकत्वः त्रिमूर्त्यात्मना जगद्रूपेण चाकारितं भवतीत्यर्थः ॥७॥

तदिति । एकदा एकस्मिन् काले नारायणनामकं तत् पूर्वोक्तं महः अखिलं चराचरं निखिलान् लोकान् । 'चराचरं स्याज्जगति' इति विश्वः (१०२.६) ।

---

१. ब्रह्म–मा. । २. चराचरात्मकं–मा.

ततोऽस्य नाभीसरसः सरोरुहं
　　समुद्ययौ, यस्य समस्तमम्बरम् ।
वितन्वदिन्दिन्दिरशावविभ्रमं
　　दलान्तरालेषु चिरं व्यलीयत ॥९॥

---

**नौका**

स्वस्मिन् निधाय, उपसंहृत्य (इति यावत्) । पयोनिधौ क्षीराब्धौ, फणीन्द्रः शेषाहिः स एव पर्यङ्कतलं, शय्याप्रदेश इत्यर्थः । तस्मिन् निजया स्वकीयया [1]योगनिद्रया निद्राकल्पयोगेन साकं रेमे, क्रीडितवानित्यर्थः । यथा लोके कश्चित् संसारी स्वपदार्थजातमङ्गणादावाकीर्णं स्वगृहे निधाय रात्रौ शय्याया-मतिसुन्दर्या[2] कान्तया समं रमते, तद्वदिति ध्वनिः ॥८॥

ततः किमित्याशङ्क्य किञ्चिदद्भुतमासीदित्याह–तत इति । ततोऽनन्तरम् अस्य विष्णोः नाभ्येव सरः तस्मात्, सरोरुहं कमलं समुद्ययौ समुत्पन्नम् । यस्य नाभीकमलस्य समस्तमम्बरं निखिलं व्योम । इन्दिन्दिरशावः चञ्चरीकपोतः 'इन्दिन्दिरश्चञ्चरीकः' इति हलायुधः (२.१००) । तस्य विभ्रममिव विभ्रमं विलासम् । अत एव निदर्शनालङ्कारः । [3]वितन्वत् विदधत् । विपूर्वात् तनोतेः कर्तरि लटः शत्रादेशः । दलान्तरालेषु पत्रमध्येषु चिरं चिरकालं व्यलीयत विलिल्ये । विपूर्वाद् देवादिकात् 'लीङ् श्लेषणे (धा.पा. ११३९)

---

**मन्दरः**

आत्मनि स्वोदरे निधाय निजया योगनिद्रया चिराय चिरकालपर्यन्तं रेमे विजहार । निखिलजन्तुजालस्यात्मोदरविनिवेशितत्वेन तत्पालनप्रयासप्रसक्त्यभावात् निश्चि-न्तोऽच्युतो निद्राति स्मेति भावः । अत्र प्रस्तुतवस्तुसारूप्यात् समस्तवस्तु-जातं निर्भयं निक्षिप्य निजकान्तया सह निद्रितस्य गृहिणो वृत्तान्तप्रतीतेः समासोक्तिरलङ्कारः ॥८॥

तत इति । नाभ्येव सरः तस्मात् । यस्य सरोरुहस्य । समस्तं निखिलम् अम्बरं व्योम इन्दिन्दिरशावस्य चञ्चरीकशिशोः विभ्रमं विलासं

---

१. योगे–मा. ।　२. °सुन्दरया–मा. ।　३. वितन्वती विदधती–मा. ।

**ततस्ततस्तामरसात् [1]समुद्गतः**
**चतुर्मुखस्तद्रजसेव राजसः ।**
**जगत् सिसृक्षुर्जगदीशशासनात्**
**समाधिसम्पन्नमना मनागभूत् ॥१०॥**

---

नौका

इत्यस्मात् कर्तरि [1]लङ् । आकाशादपि विपुलतमसरोजं नाभेर्जातमित्यर्थः । अत्र आकाशस्य तथा विलीनत्वासम्बन्धेऽपि [2]सम्बन्धोक्तेरतिशयोक्तिः । सा च निदर्शनाप्रतिभोत्थापितेत्यनयोरङ्गाङ्गिभावसङ्करः ॥९॥

तत इति । ततोऽनन्तरम् । ततः तस्मात् । 'पञ्चम्यास्तसिल्' (पा. ५.६.७) (इति तसिल्) । तामरसात् सरोजात् । 'पङ्केरुहं तामरसम्' इत्यमरः (१.९.४१) । समुद्गतः सम्भूतः । अत एव तद्रजसे(व) तत्परागेणेवेत्युत्प्रेक्षा । राजसः रजोगुणयुक्तः चतुर्मुखो ब्रह्मा [3]जगदीशशासनात् विष्णोराज्ञातः जगत् सिसृक्षुः जगन्निर्मातुमिच्छुः । सृजतेः सन्नन्तादुप्रत्ययः । समाधिसम्पन्नमना ध्यानपरायणान्तःकरणो मनाक ईषत् अभूत्, आसीदित्यर्थः ॥१०॥

---

मन्दरः

वितन्वत् सत् व्यलीयत विलीनमभूत् । अत्र अतिमहतोऽपि चञ्चरीकशिशुदशापन्नतयाऽल्पस्य आकाशस्य आधेयत्वकथनेन आधारभूतस्यारविन्दस्य आधिक्यप्रतीतेरधिकप्रभेदोऽर्थालङ्कारः । 'पृथ्वाधेयाद् यदाधाराधिक्यं तदपि तन्मतम्' इति लक्षणात् (प्र.रु. ८.२८) । 'इन्दिन्दिरशावविभ्रमं वितन्वत्' इत्यत्र निदर्शनेति तयोः संसृष्टिः ॥९॥

तत इति । ततोऽनन्तरम् । ततः तस्मात् । तामरसाद् अरविन्दात् । जगदीशस्य नारायणस्य शासनात् जगत् लोकान् सिसृक्षुः स्रष्टुमिच्छुः सन् मनाग् ईषत् समाधिसम्पन्नं ध्यानायत्तं मनो यस्य स तथोक्तः अभूत् । अत्र 'ततस्तत' इति 'मना मनाग्' इति च व्यञ्जनद्वयावृत्त्या छेकानुप्रासः ।

'द्वयोर्द्वयोर्व्यञ्जनयोर्युग्मयोर्या निरन्तरा ।
आवृत्तिः श्रूयते सोऽयं छेकानुप्रास ईरितः' ॥ (सा.र. ६.१)

इति लक्षणात् । अन्यत्र वृत्त्यनुप्रासः ॥१०॥

---

पाठ. १. समुद्यतः–नौका; ख. ।

---

१. तिङि–मा. । २. सम्बन्धोक्ति°-मा. । ३. दिगीश°–मा. ।

तस्मात् समाधिसचिवान्मनसस्तदीयात्
पुत्रा मरीचिपुलहप्रमुखाः प्रभूताः ।
यत्पुत्रपौत्रतदपत्यपरम्पराभि -
रापूरितोऽभवदजाण्डकटाहगर्भः ॥११॥

३. स्ववंशानुक्रमः —

तेष्वङ्गिरोमुनिवरादुदयं प्रपेदे
भास्वानिवोदयगिरेर्हरितो मुनीन्द्रः ।

नौका

'समाधिसम्पन्नमना' इत्युक्तं तस्य फलमाह—तस्मादिति । [1]तदीयात् ब्रह्मसम्बन्धिनः समाधिसचिवात् समाधिसहकृतात् तस्मात् पूर्वोक्तात् [2]मनसोऽन्तःकरणात् मरीचिपुलहप्रमुखाः मरीचिपुलहौ [3]प्रमुखौ येषां ते तथोक्ताः । पुत्राः प्रभूताः सञ्जाता इत्यर्थः । तदुत्पत्तेः फलमाह—अजाण्डकटाहगर्भः इति । अजाण्डकटाहस्य ब्रह्माण्डकटाहस्य गर्भो मध्यं यत्पुत्रपौत्रतदपत्यपरम्पराभिः [4]येषां मरीच्यादीनां पुत्राः पौत्राः तदपत्यानि पौत्रापत्यानि च तेषां परम्पराभिः आपूरितः समन्ताद्व्याप्तोऽ[6]भवदिति वस्तुस्थितिः ॥११॥

तेष्विति । दोषानुषङ्गरहितः दोषाया रात्र्या अनुषङ्गेण सम्बन्धेन रहितः शून्यः । प्रकृते तु दोषैः अघैः सम्बन्धशून्यः अनि(रि)ष्टशून्यः, [7]निर्दुष्टो वेत्यर्थः । 'सायं निश्यव्ययं दोषा स्त्री वा ना दूषणाघयोः' इत्युभयत्र रत्नमाला

मन्दरः

तस्मादिति । समाधिसचिवाद् ध्यानयुक्तात् । येषां मरीचिप्रभृतीनां पुत्राः पौत्राः तदपत्यानि प्रपौत्राश्च तेषां परम्पराभिः सन्तानसन्ततिभिः अजाण्डकटाहगर्भः ब्रह्माण्डभाण्डोदरम् ।

'मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
वसिष्ठं च महातेजाः सोऽसृजत् सप्त मानसान्' ॥ (ह.वं.७.७)

इति स्मरणात् ॥११॥

तेष्विति । तेषु सप्तर्षिषु अङ्गिरोमुनिवराद् अङ्गिरोऽभिधानमुनिश्रेष्ठात् । दोषाणां पापानाम् अनुषङ्गेण रहितः, अन्यत्र दोषाणां रात्रीणाम् । 'दोषः

१. तदीयं–मा. । २. मनसान्तः°–मा. । ३. प्रमुखे–मा. । ४. एषां –मा. । ५.परम्परापूरितसमन्तात्–मा. । ६. भवतीति–मा. । ७. निर्दुष्टशून्य–मा. ।

दोषानुषङ्गरहितश्च न भोगमार्ग -
भ्रान्तो निराकृततमाः शुचियोगदीप्रः ॥१२॥॥

नौका

(प.१११९)। न भोगमार्गभ्रान्तः भोगमार्गे स्रक्चन्दनादौ भ्रान्तो भ्रमणशीलः। आसक्त इति यावत्। स न भवतीति तादृशः। (नञ)र्थस्य 'न' शब्दस्य सुप्सुपेति समासः। अन्यत्र नभसि गच्छन्तीति नभोगाः सिद्धाः, तेषां मार्गेऽन्तरिक्षे भ्रान्तो भ्रमणशीलः। अन्तरिक्षसञ्चारीति यावत्। 'नभोऽन्तरिक्षं गगनम्' इत्यमरः (१. २. १.)। निराकृततमा निरस्ताज्ञानः, अन्यत्र निरस्तान्धकारः। शुचियोगेन शुचित्वेन सम्बन्धेन दीप्रः प्रकाशमानः, अन्यत्र शुचेः ग्रीष्मर्तोः योगेन (दीप्रः) प्रकाशमानः 'शुक्रे ज्येष्ठे शुचिस्त्वयम्। आषाढे' इत्यमरः (१.३.१६)। एतादृशो हरितो नाम मुनीन्द्रः तेषु पूर्वोक्तमुनिषु मध्ये अङ्गिरोमुनिवरात् ( तन् )नाम(क)मुनिश्रेष्ठात्। उदयगिरेः भास्वानिव सूर्य इव उदयम् उत्पत्तिमभ्युदयं च प्रपेदे प्राप्तवानित्यर्थः। अत्र श्लेषसङ्कीर्णा इयं श्रौती पूर्णोपमा ॥१२॥

मन्दरः

स्याद् दूषणे पापे दोषा रात्रौ भुजेऽपि च' इति विश्वः (१२८.७)। भोगानाम् ऐहिकसुखानां मार्गेऽनुभवे भ्रान्त आसक्तो न भवतीति तथोक्तः। अन्यत्र नभो गच्छति प्राप्नोति, नभोगः स चासौ मार्गश्च तस्मिन् खेचरमार्गे वा भ्रान्तो भ्रमणशीलः। निराकृतं तमोऽज्ञानं येन स तथोक्तः। अन्यत्र निर्धूतध्वान्तः। शुचिभिः शुद्धैः योगैः यमनियमादिभिः दीप्रः प्रकाशमानः। अन्यत्र शुचेः ग्रीष्मस्य योगे(न) दीप्रस्तीक्ष्णः। 'शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते। ग्रीष्मे हुतवहेऽपि स्यात्' इति विश्वः (२१.६)। हरितो हरिताख्यो मुनीद्रः उदयगिरेर्भास्वानिव उदयम् आविर्भावं प्रपेदे। अत्र श्लेषभित्तिकाभेदाध्यवसायेन साधारणधर्मप्रतिपादनादुपमा। मतभेदेन उपमाप्रतिभोत्थापितः श्लेषः ॥१२॥

गोत्रे च तस्य समभूदभिजातवंशो
　　वाराणसीत्युपपदेन भुवि प्रसिद्धः ।
तत्राभवन् बुधवरास्त्रिपुरारिसोम-
　　[1]यज्वादयः शुभतपः[2]श्रुतशीलवृत्ताः ॥१३॥

---

### नौका

गोत्र इति । तस्य हरितमुनीन्द्रस्य गोत्रे 'अपत्यं[1] पौत्रप्रभृति गोत्रम्' (पा. ४.१.१६२) इति सूत्रोक्तरीत्या पौत्राद्यपत्यपरम्परारूपे वंशे । [2]'गोत्रं नाम्नि कुले क्षेत्रे' इति दण्डाधिनाथः (प.९९७) । अभिजातवंशः प्रशस्तकुलम् । वाराणसीत्यु[3]पपदेन, वाराणसीति नाम्नेत्यर्थः । भुवि भूलोके प्रसिद्धः ख्यातः समभूत् समजनि । तत्र तस्मिन् वंशे शुभतपःश्रुतशीलवृत्ताः तपः स्वाध्यायादि, [4]श्रुतानि शास्त्राणि, शीलं स्वभावः, वृत्तानि सद्व्यापाराश्च, तानि [5]च शुभानि शुभप्रदानि येषां ते तथोक्ताः । स्वाध्यायादिनिरता इत्यर्थः । त्रिपुरारि[6]सोमयज्वाद्यो बुधवराः पण्डितमुख्याः अभवन् आसन्नित्यर्थः ॥१३॥

---

### मन्दरः

गोत्र इति । किञ्चेति चार्थः । तस्य हरितस्य गोत्रे । अभिजातवंशः सद्वंशः । 'अभिजातः स्मृतो न्याय्ये कुलीनप्राप्तरूपयोः' इति विश्वः (९६.६) । समभूत् सञ्जज्ञे । तत्र वाराणसीवंशे । तपो धर्मः, श्रुतं शास्त्रं, शीलं स्वभावः, वृत्तं चरित्रं च तानि शुभानि तपःप्रभृतीनि येषां ते यथोक्ताः । 'तपश्चान्द्रायणादौ स्याद् धर्मे लोकान्तरेऽपि च' इति विश्वः (१२७. ३९) । त्रिपुरारिसोमयज्वादयः त्रिपुरारिसोमयाजिप्रभृतयः ॥१३॥

---

पाठ. १. °याज्यादयः –मधु. । २. °वपुःश्रुतिशील.–ख. ।

---

१. अपत्यं पोत्रप्रभृति । सूत्रमिति । सूत्रेष्वुक्त°–मा. । २. गोत्रं नामाङ्कुरे क्षेत्रे–मा. । ३. °त्युपदेशेन–मा. ४. कृतानि–मा. ५. ते च शुभा शुभप्रदाः –मा. । ६. °रिनाम–मा. ।

देवान् हविर्भिरतिथीनशनैश्च शिष्यान्
विद्योपदेशविधया परितोषयद्भिः ।
वाराणसीविहितनित्यनिवासदीक्षैः
यैः पण्डितैर्भरतखण्डममण्डि पुण्यैः ॥१४॥

४. स्वपितामहोत्पत्तिः —

सर्वज्ञतः शमितकामरुषो गिरीशा-
च्छ्रीपार्वतीप्रियतमात् त्रिपुरारिनाम्नः ।

---

नौका

तानेव[1] पुनर्विशिनष्टि—देवानित्यादिना । हविर्भिः पुरोडाशादिभिः देवान् इन्द्रादीन्, अतिथीन् समाराध्य(न)समित्यादिलक्षणलक्षितान् याचकान् अशनैः अन्नपानीयादिभिः । विद्यो[2]पदेशविधया विद्याप्रदानेन शिष्यांश्च परितोषयद्भिः सन्तोषयद्भिः, वाराणसी(विहित)नित्यनिवासदीक्षैः काश्यां निरन्तर[3]निवासिभिः पुण्यैः पुण्यशीलैः यैः त्रिपुरारिप्रमुखैः पण्डितैः । भरतखण्डं भरतो नाम कश्चन पूर्वो राजा तस्य खण्डम् इदमवनिमण्डलम् । अमण्डि, अलङ्कृतमित्यर्थः । 'मडि' धातोः कर्मणि लुङ् । [4]'चिण्भावकर्मणोः' (पा. ३.१.६६) इति च्लेश्चिणि 'चिणो लुक्' (पा. ६.४.१०४) इति लुक् । एतेन भुवोऽलङ्कारा इव स्थिता इत्युत्प्रेक्षा व्यज्यते ॥१४॥

ततः किमत आह— सर्वज्ञत इति । सर्वज्ञतः सकलशास्त्रजन्यज्ञानवतः । अन्यत्र परमा[5]ण्वादिनिखिलज्ञानवतः । 'पञ्चम्यास्तसिल्' (पा. ५. ३. ७) । शमितकामरुषः शमिते[6] निरस्ते कामरुषौ कामक्रोधौ येन तस्मात् । अन्यत्र शमिता शान्तिं प्रापिता कामस्य मन्मथस्य रुट् अहङ्कारो येन तस्मात् । काम-

---

मन्दरः

देवानिति । निगदव्याख्यातोऽयं श्लोकः ॥१४॥

सर्वज्ञत इति । सर्वज्ञतः सर्वज्ञात् । उभयत्र समानमेतत् । शमिते कामरुषौ कामक्रोधौ येन तस्मात् । अन्यत्र शमितः कामो यया सा तादृशी रुट् यस्य तस्मात् । गिरि वाचि विषये ईशात् समर्थात् । अन्यत्र गिरेः कैलासस्य ईशाद् अधिपतेः । श्रीयुक्तायाः पार्वत्याः पार्वतीसंज्ञिकाया वनितायाः प्रिय-

---

१. तावेत—मा. । २. दिव्योपदेश°—मा. । ३. °निवासिनीभिः —मा. । ४. लुङ, भावकर्मणोः —मा. ५. परमाण्विति-मा. । ६. शमितौ निरस्तौ-मा. ।

तस्माद् बुधाद् बहुमुखोद्गतवाग्विभूतिर्-
धर्माह्वयः [1]समुदभून्महितः कुमारः ॥१५॥

---

**नौका**

विजेतुरित्यर्थः। गिरीशात् 'गिरि' इति वागर्थकं सप्तम्यन्तम्। गिरि वाग्विषये ईशात् ईश्वरात्। वाचस्पतिसमानादित्यर्थः। अन्यत्र गिरेः कैलासस्य (ईशात्) ईश्वरात्। 'गिरीशो गिरिशो मृडः' इत्यमरः (१.१.११)। श्रीपार्वती-प्रियतमात् श्रीपार्वत्यौ लक्ष्मीपार्वतीनामकमानुषस्त्रियौ तयोर्भर्तुरित्यर्थः। अन्यत्र श्रीसम्पन्न गौरीभर्तुरित्यर्थः। एवम्भूतात् त्रिपुरारिनाम्नः त्रिपुरारिसमाख्यानात्। उभयत्र समानम्, एकत्र [1]रूढम्, अन्यत्र यौगिकमिति तु विशेषः। तस्मात् पूर्वोक्तात् बुधात् पण्डितात् (देवाच्च)। 'सन् सुधीः कोविदो बुधः' (२.७.५) 'विबुधाः [2]सुराः' इत्युभयत्राप्यमरः (१.१.७)। बहुमुखोद्गतवाग्विभूतिः बहुमुखं व्यापकं यथा तथा उद्गता प्रवृत्ता वाग्विभूतिः वाग्विलासो यस्य स तादृशः। अन्यत्र बहुमुखैः षड्भिराननैः प्रसृतवाक्सम्पत्तिरित्यर्थः। महितः पूज्य इति समानम्। धर्माह्वयो धर्मभट्टाख्यः कुमारः पुत्रः षडाननश्च समभवत् सञ्जात इत्यर्थः। अत्र प्रकृताप्रकृतश्लेषालङ्कारः। एतादृशस्थलेषु शब्दशक्तिमूलानुरणनध्वनिरिति तु ग्रन्थकृदाशयः। एतद्विवेकस्तूपरिष्टाद् भविष्यति ॥१५॥

---

**मन्दरः**

तमात्। अन्यत्र श्रीपार्वत्याः प्रियतमात्। त्रिपुरारिनाम्नः। उभयत्र सममेतत्। तस्मात् पूर्वोक्तात्। अन्यत्र प्रसिद्धात्। विबुधात् पण्डितात्। अन्यत्र देवात्। बहुभिर्मुखैः प्रकारैः उद्गता वाग्विभूतिः यस्य स तथोक्तः। अन्यत्र बहुभिः षड्भिः मुखैः वदनैः उद्गता वाग्विभूतिः यस्य स तथोक्तः। 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि' इति विश्वः (९.२)। धर्माह्वयो धर्माख्यः। अन्यत्र [3]धर्मे धनुषि आह्वयो नाम यस्य स तथोक्तः। धनुर्विद्या-विश्रुत इत्यर्थः। 'धर्मोऽस्त्री पुण्ये साम्यस्वभावयोः। चापन्यायाध्वरा-हिंसायज्वाचारयमेषु ना' इति रत्नमाला (पं. ७९३)। महितः पूजितः। सममेतत्। कुमारः पुत्रः, अन्यत्र गुहः। समुदभूत् समुत्पन्नोऽभूत्। अत्र विशेष्यपदयोरपि श्लिष्टत्वात् शब्दशक्तिमूलध्वनिरिति प्राञ्चः। उभय-श्लेषेण उपमालङ्कारध्वनिरित्यन्ये ॥१५॥

---

पाठ. १. समभवत्-नौका।

---

१. रूढिम्-मा.। २. 'सुरा बुधा'-मा.। विशे. ३. धर्मो धर्मजनकः आह वयो यस्य ईदृशः इति मधु.।

५. निजपितामहवर्णनम् —

नागाम्बिकां शुभगुणां प्रतिगृह्य[1] कन्या-
मेकां गृहाश्रमनिवासकृते चिरं यः ।
अन्यप्रतिग्रह[2]भयो निगमागमानां
सत्सम्प्रदायमकरोदवनावखण्डम् ॥१६॥

---

**नौका**

धर्माह्वयो जात इत्युक्तम् । तस्य सामर्थ्यमाह—नागाम्बिकामित्यादि-श्लोकत्रयेण । गृहाश्रमनिवासकृते गृहस्थाश्रमनिवासार्थम् । कृते इति तादर्थ्येऽव्ययम् इति केचित् । [1]कृञः सम्पदादिपाठात् भावे क्विप इत्येके । शुभगुणां नागाम्बिकां तदाख्यामेकां कन्यां परिगृह्य पत्नीत्वेन स्वीकृत्य । एकाम् इत्यनेन पितृवत् कन्याद्वयं न स्वीकृतवानिति सूचितम् । चिरं चिरकालम् । [2]अन्यप्रतिग्रहभयो[3] अन्यस्मात् पुरुषान्तराद् यः प्रतिग्रहः तस्माद् भयं यस्य स तथोक्तः । प्रतिग्रहपराङ्मुख इत्यर्थः । एतादृशो यो धर्मपण्डितः । निगमागमानां वेदशास्त्राणां सत्सम्प्रदायं [4]सच्छिष्यपरम्परया अभिवृद्धिम् ( अवनौ पृथिव्याम् ) अखण्डम् अकरोत्, चकारेति वस्तुगतिः । निखिलवेदशास्त्रवेत्तेति भावः ॥१६॥

---

**मन्दरः**

नागाम्बिकामिति । यो धर्मसुधीः । गृहैः भार्यया य आश्रमः तस्मिन् निवासकृते निवासाय गृहस्थाश्रमधर्मान् चरितुमित्यर्थः । 'दारेष्वपि गृहाः' इत्यमरः । एकां कन्यां प्रतिगृह्य । अत्र एकत्वमितरप्रतिग्रह-व्यवच्छेदार्थम् । अन्येभ्यः प्रतिग्रहेभ्यो भयं यस्य स तथोक्तः सन् । निग-मागमानां वेदशास्त्राणाम् । 'आगमः शास्त्र आयाते' इति विश्वः (९०.३९) । अखण्डम् अविच्छिन्नं सत्सम्प्रदायं चिरमकरोत्, चिरं वेदशास्त्राध्यापकोऽभूदि-त्यर्थः ॥१६॥

---

पाठ. १. परिगृह्य–नौका. । २. °प्रतिग्रहभयात्–मधु. ।

---

१. वृञ्सम्प–मा. । २. 'अन्यस्या विवाहतो भयात्'–मधु. । ३. °भये–मा. । ४. सशिष्य°–मा. ।

*शम्भोर्यदीयशतरुद्रकृताभिषेक -
तोयैर्ललाटगलतापहरैः कपर्दे ।
गङ्गात्मना परिणतैर्दधिरेऽवसिक्ता
नूनं जटावलिलताः शशिपुष्पशोभाम् ॥१७॥

---

नौका

शम्भोरिति । शम्भोः [1]कपर्दे जटाजूटे । 'कपर्दोऽस्य जटाजूटः' इत्यमरः (१. १. ३९) । गङ्गात्मना परिणतैः गङ्गाप्रवाहरूपेण परिणमद्भिः अत एव ललाटगलतापहरैः[2] ललाटस्थवह्निजन्यगलस्थहालाहलजन्यसन्तापहारकैरिति विशेषणद्वयाद् असम्बन्धे[3] सम्बन्धनिबन्धना(द)तिशयोक्तिद्वयम् । एवम्भूतैः यदीयशतरुद्रकृताभिषेकैः यदीयैः धर्मपण्डितसम्बन्धिभिः शता(वृत्ति(त्त)-रुद्रैः कृतानि यान्यभिषेकतोयानि तैः करणैः अवसिक्ताः सिञ्चिताः जटावलिलता जटापङ्क्त्य एव लताः शशिपुष्पशोभां शशी चन्द्र एव पुष्पं तेन शोभां तत्कृतां शोभां दधिरे दधुः । दधातेः कर्तरि लिट् । नूनमित्युत्प्रेक्षा । सा च रूपकातिशयोक्तिभ्यामनुप्राणितेति सङ्करः । अतिथिपूजाधुरन्धर इति तु परमार्थः ॥१७॥

---

मन्दरः

शम्भोरिति । ललाटगलयोः यस्तापः कृपीटजन्यकालकूटधारणजन्यः, तं हरन्तीति तथोक्तैः । शम्भोः कपर्दे जटाजूटे । 'कपर्दोऽस्य जटाजूटः' इत्यमरः (१.१.३९)। गङ्गात्मना परिणतैः गङ्गात्वं प्राप्तैः। यदीयस्य धर्मसूरिसम्बन्धिनः शतरुद्रेण 'नमस्ते रुद्र मन्यवे' (वा. सं. १६. १) इत्यादिरुद्रानुवाकेन कृतस्य अभिषेकस्य सम्बन्धिभिस्तोयैः अवसिक्ता जटावलय एव लताः शशिना चन्द्रकान्त्या पुष्पशोभां दधिरे दधति स्म । चन्द्रिकाव्याप्ता जटालताः पुष्पिता इव भान्ति स्मेति भावः । अत्र आद्यपादत्रयेऽतिशयोक्तिः । जटावलिलता इत्यत्र रूपकम् । अभिषेकोदकसंसिक्ता जटावलिलताः शशिपुष्पशोभां दधिरे इत्यत्र उत्प्रेक्षा चेति, तयोरुत्प्रेक्षानुग्राहकत्वादङ्गाङ्गिभावेन सङ्करः ॥१७॥

---

पाठ. *पद्यमिदं 'नागाम्बिकाम्' (१.१६) इत्यतः पूर्वं पठ्यते–मधु. ।

---

१. कपर्दिजटाजाते–मा. । २. °हारैः –मा. । ३. असम्बन्धिसम्बन्ध–मा. ।

यः सप्तवारविहितैर्वरदात् प्रहृष्टात्
　　प्रासादमन्त्रसुपुरश्चरणैर्महेशात् ।
आसप्तमाद् वरमगान्निजवंशजानां
　　विच्छेदशून्यविमलाखिलशास्त्रबोधम् ॥१८॥

---

नौका

स च शिवप्रसादाद् वरं प्रापे[1]त्याह—य इति । यो धर्मसूरिः सप्तवारविहितैः सप्तावृत्तिभिः कृतैः प्रासादमन्त्रसुपुरश्चरणैः 'प्रासादमन्त्र' इति कश्चन मन्त्रविशेषः तस्य सुपुरश्चरणैः सम्यगनुष्ठानविशेषैः करणैः प्रहृष्टात् सन्तुष्टाद् अत एव वरदात् वरप्रदानोन्मुखात् महेशात् निजवंशजानां स्वकुलसम्भूतपुरुषाणाम् । सप्तममभिव्याप्य आसप्तमात् । अभिविधावव्ययीभावः । '[2]अपञ्चम्याः' (पा. २. ४. ८३) इति प्रतिषेधात् 'नाव्ययीभावाद्' (पा. २. ४. ८३) इत्यमभावः । सप्तमपुरुषपर्यन्तमित्यर्थः । विच्छेदशून्यविमलाखिलशास्त्रबोधम् अविच्छेदं यथा तथा निखिलशास्त्रजन्यविमलज्ञानरूपम् । वरम्[3] इष्टार्थम् । 'देवाद् वृते वरः,[4] श्रेष्ठे त्रिषु, क्लीबे मनाक्प्रिये' इत्यमरः (३.३.१७३) । अगात् जगामेत्यर्थः । एतेन मद्वंशजाः सर्वेऽपि पण्डिता इति सूचितमिति ध्येयम् ॥१८॥

---

मन्दरः

य इति । यो धर्मसूरिः । प्रासादमन्त्रस्य प्रासादपञ्चाक्षरीनामकमन्त्रविशेषस्य सुपुरश्चरणैः सम्यक्कृतपुरश्चर्याभिः प्रहृष्टात् प्रसन्नात् अत एव वरदात्, वरं वृणीष्वेति वक्तुरित्यर्थः । महेशात् महादेवात् । आसप्तमात्, स्वस्य स्वतोऽखिलविद्यानिष्णातत्वात् स्वपुत्रानारभ्य सप्तमपुरुषपर्यन्तं निजवंशजानाम् । विच्छेदशून्योऽविच्छिन्नः विमलोऽसन्दिग्धश्च योऽखिलशास्त्रावबोधः तम् । वरं वरत्वेन अगात् प्राप ॥१८॥

---

1. प्राप्तेत्याह—मा. । २. आ—मा. । ३. परम्—मा. । ४. पद्दे—मा. ।

६. निजजनकस्य पितृव्ययोश्चोत्पत्तिः --

विधिवदनुष्ठितकर्मा

धर्माख्यसुधीः सुसंस्फुरद्धर्मा ।

जनयाम्बभूव तनयान्[1]

नारायण-पर्वतेश-रामाख्यान् ॥१९॥

७. स्वपितृव्यनारायणपाण्डित्यवर्णनम् --

[2]पदक्रमजटाक्षरक्रमपदक्रमारोहणा-

वरोहविषमक्रमाक्रममुखावधानाध्वनि ।

परिक्रमणचक्रवर्त्यभिधयाऽष्टदिग्रूढया

चचार बहुशः क्षितौ द्विजरथेन नारायणः ॥२०॥

नौका

ततः किमत आह—विधिवदिति । सुसंस्फुरद्धर्मेति । 'धर्मादनिच् केवलात्' (पा.५.४.१२४) इत्यनिच् । शिष्टं स्पष्टम् ॥१९॥

नारायणादीन् जनयामासेत्युक्तम् । तत्प्रभावं क्रमेण वर्णयति—पदक्रमेत्यादिना । *पदक्रमजटाश्च अक्षरक्रमपदक्रमौ च आरोहणावरोहौ[1] च [2]विषमक्रमाक्रमौ च तेषां द्वन्द्वः । ते मुखे आदौ येषां तानि

मन्दरः

विधिवदिति । अनुष्ठितानि आचरितानि कर्माणि यजनादीनि येन स तथोक्तः । सुसंस्फुरन्तो धर्माः पुण्यानि आचारा वा यस्य स तथोक्तः ॥१९॥

पदेति । नारायणो नारायणावधानी । पदक्रमजटाश्च अक्षरक्रमपदक्रमौ च आरोहणावरोहौ च विषमक्रमाक्रमौ चेत्येते मुखे आदौ येषां तानि तथोक्तानि । तादृशानि यान्यवधानानि तेषामध्वनि । अत्र आरोहणाद्यवधानचतुष्टयं पदक्रम-

पाठ. १. सुतान्–मधु । २. पदक्रमपदाक्षरक्रमजटा–मधु, ख. ।

विशे. *°पदक्रमः पदाक्षरक्रमश्च जटाक्रमश्च, आरोहणावरोहणयोः विषमश्च अक्रमश्च त एव मुखं आदिः येषाम् इति–मधु ।

१. आरोहणवर्णवेषौ–मा. । २. विषमक्रमौ च-मा. ।

जित्वा रामावधानि[1]प्रवरमुरुमरुद्वेगवद्वेदचर्चा-
[2]गोष्ठ्या नारायणार्यः सदसि बुधशतैः श्लाघ्यमानाव[3]धानः ।
सन्तुष्टाद् धर्मभूपादलभत शिबिकां [4]चामरच्छत्रपूर्वं
गर्वाखर्वावधानीश्वरशरभघटागण्डभेरुण्डचिह्नम् ॥२१॥

---

नौका

यान्यवधानानि तेषामध्वनि मार्गे, अष्टदिग्रूढ्या अष्टदिक्षु प्रसिद्ध्या परिक्रमचक्रवर्त्यभिधया परिक्रमणे सञ्चरणे चक्रवर्ती इत्याख्यया। इत्थम्भावे तृतीया। तादृशनामकः सन्नित्यर्थः। नारायणः तन्नामकः पण्डितः, द्विजरथेन ब्रह्मरथेन करणेन क्षितौ बहुशो बहुधा (चचार) सञ्चरितवानित्यर्थः। अखिलवेदविदग्रणीरिति भावः ॥२०॥

पुनस्तत्प्रभावमेवाह—जित्वेति। नारायणार्यो नारायणावधानी, रामावधानिप्रवरं रामावधान्याख्यं [1]वेदविदग्र्यम्। उरुमरुद्वेगवद्वेदचर्चागोष्ठ्या उरुमरुत् झञ्झानिलः तस्य वेग इव वेगो यस्या[2] असौ, तादृशी या [3]वेदचर्चा वेदचिन्ता, तद्रूपया गोष्ठ्या संलापेन, वेदविचारेणेत्यर्थः। 'चर्चा स्थासकचिन्तयोः'(र.पं.२७९)। 'सभासंलापयोर्गोष्ठी' इति च रत्नमालायाम् (पं. ३७४)। जित्वा विजित्य

---

मन्दरः

जटानां वर्णानां चेति योज्यम्। परिक्रमणे निःसन्देहसञ्चारे चक्रवर्ती इत्यभिधया अभिख्यया अष्टसु दिक्षु रूढया प्रसिद्ध्या सत्या, बहुशो अनेककृत्वः, द्विजरथेन ब्रह्मरथेन क्षितौ चचार। नारायणस्य द्विजरथसञ्चारः *समुचित एवेति भावः॥२०॥

जित्वेति। नारायणार्यो नारायणावधानी। उरुमरुतो महावायोः वेग इव वेगो यस्याः सा तथोक्ता। तादृशी या वेदचर्चा वेदवादः तद्रूपया गोष्ठ्या सम्भाषणेन। 'चर्चा स्थासकचिन्तयोः' (र.पं.२७९)। गोष्ठी सभायां संलापे इति च

---

पाठ. १. °वधानिप्रमुख–मधु. ख.। २. गोष्टयां–मधु.। ३. °वदानः -मधु.ख.।
४. चामरच्छत्रपूर्वा–मधु.ख.।

---

टिप्प. * समुचित इति। विष्णोर्गरुडवाहनत्वादिति ध्येयम्।

---

१. वेदाग्रचं–मा.। २. यः स चासौ–मा.। ३. वेदवचनात्–मा.।

८. स्वजनकपाण्डित्यवर्णनम् --

**तस्यानुजः पर्वतनाथसूरि-**
**रासीदशेषागमपारदृश्वा ।**
**ऐकात्म्यलीलायितमादिमानां**
**षड्दर्शनीजन्मकृतां मुनीनाम् ॥२२॥**

---

नौका

सदसि आस्थाने बुधशतैः बहुबुधैः श्लाघ्यमाना[1]वधानः स्तूयमानावधानः सन् । '[2]अवदान' इति पाठे तु स्तूयमान[3]नानावृत्तकर्मा सन् (इत्यर्थः) । [4]अवदानं वृत्तकर्मेत्यर्थः । 'अव[5]दानं कर्म वृत्तम्' इत्यमरः (३.२.३) । सन्तुष्टात् परितुष्टात् [6]धर्मधूपात् धर्मराजात् चामरच्छत्रपूर्वं व्यजनातपत्रपूर्वकं शिबिकाम् आन्दोलिकाम् । गर्वेण अवधानित्वाहङ्कारेण [7]अखर्वा अकुण्ठाः । अत्युन्नता इति यावत् । याः, *अवधानीश्वरा एव शरभघटाः शरभाख्यमृगविशेषसङ्घाः [8]तासां यो गण्डभेरुण्डः विरोधिमृगविशेषः स इति चिह्नं लक्ष्म गण्डभेरुण्डबिरुदं च अलभत, प्रापेत्यर्थः ॥२१॥

इतः परं पञ्चभिः श्लोकैः पर्वतेश्वरं वर्णयति—तस्येत्यादिना । तस्य नारायणसूरिणः अनुजः पर्वतनाथसूरिः अशेषागमपारदृश्वा सकलशास्त्रान्तद्रष्टा ।

---

मन्दरः

विश्वः (४०. ६) । रामावधानिप्रवरं रामावधानिनामधेयं कञ्चन वैदिकम्मन्याग्रेसरम् । अत एव सदसि जित्वा बुधशतैः असङ्ख्यैः सङ्ख्यावद्भिः श्लाघ्यमानानि अवधानानि यस्य स तथोक्तः सन् । गर्वेण अखर्वा उच्चाः, अखर्वगर्वा इत्यर्थः । तादृग्विधा ये अवधानीश्वराः त एव शरभा मृगविशेषाः तेषां घटायाः समजस्य गण्डभेरुण्डः शरभसन्त्रासकः कश्चित् पक्षिविशेषः, स इति चिह्नं बिरुदं च । आरोहणावरोहाद्यवधानाकलनसन्तुष्टो धर्मराजः छत्रचामरान्दोलिकाभिः सह विशिष्टबिरुदं विततारेत्यर्थः ॥२१॥

तस्येति । तस्य नारायणावधानिनः । अशेषाणामागमानां शास्त्राणां पारदृश्वा पारदर्शी । अत एव षड्दर्शनीजन्मकृतां षट्छास्त्रकारिणाम् । 'दर्शनं

---

विशे. * 'गर्वेण अखर्वो महाभिमानी योऽवधानीश्वरः स एव शरभघटा' इति मधु. ।

---

१. नापदा सन्–मा. । २. अवधान–मा. । 3. स्तूयमानानवृत्त–मा. । ४, ५. °अपदानं–मा. । ६. धर्मभूतात्–मा. । ७. खर्वा–मा. । ८. तेषां–मा. ।

### नौका

सकलशास्त्रज्ञ इति यावत्। दृशेः क्वनिप् (पा.३.२.९४)। आसीत्, अज-[1]नीत्यर्थः। किं बहुनेत्याह—षड्दर्शनीति। षण्णां दर्शनानां पाणिन्यादि-प्रस्थानानां समाहारः षड्दर्शनी।

पाणिनेर्जैमिनेश्चैव व्यासस्य कपिलस्य च।
कणादस्याक्षपादस्य दर्शनानि षडेव हि॥

इत्याहुः। 'द्विगोः' (पा. ४.१.२१) इति ङीप्। तस्या जन्मकृतां तदुत्पादकानाम्। 'दर्शनं दर्पणस्वप्नबुद्धिशास्त्राक्षिदृष्टिषु' इति रत्नमाला (पं. १६९९)। आदिमानां प्राथमिकानां मुनीनां पाणिन्यादीनाम् (ऐकात्म्य[2]लीला-यितम्)। पर्वतेशेनेति शेषः। ऐकात्म्यलीलायितम्—[3]एकात्मैव ऐकात्म्यम् एकस्वरूपम्। चातुर्वर्ण्यादित्वात् स्वार्थे [4]ष्यञ्। तस्य लीला [5]सेव आचरित-मित्यर्थः। आचारक्यबन्ताद् भावे क्तः। सकलशास्त्रसिद्धान्तप्रवर्तकानामवतार एवायमिति भावः। अत्र असम्बन्धे सम्बन्धरूपातिशयोक्तिः॥२२॥

---

### मन्दरः

दर्पणस्वप्नबुद्धिशास्त्राक्षिदृष्टिषु' इति रत्नमाला (पं.१६९९)। मुनीनां पाणि-न्यादीनाम्। ऐकात्म्येन एकात्मतया ऐकात्म्यस्य वा या लीला तस्या आचरणम् ऐकात्म्यलीलायितम् आसीत्। पाणिनिप्रभृतयः षडपि शास्त्र-कर्तारः सम्भूय पर्वतनाथसूरिरूपेण ऐक्यलीलामवापुः। अन्यथा कथं तस्य तादृशं निखिलशास्त्रनिष्णातत्वमिति भावः। अत्र ऐकात्म्यलीलायितमित्यतिशयोक्त्या एकैकागमपारीणेभ्यः पाणिन्यादिभ्यः तस्याधिक्यप्रतीतेः व्यतिरेको व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः।

पाणिनेर्जैमिनेश्चैव व्यासस्य कपिलस्य च।
कणादस्याक्षपादस्य दर्शनानि षडेव हि॥

इति स्मरणात्॥२२॥

---

१. अजनित्यर्थः—मा.। २. त्रुटितमत्र—मा.। ३. एकात्म्येव—मा.। ४. ष्यन्—मा.। ५. सैव—मा.।

एकं कोऽपि सुदर्शनं भ्रमकरं पाणौ ललाटे [1]दधौ
कश्चित् कामविघातुकं[2] पदतले कश्चिच्छिवक्षोभकम् ।
निःशेषभ्रमभञ्जिकां शिवकरीं कामप्रदां पर्वता-
धीशार्यः समदर्शयद् रसनया षड्दर्शनीमद्भुतम्[3] ॥२३॥

---

**नौका**

इममेवार्थं भङ्ग्यन्तरेणाह—एकमिति । कोऽपि कश्चित् । विष्णुरिति यावत् । भ्रमकरं भ्रमिजनकम् । एकमेव सुदर्शनं चक्रं सच्छास्त्रं [1]च पाणौ हस्ते अदधत् धृतवान् । कश्चित् शिवोऽपि कामविघातुकं कामविहननशीलम् । 'लषपतपद०' (पा. ३.२.१५४) इत्युकञ् । (सु)दर्शनं वह्निरूपां[2] दृष्टिं शास्त्रं च ललाटे अदधत् । कश्चिद् गौतमोऽपि शिवक्षोभकं सुखविघातकं [3]सुदर्शनं नेत्रं शास्त्रं च पदतले पादे अदधत् । तस्य अक्षपादत्वादित्यर्थः । पर्वताधीशार्यस्तु, निःशेषभ्रमभञ्जिकां निःशेषं यथा तथा (भ्रमभञ्जिकां)

---

**मन्दरः**

अशेषागमपारदर्शित्वमेवाविष्करोति—एकमिति । कोऽपि कश्चित् । एकं, न द्वे, न त्रीणि च । भ्रमकरं भ्रान्तिजनकम् । सम्यगबुद्धमिति यावत् । सुदर्शनं शास्त्रं पाणौ दधौ । अवलोकितुं करे चकारेत्यर्थः । वस्तुतस्तु कोऽप्यनिर्वाच्यो हरिः भ्रमकरं भ्रमिजनकं सुदर्शनं चक्रम् । तथा कश्चित् पुमान् कामस्याभिलाषस्य विघातुकं सम्यक्संस्काराभावान्नाशकं सुदर्शनं ललाटे दधौ । सन्दिग्धत्वात् सन्दर्शनाय नयनसमीपेऽदीधरदित्यर्थः । अन्यत्र कश्चित् महामहिमशाली हरः कामविघातुकं मदनदाहकं सुदर्शनं नेत्रम् । तथा कश्चित् पुमान् शिवक्षोभकं कल्याणभञ्जकम् । अपरिशीलितत्वात् काले फल-विघातुकमित्यर्थः । अत एव पदतले (दधौ) । 'बहोः कालादभ्यस्तमिदं धिक्' इत्यमर्षाद् अङ्घ्रितलेनाचिक्षिपदित्यर्थः । अन्यत्र तु कश्चिद् भृगुगोत्रोत्पन्नः

---

पाठ. १. ललाटेऽदधत्–नौका, क. । २. विघातकं–मधु, ख. । ३. अद्भु-ताम्–मधु. ।

---

१. कृपाणौ–मा. । २. °रूपं–मा. । ३. कुदर्शनं–मा. ।

वाग्मित्वद्युतिशुद्धिविष्णुभजनाभीष्टार्थविश्राणनैः
यस्मिन्[1] विस्मयमावहत्यहिपतौ नित्यैकता वारिता ।
द्वित्वं पुष्पवतोः कृशानुषु गतं त्रित्वं चतुष्ट्वं चिरा-
दुत्सन्नं सनकादिषु प्रशमितं पञ्चत्वमिन्द्रद्रुषु ॥२४॥

---

नौका

[1]निखिलसन्देहनिवर्तिकाम् । शिवकरीं शुभप्रदां, कामप्रदाम् इष्टार्थप्रदां षड्-दर्शनीं दर्शनषट्कं रसनया जिह्वया समदर्शयत् दर्शयामासेति अद्भुतम् । तथा च शिवादीनां दुष्टैकैकदर्शनवत्त्वेन अस्य च निर्दुष्ट(नैकदर्शन)वत्त्वेन व्यतिरेक-प्रतीतेः स एवालङ्कारः ॥२३॥

वाग्मित्वेति । वाग्मित्वं वक्तृत्वं, द्युतिः कान्तिः, शुद्धिः शुचित्वं, विष्णुभजनं विष्णुपूजा, अभीष्टार्थविश्राणनम् अभीष्टार्थप्रदानं च । एतैः समस्तैः

---

मन्दरः

शिवक्षोभकं त्रिलोचनत्रासजनकं सुदर्शनं नेत्रं पदतले पादाधःप्रदेशे दधौ । कदा-चित् कुतूहलेन कात्यायनीसहितः कान्तारसञ्चारविहारवशात् आगतो हरः कार्यान्तरव्यासङ्गेन आत्मानमलक्षी(क्ष्यी)कृत्यावस्थितं तं भस्मसात्करोमीति विस्तारितभालाक्षः, ततः सक्रोधे समुत्क्षिप्ताङ्घ्रितलस्थिताक्षिपावकज्वालावलीढ-रोदोवकाशे तस्मिन्, कान्तया सह कान्दिशीकोऽभूदिति कथाऽत्रानुसन्धेया । निःशेषश्रमभञ्जिकाम् अन्तेवासिनामशेषसन्देहहारिणीम् । रसनया नयनानि अदर्शयदद्भुतमिति विरोधः । शास्त्रषट्कमपि जिह्वाग्रगतमभूदित्यविरोधः । अत एव विरोधाभासोऽलङ्कारः । 'आभासत्वे विरोधस्य विरोधाभास इष्यते' ( कु. ३३ ) इति लक्षणात् । श्लेषानुप्राणितो व्यतिरेकश्लेषनयोः संसृष्टिः ॥२३॥

वाग्मित्वेति । यस्मिन् पर्वताधीशे वाग्मित्वादिभिः पञ्चभिर्गुणैः विस्मयम् आवहति कुर्वति सति । अहिपतौ शेषे नित्या वाग्मित्वे विषये सहजा

---

पाठ. १. अस्मिन्–मधु, तस्मिन्–ख.

---

१. °सन्देहनिर्गतनिल–मा.

**नौका**

गुणैः, यस्मिन् पर्वतेशे विस्मयमाश्चर्यमावहति दधाने सति। तद्गुणयुक्ते सतीत्यर्थः। अहिपतौ फणीन्द्रे नित्यैकता 'अयमेव, [1]न वक्ताऽन्यः' इति (प्रसिद्धं) नित्यैकत्वं वारिता निवारिता। ततोऽप्यधिकस्य [2]वक्तुरस्य सत्त्वादिति भावः। पुष्पवतोः दिवाकरनिशाकरयोः। 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः (१. ३. १)। द्वित्वं 'इमावेव दीप्तिमन्तौ द्वाविति प्रसिद्धिः' गतं नष्टम्। तद्वद्दीप्तिशालिनस्तृतीयस्यास्य सत्त्वादित्यर्थः। अपि च (कृशानुषु) आहवनीयादिषु [3]अग्निषु त्रित्वम् 'एत एव त्रयः परिशुद्धाः' इति त्रित्व(प्रसिद्धिः) चेति गतं नष्टम्। चतुर्थस्यास्य सद्भावादिति भावः। एवं सनकादिषु सनक-सनन्दन-सनत्कुमार-सनत्सुजातेषु चतुष्ट्वम्। 'एते चत्वार एव वैष्णवाः' इति चतुष्ट्वप्रसिद्धिः चिरात् चिरकालस्य उत्सन्नं विगलितम्। ततोऽप्य(न्य)स्य पञ्चमस्य स्थितेरित्यर्थः। किञ्च इन्द्रद्रुषु सन्तानादिषु सुरपादपेषु पञ्चत्वम्। 'एत एव पञ्चेष्टप्रदाः' इति पञ्चसङ्ख्या प्रशमितं निरस्तम्। तद्वदिष्टप्रदस्यो[4]त्कृष्टस्यास्य दृष्टत्वादित्यर्थः। अत्र वाग्मित्वादीनामहिपत्यादिभिर्यथासङ्ख्यमन्वयाद् यथा-सङ्ख्यमलङ्कारः। तादृशगुणसम्बन्धेऽपि [5]असम्बन्धोक्तेरतिशयोक्तिश्च। तया चास्य शेषादिव्यतिरेको व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥२४॥

---

**मन्दरः**

एकता वारिता। पुरा वाग्मित्वप्रस्तावे शेष एवाग्रगण्योऽभूत्, अद्य त्वेतस्यापि तादृशत्वात् सोऽयं च इति द्वयोर्गणनायां, बहोः कालाद् रूढमहिपतेरेकत्व-मन्तरितमित्यर्थः। एवमग्रेऽपि योज्यम्। नित्येतिपदं लिङ्गपरिणामेन अग्रे वाक्यचतुष्टयेऽप्यन्वेति। वारितेति पदमप्येवं वाक्यद्वयेऽपि। सनकादिषु सनक-सनन्दन-सनत्कुमार-सनत्सुजातेषु। अत्र वाग्मित्वादीनामहिपतिप्रभृतिभिः सह क्रमेण सम्बन्धाद् यथासङ्ख्यमलङ्कारः। तेषु प्रत्येकमेकैकगुणशालित्वम्, अस्य तु निखिलगुणाश्रयत्वमिति व्यतिरेकश्चेति अनयोः संसृष्टिः ॥२४॥

---

१. वक्ता स सन्नित्येकत्वं—मा.। २. वस्तुकस्य—मा.। ३. पत्नीषु—मा.। ४. °प्रदादिति—मा.। ५. °पि सम्बन्धोक्ते—मा.।

**येन स्वैरमभाणि पाणिनिमतं प्राणादि काणादवाग्-**
**गुम्भे स्पष्टमघट्टि भट्टगुरुवागुट्टी¹किते कुट्टिमे ।**
**निःशङ्कं निरटङ्कि शङ्करमतं चाक्षोदि चाक्षाङ्घ्रिवाग्-**
**ध्वन्यध्वन्युदलास्यखण्डि निखिला पाषण्ड²षण्डाटवी ॥२५॥**

---

नौका

'षड्दर्शनीं रसनया समदर्शयत्' इत्युक्तम् । तदेव विवेचयति—येनेति । येन पर्वतेशेन पाणिनिमतं पाणिनिशास्त्रं स्वैरं यथेच्छम् यथा तथा अभाणि भणितम् । काणादवाग्गुम्भे काणादतन्त्रे प्राणादि प्रणदितम् । येनेति सर्वत्र सम्बन्धः । भट्ट(गुरु)वागुट्टीकिते वार्तिककारप्रभाकरयोः वाग्भिः उट्टीकिते उट्टङ्किते । उत्पूर्वात् '¹टीकृ गतौ' (धा.पा. २०४) इत्यस्मात् धातोर्निष्ठा-प्रत्ययः । तादृशे कुट्टिमे निबद्धस्थले । भट्टप्राभाकरतन्त्र इति यावत् । स्पष्टं यथा तथा अघट्टि घट्टितम् । शङ्करमतं शाङ्करभाष्यादि निःशङ्कं यथा तथा निरटङ्कि निष्टङ्कितम् । अप्रतिघातं कृतमित्यर्थः । अक्षाङ्घ्रेर्वाक् गौतमनयश्च अक्षोदि चूर्णिता । किञ्च ध्वन्यध्वनि अलङ्कारनये उदलासि उल्लसितम् । (निखिला)अखिल(ला)पाष(ण्डष)ण्डाटवी पाषण्डा एव षण्डाटवी निष्फला-रण्यम् । अखण्डि खण्डिता इत्यर्थः । सर्वतन्त्रस्वतन्त्र इति भावः । अत्र 'अभाणि' इत्यादौ सर्वत्र यथायोगं कर्मणि भावे च लुङ् । 'चिण्भावकर्मणोः' (पा. ३.१.६६) इति ²च्लेश्चिणि णिद्भावाद् यथायोगं वृद्धिगुणौ । 'उपसर्गाद-

---

मन्दरः

येनेति । येन पर्वताधीशेन पाणिनेर्मतं, तत्प्रणीतं शास्त्रमित्यर्थः । स्वैरं यथेच्छमभाणि व्यक्तं भणितम् । स्वभ्यस्तमिति यावत् । 'येन' इति सर्वत्राग्रेऽन्वेति । काणादः कणादसम्बन्धी यो वाग्गुम्भः तस्मिन् । प्राणादि प्रणदितम् । काणादप्रणीतं शास्त्रं सम्यगधीतमित्यर्थः । भट्टस्य आचार्याणां, गुरूणां प्रभाकरस्य च वाग्भिः उट्टीकिते निर्मिते कुट्टिमे निबद्धपद्धतौ । भाट्टप्राभा-करयोरित्यर्थः । स्पष्टं यथा तथा अघट्टि घट्टितम् । तयोरपि परिश्रमः कृत इत्यर्थः । शङ्करमतम् अद्वैतमतभाष्यं निःशङ्कं निःसंशयं यथा तथा निरटङ्कि अभेदि । निर्मथितमिति यावत् । अक्षाङ्घ्रेः गोतमस्य वाग् विद्या च अक्षोदि चूर्णिता परिशीलिता इति यावत् । ध्वनीनामध्वनि ध्वनिमार्गे उदलासि उदनर्ति । अलङ्कारशास्त्रमा-

---

पाठ. १. गुट्टङ्किते—मधु. । २. खण्डाटवी—ख. ।

---

१. टीकृ गादित्यस्मात्—मा. । २. च्लेश्चिणि चिद्भावात्—मा. ।

**यो वादेन जनार्दनाह्वयबुधं मध्येविपश्चित्सभं**
**जित्वाऽविन्दत वादि[१]केसरिपदं प्रौढं तदीयं स्वयम् ।**
**मायावादिभयङ्कराख्यविरुदादत्यूर्जिता[२]दार्जितात्**
**किञ्चोदञ्चयति स्म कीर्तिमतुलां [३]प्रच्यावयन् वैष्णवम् ॥२६॥**

नौका

समासेऽपि' (पा. ८.४.१४) इति णत्वम् । 'चिणो लुक्' (पा. ६.४.१०४) इति तलोपः ॥२५॥

य इति । यः पर्वतनाथः । मध्येविपश्चित्सभं विपश्चित्सभामध्ये । 'पारे मध्ये षष्ठ्या वा' (पा. २.१.१८) इति समासः । वादेन शास्त्रगोष्ठ्या, जनार्दनाह्वयबुधं कञ्चन पण्डितं जित्वा तदीयं जनार्दनसम्बन्धि प्रौढं 'वादिकेसरि' पदं वादिकेसरीति चिह्नम् । 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः (३.३.९२) । स्वयं पर्वतेशः अविन्दत प्राप्तवान् । 'विद्लृ[१] लाभे' (धा. पा. १४३३) (इत्यस्मात् )लङ् । 'शे मुचादीनाम्' (पा. ७.१.५९) इति [२]नुमागमः । किंच अत्यूर्जितात् ,(आर्जितात् )सम्पादितात् । मायावादिभयङ्कराख्य-विरुदात् मायावादिनोऽद्वैतिनः, तेषां भयङ्कर इत्याख्या यस्य तत् तथाविधं विरुदं चिह्नं तस्मात् । कञ्चन वैष्णवं प्रच्यावयन् च्युतिं प्रापयन् । कस्य-चिद् वैष्णवस्य[३] 'मायावादिभयङ्करः' इति ख्यातिं निरास्यदित्यर्थः । अतुलाम् असमानां कीर्तिम् उदञ्चयति (स्म), वर्धयति स्मेत्यर्थः* ॥२६॥

मन्दरः

कलितमित्यर्थः । पाषण्डा* एव षण्डाटवी शून्यारण्यम् । अखण्डि खण्डिता । पाषण्डवादाः परिहृता इत्यर्थः । अत्र वृत्त्यनुप्रासः ॥२५॥

य इति । यः पर्वतेश्वरसुधीः । वादिकेसरीति पदं बिरुदं स्वयम् अविन्दत । अत्यूर्जितात् अतिरम्यात् स्वसामर्थ्यसम्पादितात् । मायावादिनाम् अद्वैतिनां भयङ्कर इत्याख्या यस्य तस्मात् बिरुदात् वैष्णवं रामानुजमतानुवर्तिनं विद्वांसं प्रच्यावयन् प्रच्युतिं नयन् सन् । कीर्तिमुदञ्चयति स्म अभजत ॥२६॥

पाठ. १. °केशरि–मधु. । २. तार्दजिताम्–मधु,ख. । ३. प्रख्यापयन्–मधु,ख. ।

१. विदिर्–मा. । २. मुमागमः–मा. । ३. विष्टपस्य–मा. ।

विशेषः. *'मायावादिनः द्वैतवादिनः तेषां भयङ्कर' इति आख्या नाम यस्य तादृशात् बिरुदात् गद्यपद्यमयग्रन्थविशेषात् अर्जितां सम्पादितां कीर्तिमुदञ्चयति स्म प्रकाशयति स्म । किं कुर्वन्नित्याह–वैष्णवं परमार्थमतं प्रख्यापयन् । कीदृशात् बिरुदात् ? अत्यूर्जितात् अमोघयुक्तिविशिष्टात्' इति मधु. । * 'पाषण्डषण्डा बौद्धसमूहाः त एव अटवी अरण्यम्'–मधु. ।

९. स्वकनिष्ठपितृव्यरामपण्डितपाण्डित्यवर्णनम् —

आटोपोद्भटनाट्यधूर्जटिजटाकोटीरकोटीनटद्-
गङ्गातुङ्गतरङ्गरिङ्गणभरप्रस्पर्धिवाग्वैभवः ।
सोऽयं स्वप्रतिभादृषन्निकषणप्रोद्दीप्तषड्दर्शनी-
रत्नस्रङ्मयकन्धरो [1]यदनुजो रामाह्वयः पण्डितः ॥२७॥

नौका

इत्थं पर्वतनाथमुपवर्ण्य रामाह्वयं पण्डितं वर्णयति—आटोपेति । आटोपेन संरम्भेण उद्भटं नाट्यं यस्य तस्य धूर्जटेः शिवस्य । 'धूर्जटिर्नीललोहितः' इत्यमरः (१.१.३३) । जटाकोटीरस्य जटामौलेः कोट्याम् अग्रे[1] नटन्त्या गङ्गाया ये तुङ्गतरङ्गा उन्नतवीचयः तेषां यद् रिङ्गणं चलनं तस्य यो भरोऽतिशयः । 'भरोऽतिशय[2]भारयोः' इति विश्वः (९९.६) । तस्य प्रस्पर्धी तद्विजेता वाग्वैभवो वाग्विलासो यस्य स तथोक्तः । किञ्च स्वस्य प्रतिभा बुद्धिविशेषः सैव दृषत् शाणशिला तत्र निक[3]षणेन उत्तेजनया प्रोद्दीप्तानि प्रकाशमानानि । [4]षड्दर्शनी पाणिन्यादिषट्तन्त्राणि, सैव रत्नानि तेषां स्रजा मालया [5]प्रचुरा (तन्मयी) कन्धरा[6] शिरोधिर्यस्य । प्राचुर्ये मयट् (पा. ४.३.८२) । [7]एतादृशः सोऽयं रामाह्वयः पण्डितः विजयते । सर्वोत्कर्षेण वर्तत इत्यर्थः । 'विपराभ्यां जेः'

मन्दरः

आटोपेति । आटोपेन उत्साहेन उद्भटं उत्कटं नाट्यं यस्य स तथोक्तः स चासौ धूर्जटिः तस्य जटाकोटीरं जटाजूटः तस्य कोटीषु अग्रभागेषु नटन्त्या गङ्गाया ये तुङ्गतरङ्गाः(उन्नत)कल्लोलाः तेषां रिङ्गणभरेण चलनातिशयेन प्रस्पर्धि, तत्सदृशमित्यर्थः । तादृशं वाग्वैभवं वाग्रचना यस्य स तथोक्तः । स्वस्य प्रतिभा बुद्धिविशेष एव दृषत् शाणोपलः तस्यां निकषणेन घर्षणेन प्रोद्दीप्ता या, षड्दर्शनी [8]एव रत्नस्रक् रत्नमाला तन्मयी कन्धरा यस्य स

पाठ. १. विजयते—नौका. ।

१. अवलौ—मा. । २. °भावयोरित्यमरः—मा. । ३. निकर्षणेन—मा. । ४. षड्दर्शन्यः—मा. । ५. प्रचुरः —मा. । ६. कन्धरः शिराधिवयस्य—मा. । ७. एतादृशे—मा. । ८. सैव—मा. ।

१०. स्वजननीजनकनामकीर्तनेन स्वाभिजात्यं संसूच्य ग्रन्थनामतत्प्रयोजननिर्देशः---

तस्मात् पर्वतनाथसूरिजलधेः श्रीयल्लमाम्बावियद्-
गङ्गासङ्गजुषो लसद्गुणमणेर्लब्धोदयश्चन्द्रवत् ।
सोऽहं धर्मसुधीर्गवां विलसितैः कर्तुं रसालङ्क्रिया-
संस्फूर्तिं समुदञ्चयेयमधुना साहित्यरत्नाकरम् ॥२८॥

---

नौका

(पा. १.३.१९) इति तङ् । अत्र पूर्वार्धे उपमावृत्त्यनुप्रासौ । उत्तरार्धे रूपकम् । एतेषां नैरपेक्ष्यात् संसृष्टिः ॥२७॥

इत्थं महता प्रबन्धेन कविः सप्रपञ्च(मन्वयक्रम)मुपवर्ण्य स्वोत्पत्तिकथनपूर्वकं स्वनाम सङ्कीर्तयन् करिष्यमाणग्रन्थस्य नाम निर्दिशति—तस्मादिति ॥

---

मन्दरः

तथोक्तः* । स प्रसिद्धः अयं रामाह्वयः पण्डितः यस्य पर्वताधीशस्य अनुजः । अत्र उपमावृत्त्यनुप्रासपरम्परितरूपकाणां संसृष्टिः ॥२७॥

एवमन्वयपरम्परां तत्पौरुषप्रकटनपूर्वकमभिधाय सम्प्रति स्वाभिधानं सानुबन्धसूचनेन निबन्धनामाभिधानेन सममाख्याति—तस्मादिति । एतच्छ्लोकमारभ्य अपव्याकर्तृभयात् मन्दमनीषानुजिघृक्षया तत्र तत्र कविरेव व्याकरोति लसन्तो गुणा दातृत्वधैर्यधर्मादय एव मणयो यस्य तस्मात् । चन्द्रवत् चन्द्र इव शिष्टं स्वयमेव स्पष्टीकृतम् ॥

---

विशेष. * 'इह यद्यपि निकषोपलनिकषणेन निष्कलङ्कत्वोल्लेखः तादृशरत्नेषु न सम्भवति तथापि मालोल्लेखात् सुवर्णं विना तादृशमणिमालाया अप्रसिद्धत्वान्न कश्चिद् विरोधः'—इति मधु. ।

अत्र [1]कविपक्षे गवां विलसितैर्वचसां विलासैः। रसालङ्क्रियासंस्फूर्तिं, रसा वक्ष्यमाणा शृङ्गारादयः, [2]अलङ्क्रिया उपमादयः। इदं गुणादीनामुपलक्षणम्। तासां संस्फूर्तिं निरूपणं कर्तुं साहित्यरत्नाकरं नामालङ्कारग्रन्थं समुदञ्चयेयं निर्मास्यामि[3] इत्यर्थोऽवगन्तव्यः[4]॥

चन्द्र[5]पक्षे गावः किरणाः। रसालङ्क्रियासंस्फूर्तिं, रसा भूमिः, तस्या अलङ्क्रियाया रत्नाकरात्मिकाया मेखलायाः संस्फूर्तिं शोभाम्। समुदञ्चनं वर्धनम्। रत्नाकरस्य महीमेखलात्वं 'भूतधात्र्यब्धिमेखला' इति नैघण्टिकवचनादवगन्तव्यम्॥

---

नौका

श्लोकमिमं स्वयमेव विवृण्वन् अलङ्कारादीन् निश्चिनोति—अत्र कविपक्षे इत्यादिना। गवामिति। 'गौर्नाके वृषभे चन्द्रे वाग्भू[6]दिग्धेनुषु स्त्रियाम्' इति रत्नमाला (६४)॥

रसा भूमिरिति। 'रसा विश्वम्भरा स्थिरा' इत्यमरः (२.१.२)। ननु समुद्रस्य महीमेखलात्वे किं मानम्? अत आह—रत्नाकरस्येति॥

---

मन्दरः

अत्रेति।

---

पाठ. १. 'अत्र कविपक्षे गवां वचसां विलसितैर्विलासैः। रसानां वक्ष्यमाणशृङ्गारादीनाम्, अलङ्क्रियाणाम् उपमादीनाम्। उपलक्षणेन गुणादीनामपि ग्रहणम्। 'संस्फूर्तिं निरूपणं कर्तुं' इत्यादि–मधु.। २. अलङ्क्रिया नाम–ख.। ३. निर्मास्यामीत्यवगन्तव्यम्–ख.। ४. बोध्यः–मधु.। ५. 'चन्द्रस्तु गवां किरणानां विलसितै रसाया भूमेः अलङ्क्रियाया [रत्नाकरात्मिकाया मेखलायाः] संस्फूर्तिं शोभां कर्तुं रत्नाकरं समुदञ्चयति वर्धयति। रत्नाकरस्य महीमेखलात्वे 'भूतधात्र्यब्धिमेखला' इति निघण्टुकवचनमेव प्रमाणम्' इति मधु.। ६. 'वाग्भूधेनुषु श्रियामिति वा ....'–मा.।

अत्र[1] चन्द्रवदहमपि गोविलासै रसालङ्कारसंस्फुरणाय रत्नाकरमुदश्चयेयमित्युपमा। सा च चन्द्रवत् इति तद्वाचकवते[2]रुपादानाच्छ्रौती। 'पर्वतनाथसूरिजलधेः' 'यल्लमाम्बावियद्गङ्गा°' 'लसद्गुणमणेः' इत्यत्र[3] त्रयो रूपकालङ्काराः। गवां[4] रसालङ्क्रियासंस्फूर्तिमित्यत्र[5] त्रयः श्लेषाः[6]। किरणभूमिभूषणानां वचनशृङ्गाराद्युपमादिभ्यो भेदेऽपि श्लेष[7][श्लिष्ट]शब्दबलेनाभेदाध्यवसायाद् भेदेऽभेदरूपातिशयोक्तिश्च। सर्वैरेतैरुपमाऽनुप्राणितेति

## नौका

तद्वाचकवतेरिति। इवार्थे विहितस्य वतिप्रत्ययस्य उपमावाचकत्वादिति भावः। श्रौतीति। यद्यपि चन्द्रवदित्यत्र चन्द्रेण तुल्यं चन्द्रवदिति तुल्यार्थे 'तेन तुल्यं क्रिया चेद्वतिः' (पा. ५.१.११५) इति विहितस्य वतेः[1] धर्मिव्यवधानेनैव सादृश्यप्रतिपादकतया उपमाया [2]आर्थीत्वमेव, न तु श्रौतीत्वम्। 'तत्र तस्येव'[3] (पा. ५.१.११६) इति वतिस्त्वनुपपन्नः। अहमित्युपमेयस्य प्रथमान्तत्वात्। तथाप्यस्या उपमायाः श्रौतीत्वं[4] विचारणीयम्। आर्थीति चेत् पाठः साधीयान्। त्रयः श्लेषा इति। अर्थश्लेषा इत्यर्थः। अत्र [5]संस्फूर्तिमित्यत्रापि श्लेषसत्त्वात् चत्वार इति वक्तव्ये त्रयः

## मन्दरः

तद्वाचकवदुपादानात् उपमावाचकवत्प्रत्ययोपादानात्। 'वत्तुल्ये' (सा. प्र. १९.९)। तुल्ये सादृश्येऽर्थे वत्प्रत्ययो भवतीति सारस्वतप्रतिपादितप्रक्रियया अस्यापि वत्प्रत्ययस्य साक्षात् सादृश्यवाचकत्वात् श्रौतीत्वम्। एतेन 'श्रौतीति चिन्त्यम्, आर्थीति युक्तम्' इति कविहृदयापरिज्ञाननिदानं कस्यचिद्

---

पा०-१. अत्र चन्द्रवदहमपि रसालङ्क्रियास्फुरणीय (°णाय) रत्नाकरं समुदञ्चयेयमित्युपमा—मधु.। २. तद्वाचकवदुपादानात्—मन्दर। ३. °त्यत्र च—मधु.। ४. गवां विलसितै रसा°—मधु.। ५. किरणभूमिभूषणरूपार्थान्तरसत्तया त्रयः श्लेषाः—मधु.। ६. श्लेषालङ्काराः—ख.। ७. शब्दश्लेषबलेन-मधु.।

---

१. वतिः—मा.। २. आर्थित्व—मा.। ३. तस्यैव—मा.। ४. श्रौतित्वं—मा.। ५. सन्नतिमि—मा.।

तस्यास्तेषां च अङ्गाङ्गिभावेन सङ्करः। इतरेषां तु संसृष्टिः*। लक्षणानि तु[1] उपरिष्टाद् वक्ष्यन्तेऽलङ्कारतरङ्गे ॥

---

नौका

इत्युक्तिः प्रौढवादेनेति ध्येयम्। भूषणानामिति। स्फूर्तेरप्युपलक्षणम्। इतरेषां त्विति। रूपकाद्यलङ्काराणामुपमाद्यतिरिक्तानां परस्परनैर[1]पेक्ष्यात् तिलतण्डुलवत् संसृष्टिरिति भावः ॥

---

मन्दरः

व्याख्यानमपास्तम्। इतरेषामुपमाव्यतिरिक्तानां रूपकादीनां तु संसृष्टिः। परस्परनैरपेक्ष्येण तिलतण्डुलवत् समावेशात् ॥

---

पाठ. १. न पठ्यते-ख.।

---

१. नैरपेक्षणात्-मा.।

---

टिप्प. * धरणिपस्तरुणारुणविक्रमस्तरणिवंशपयोनिधिचन्द्रमाः।
विकचवारिरुहायतलोचनो नरमणी रमणीयवपुर्मुदे ॥

तत्तद्विवेचनीया विषया हि मया विवेचनासरणिम्।
नीयन्ते सरसधियां मनःप्रमोदाय पण्डिताग्र्याणाम् ॥

साहित्यार्णवरत्नादितत्त्वं चावबुभुत्सताम्।
सुखबोधाय बालानां विवेकस्य च वृद्धये ॥

त्रयो रूपकालङ्कारा इत्यादि। वस्तुतस्तु न तावत् 'पर्वतनाथसूरिजलधे रित्यादावभेदविवक्षया विशेषणसमासः। तथात्वे चन्द्रवदिति 'चन्द्रसादृश्योक्तिरसङ्गता स्यात्। यतो हि जलध्यादितादात्म्यसाधकमस्मच्छब्दाभिधेयस्य चन्द्रतादात्म्यं, न तु चन्द्रसादृश्यम्। पर्वतनाथसूरिजलध्योर्धर्मिणोरौपम्ये तु अस्मच्छब्दाभिधेयचन्द्रयोरपि तद्धर्मयोः सादृश्योक्तिः सुसङ्गता स्यादिति उपमितसमास एवात्रोचितः।

तथा चोक्तं रसगङ्गाधरे समासगतवाचकधर्मलुप्तोपमोदाहरणप्रसङ्गे —

'शोणाधरांशुसम्भिन्नै तन्वि ते वदनाम्बुजे।
केसरा इव काशन्ते कान्तदन्तालिकान्तयः ॥

अत्र वदनाम्बुजयोरभेदविवक्षया विशेषणसमासे दन्तालिकान्तीनां केसरसादृश्योक्तिरसङ्गता स्यात्। यतो ह्यम्बुजतादात्म्यसाधकं दन्तालिकान्तीनां केसरतादात्म्यं,

टिप्प.–

न तु केसरसादृश्यम् । उपमितसमासे तु वदनाम्बुजयोर्धर्मिणोरौपम्ये केसरदन्तालि-कान्तीनामपि तद्धर्माणामौपम्योक्तिरुचितैव,' इति ।

अथापि युज्येत विशेषणसमासाश्रयणं, यदि तत्र किमपि लिङ्गं स्यात् । यथात्र —

'पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ ।
अथ नागयूथमलिनानि जगत् परितस्तमांसि परितस्तरिरे ॥'
[शिशु. ९.१८]

व्याख्यातं च मल्लिनाथसूरिभिः —

"अत्र यद्यपि 'नागयूथमलिनानि' इत्युक्त्याऽनुशासनसिद्धोपमानुसारात् 'पतङ्ग-मृगराजि' इत्यत्राप्युपमितसमासाश्रयणेनोपमैवोचिता तथापि तदुत्प्रेक्षायाः पतङ्गेऽसम्भवात् सिंहे सम्भवाच्च रूपकमेव युक्तम्" इति ।

न तथात्र किमपि तत्साधकम् ।

अतः उपमितसमासमाश्रित्योपमैवात्रोदाहर्तव्या । सा च सावयवेति ।

न च परम्परितैव किमिति न स्यादिति वक्तुं युक्तम् । अस्मत्पदार्थचन्द्रयो-रुपमायां न केवलं पर्वतनाथसूरिजलध्योरुपमैवोपायः । कविसमयसिद्धाह्लादकत्वादि-समानधर्मान्तरस्यापि विद्यमानत्वात् । 'कवीन्दुं नौमि वाल्मीकिं' 'कविकुलशशाङ्क' इत्यादिप्रयोगदर्शनाच् च । उपमाया उपमान्तरोपायत्वे परम्परिता । कविसमयसिद्ध-सादृश्येनापि तत्सिद्धौ [उपमान्तरसिद्धौ] सावयवेति ।

उक्तं हि पण्डितराजै रूपकप्रकरणे —

'यद्यपि सावयवेऽप्यारोपे आरोपान्तरस्योपायः, तथापि तत्र आरोपातिरिक्तेन कविसमयसिद्धसादृश्येनाप्यारोपान्तरसिद्धिः सम्भवति' इति । [रसगङ्गा. मालारूपक°]

ननु रूपकप्रकरणोक्तस्य कात्र सङ्गतिरिति चेन्न । यथेवादिशब्दप्रयोगारोपा-भ्यामन्यत्र तयोरुपमारूपकयोः सर्वत्र तौल्यमिति ।

तथा चोक्तं रसगङ्गाधरे —

'ययोरिवादिशब्दप्रयोगे उपमा, तयोरेकत्रान्यारोपे रूपकमिति नियमात्'

टिप्प.—
(रस. रूपक.) इति

अपि च नागेशेनाप्युक्तमुपमाप्रकरणे —

'सावयवायां परस्परसमर्थकत्वेऽपि नोपायता। *ज्योत्स्नायां हसितत्वारोपं [हसितसाम्यं] विनापि औज्ज्वल्यादिना सीतायां राकासाम्यसिद्धेः' इति।

तथा 'यल्लमाम्बावियद्गङ्गासङ्गजुषः' 'लसद्गुणमणेः' इत्यत्रापि समासभेदमाश्रित्य पर्वतनाथसूरिजलध्योरुपमा निर्वाह्येति न रूपकशङ्कावकाशः।

अपि च गवामित्यादिश्लेषस्थलेऽपि नाभेदाध्यवसायः। तस्य प्रकृतेऽननुकूलत्वात्। किं तर्हि? सादृश्याध्यवसाय एवेति। लोचनगोचरीक्रियतामत्र साहित्यमार्मिकस्य जगन्नाथस्येयमुक्तिः —

'श्लेषे ह्येकशब्दोपात्तत्वेन रूपेणाभेदाध्यवसानस्येव तेनैव साधर्म्येण सादृश्याध्यवसानस्यापि सुवचत्वात्। तस्यैव च प्रकृते प्रयोज्योपमानुकूलत्वात्' इति।

तथा च सावयवेयमुपमेति युक्तं वक्तुम्। सा च आर्थीत्येव युक्तम्। न तु श्रौती। कुत इति चेत्? उच्यते। वतिस्तु द्विविधः —'तेन तुल्यं' [पा. ५.१.११५] इति विहितः, 'तत्र तस्येव' [पा. ५.१.११६] इति विहितश्चेति। तत्राद्यः सादृश्यवदर्थकः। द्वितीयस्तु साक्षात्सादृश्यवाचकः। वतेः सादृश्यवदर्थकत्वे सादृश्यार्थत्वा(आक्षेपलभ्यत्वा)दार्थी। साक्षात्सादृश्यवाचकत्वे तु श्रौतीत्यालङ्कारिकसमयः। प्रकृते 'चन्द्रवद्' इत्यत्र वतिः सादृश्यवदर्थकः। 'अहम्'-इत्युपमेयस्य प्रथमान्तत्वेन 'तत्र तस्येव' (पा. ५-१-११५) इति विहितवतेरनुपपद्यमानत्वात्। अत एवार्थीयमुपमा। तथा चोक्तं नौकायामस्य व्याख्याने—'यद्यपि चन्द्रवदित्यत्र तुल्यार्थे 'तेन तुल्यं क्रिया चेद् वतिः' (पा. ५-१-११६) इति विहितस्य वतेः धर्मिव्यवधानेनैव सादृश्यप्रतिपादकतया उपमाया आर्थीत्वमेव। न तु श्रौतीत्वम्। 'अहम्' इत्युपमेयस्य प्रथमान्तत्वात्। तथाप्यस्या उपमाया श्रौतीत्वं विचारणीयम्। आर्थीति चेत् पाठः साधीयान्' इति।

यच्चात्र नौकामाक्षिपद्भिः मन्दराख्यव्याख्याकृद्भिरभ्यधीयत—

'चन्द्रवत् चन्द्र इव'। 'वत्तुल्ये' [सा. प्र. १९.१९]। तुल्ये सादृश्येऽर्थे वत्प्रत्ययो भवतीति सारस्वतप्रतिपादितप्रक्रियया अस्यापि वत्प्रत्ययस्य साक्षात्सादृश्यवाचकत्वात् श्रौतीत्वम्। एतेन 'श्रौतीति चिन्त्यम्, आर्थीति युक्तम्', इति कविहृदयापरिज्ञाननिदानं कस्यचिद् व्याख्यानमपास्तम्।' इति।

तत्तु सारस्वतप्रक्रियाकविहृदययोः सम्यगनवबोधनिबन्धनम्। तथा हि—

---

* ज्योत्स्नाभमञ्जुहसिता सकलकलाकान्तकान्तवदनश्रीः।
राकेव रम्यरूपा राघवरमणी विराजते नितराम्॥' [रस.साव. ३.]

इत्यत्रेत्यर्थः।

टिप्प.–

'तुल्ये सादृश्येऽर्थे वत्प्रत्ययो भवति' [सा.प्र. १९.१९] इति अनुभूतिस्वरूपाचार्यवृत्तावपि न तुल्यपदस्य साक्षात्सादृश्यवाचकत्वमभिप्रेतम्। सादृश्यं च सदृशत्वम्, तदेव तुल्यपदार्थ इति धर्मिव्यवधानेनैव सादृश्यवाचकत्वम्। जात्यादिशक्तिवादिनो हि वैय्याकरणाः।

व्याख्यातं च तथा चन्द्रकीर्तिसूरिभिरपि —

'तुल्यं सदृशत्वस्यार्थे उपमार्थे वाच्ये वत्प्रत्ययो भवति। चन्द्रेण तुल्यं सदृश चन्द्रवत्' इति ॥ [सा.प्र. १९.१९]

उक्तं च लघुभाष्येऽपि —

'वत्तुल्ये' [सा.सू. १९.१९]

'यत्तुल्या सा क्रिया चेत्। ब्राह्मणवदधीते। अश्ववद् धावति। क्रियाग्रहणमनुवर्तते। तच्च तुल्येन सम्बध्यते। क्रियायां तुल्यायामित्यर्थः। तुल्यते सादृश्येन उन्मीयते ज्ञायते। 'तुल उन्माने' [धा.पा. १६००]। यद्वा तोलनं तुला। ओरभावे भिदाद्यङ। तुलया सम्मितं तुल्यम्। कारकादिति ण्यः। यद्वा आदौ प्रत्ययोच्चारणं योगविभागार्थम्। तेन अक्रियातुल्येऽपि 'सिद्धान्तवत्' 'महानसवत् इत्यत्र 'भवितुमर्हति' इति क्रियाऽध्याहर्तव्या। क्रियां विना बोधे सत्यपि साधुत्वं न भवति। 'तेन तुल्यं क्रिया चेद्'इति पाणिन्युक्तेः [पा. ५.१.११५] इति।

अथापि प्रथमान्ताद् वतिमादाय वतेः साक्षात्सादृश्यवाचकत्वं यद्यभ्युपगम्येत तर्हि वतेरार्थीविषयत्वापहार एव स्यात्। उक्तं तु वतेरार्थीविषयत्वमप्यालङ्कारिकैः। यथा —

'तेन तुल्यं मुखम्' इत्यादावुपमेय एव, 'तत्तुल्यमस्य' इत्यादौ चोपमान एव, 'इदं च तच्च तुल्यम्' इत्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिरिति साम्यपर्यालोचनया तुल्यताप्राप्तिरिति साधर्म्यस्यार्थत्वात् तुल्यादिशब्दोपादाने आर्थी। तद्वत् 'तेन तुल्यं क्रिया चेद्वतिः' [पा. ५.१.११५] इत्यनेन विहितस्य वतेः स्थितौ' [का.प्र. १०.८७] इत्याहुस्तत्रभवन्तो मम्मटाचार्याः।

रसगङ्गाधरकृतोऽपि —

'निखिलजगन्महनीया यस्याभा नवपयोधरवत्।
अम्बुजवद् विपुलतरे नयने तद् ब्रह्म संश्रये सगुणम् ॥'

[रसगङ्गा. उपमा.]

एवं तावत् प्रारिप्सितग्रन्थपरिसमाप्तिपरिपन्थिप्रत्यूह[1]प्रशमन-पटुतया प्रयोजनवतीं[2] शिष्टाचारानुमितस्मृत्युन्नीतश्रुतिसिद्धतया प्रमाणवतीं ग्रन्थारम्भस्याङ्गभूतां प्रपञ्चितां[3] पौनःपुन्येन बहिरपि कृतां देवतानुग्रहाशंसनप्रणामरूपां[4] मङ्गलाचर्यां शिष्यशिक्षार्थमादिमेषु

---

टिप्प.—

अत्र पूर्वार्धे वतेः 'तत्र तस्येव' इति सादृश्ये विधानात् श्रौती। उत्तरार्धे 'तेन तुल्यम्' इति विधानात सादृश्यवदर्थकतया आर्थी' इति।

एवमेव साहित्यदर्पणादावपि सम्यक्तया प्रपञ्चितम्।

तथा च 'चन्द्रवत् चन्द्र इव' इति विवरणमभ्युपगम्य श्रौतीति समर्थनम-साम्प्रतमेव।

नापि ग्रन्थकृदभिप्रेतोऽयमर्थः। तेनैव वतेरार्थीविषयत्वस्यापि वक्ष्यमाणत्वात्। यथा—

'वतौ तु विशेषः'। 'तत्र तस्येव' [पा. ५.१.११६] इति सूत्रोक्तवतिः साक्षात्सादृश्यप्रतिपादकः। इवार्थत्वात्। तेन तत्रैव श्रौती। 'तेन तुल्यम्' [पा. ५.१.११५] इति वतिस्तु तुल्यं प्रतिपाद्य तन्निर्वाहाय सादृश्यमाक्षिपतीति तत्रार्थ्येव' इति। [सा.र. अर्था.]

तथा च 'तेन तुल्यम्' इति विहितवतेः सादृश्यवदर्थकत्वस्यैव सर्वसम्मतत्वा-दार्थीत्येव युक्तम्। 'श्रौती' इति मूलपाठस्तु अग्रिमग्रन्थानन्वयीति ग्रन्थकृदनभिप्रेत एव।

स्वयमबुद्ध्वा तदनवबोधं परेषु प्रक्षिपन्तो मन्दरकृतस्तु न श्रद्धेया एव।

तथा च आर्थी सावयवेयमुपमेत्येव युक्तम्॥

---

पाठ. १. प्रत्यूहशमन–ख.। २. न पठ्यते–मधु.। ३. न पठ्यते-मन्दर। प्रचरितां–मधु.। ४. °प्रवण°–मधु. ख.।

**पञ्चसु[1] श्लोकेषु निबध्यास्मिन् श्लोके प्रेक्षावत्प्रवृत्त्य[2]ङ्गभूतं विषया-द्यनुबन्धचतुष्टयमसूसुचत् ॥**

---

**नौका**

नन्विह खलु प्रेक्षावतां, 'ग्रन्थादावनुबन्धचतुष्टयं विना न प्रवर्तन्त' इति तदभावात् कथमत्र प्रवृत्तिरित्याशङ्क्य सिंहावलोकनन्यायेन पूर्वोक्तमङ्गल-कर्तव्यतायां प्रमाणं दर्शयन्, अनुबन्धचतुष्टयमत्रैव पद्ये सूचितमित्याह — एवं तावदिति । शिष्टाचारानुमितस्मृतीति । 'मङ्गलं स्मृतिसिद्धं शिष्टाचारविषय-त्वात्' इत्यनुमानेन 'समाप्तिकामो मङ्गलमाचरेत्' इति स्मृत्यनुमाने सति स्मृत्यधिकरणन्यायेन स्मृतीनां श्रुतिमूलकतयैव[1] प्रामाण्यस्य वक्तव्यतया आचारा-नुमितस्मृत्या श्रुतिरनुमीयत इति मङ्गलकर्तव्यतायामनुमितश्रुतिः प्रमाणमिति भावः । प्रपञ्चिताम् इत्यस्य पौनःपुन्येन बहिरपि कृताम् इति विवरणम् शिष्यशिक्षार्थं 'शिष्या अप्येवं कुर्वन्तु' इत्येतदर्थम् । विषयादीत्यनेन[2]

---

**मन्दरः**

एवं तावदिति । शिष्टानुचारानुमिता च, समाप्तिकामो मङ्गलमाचरेते-(दि)नि स्मृत्या उन्नीता प्रकटिता च या श्रुतिस्तत्सिद्धतया प्रमाणवतीम् । 'मङ्गलं श्रुतिसिद्धं शिष्टाचरितत्वात्' इत्यनुमानेन मङ्गलाचरणे श्रुतिरेव प्रमाणम् । स्मृतीनां श्रुतिमूलत्वस्य स्मृत्यधिकरणोक्तत्वात् श्रुतेः स्मृत्युन्नीतत्वं सिद्धमेवेति भावः । ग्रन्थारम्भस्याङ्गभूताम् । 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' (काव्यादर्श० १. १४) इति स्मरणान्मङ्गलाचरणस्य ग्रन्थारम्भाङ्ग-त्वमिति बोध्यम् । बहिः प्राक्तने जन्मनीत्यर्थः । कृताम् अनुष्ठितामपि । एतादृशग्रन्थकरणसामर्थ्यादेव पूर्वजन्माकलिताखण्डमङ्गलस्यानुमितत्वादित्या-कूतम् । तर्हि किमर्थमद्य क्रियत इत्यत्राह — शिष्यशिक्षार्थमिति । शिष्या अप्येवं सम्प्रदायाविच्छेदेन मङ्गलमाचरन्त्विति बोधार्थमित्यर्थः । प्रेक्षावतां बुद्धिमतां प्रवृत्तेरङ्गभूतं साधनभूतम् । 'प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञ-

---

पाठ. १. पञ्चश्लोकेषु–ख. । २. °वृत्तयेऽङ्ग–मधु. ।

---

१. °मूलकतयैतत्–मा. । २. बिषयावित्यनेन–मा. ।

[1]तत्र रसालङ्कारादिर्विषयः । तदवबोधः प्रयोजनम् । तत्कामोऽधिकारी । सम्बन्धश्च यथासम्भवमुन्नेयः ॥२८॥

इदानीं स्वग्रन्थे प्रेक्षावतां प्ररोचना[2]मुत्पादयितुमाह —

११. स्वकविताप्रशंसा —

विरिञ्चिवनिताकराञ्चितविपञ्चिकासञ्चरत् —
स्वरप्रसरमाधुरीरसरमाधुरीणा गिरः ।

---

**नौका**

प्रयोजनसम्बन्धाधिकारिणो गृह्यन्ते[1] । असूसुचत् सूचितवान् । सूचेर्णिजन्तात् कर्तरि लुङ् । 'णिश्रि' (पा. ३.१.४८) इति चङ् । 'णौ चङ्युपधायाः' (पा. ७.४.१) इति ह्रस्वः । 'दीर्घो लघोः' (पा. ७.४.९४) इत्यभ्यासदीर्घः । अ(षो)पदेशत्वान्न षः ॥

तदेवाह — अत्र रसेत्यादिना । तदवबोधो रसालङ्कारादिज्ञानम् । तत्कामो रसादिज्ञानकामः । उन्नेय इति । रसादीनां ग्रन्थस्य च प्रतिपाद्यप्रति[2]पादकभावः सम्बन्धः । तयोश्चावबोधस्य च जन्यजनकभाव इति ज्ञेयमिति भावः ॥२८॥

---

**मन्दरः**

प्तिचेतनाः' इत्यमरः (१. ४. १) । विषयाद्यनुबन्धचतुष्टयं विषयप्रयोजनाधिकारिसम्बन्धानित्यर्थः ॥

सम्बन्धश्चेति । तदुन्नयनप्रकारस्तु ग्रन्थविषययोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । ग्रन्थप्रयोजनयोः साध्यसाधकभावः । ग्रन्थाधिकारिणोः वाच्यवाचकभावः । विषयप्रयोजनयोर्विषयविषयिभावः । विषयाधिकारिणोर्ग्राह्यग्राहकभावः । प्रयोजनाधिकारिणोः काम्यकामुकभावश्चेति ॥२८॥

---

पाठ. १. तत्रेत्यारभ्य-उन्नेय-' इत्यन्तो ग्रन्थो न पठ्यते-मधु. । अत्र-नौका. ।
२. °मुत्पादयितु-ख. ।

---

१. गृह्यते-मा. । २. °प्रतिबाधकभावसम्बन्धः-मा. ।

जयन्ति मम मन्दरक्षुभितसिन्धुबन्धुभ्रमी —
निरर्गलविनिर्गलद्बहलभङ्गभङ्गीभृतः ॥२९॥

रसरमा[1] रससमृद्धिः । सिन्धुबन्धुः समुद्रः । भ्रम्या भ्रमणेन । इत्थम्भावे तृतीया । भङ्गास्तरङ्गाः । भङ्गी अवस्था-विशेषः । [2]अत्र विपञ्चीस्वरधर्मस्य माधुर्यस्य, तरङ्ग[3]धर्मस्य भङ्ग्याश्च

---

**नौका**

अथ कविः स्ववागतिशयं वर्णयिष्यन् [1]तद्वर्णनस्यासाङ्गत्यशङ्कां वारयति— इदानीमिति । तथा च प्रेक्षावत्प्रयोजनार्थत्वात् तद्वर्णनस्य नासङ्गतिरिति भावः ॥

विरिञ्चीत्यादि । विरिञ्चेर्ब्रह्मणः । 'विरिञ्चिः कमलासनः' इत्यमरः (१. १. १७) । वनितायाः सरस्वत्याः करे अञ्चिता[2] प्रकाशमाना या विपञ्चिका वीणा, तस्यां सञ्चरतां [3]स्वरप्रसराणां गान्धारादि[4]स्वरप्रसाराणां सम्बन्धिन्यां[5] माधुरीरसरमायां मधुरससमृद्धौ धुरीणा धुरन्धराः, सरस्वतीकृत-वीणागानवन् मनोज्ञा इत्यर्थः । 'खः सर्वधुरात्' (पा. ४. ४. ७८) इति योगविभागात् खः । किञ्च [6]मन्दरेण मन्थाचलेन क्षुभितः आलोडितः यः सिन्धु(बन्धुः) तत्सम्बन्धिन्या (भ्रम्या) भ्रमिप्रकारेण निरर्गलं निर्निरोधं यथा तथा विनिर्गलतां निःसरतां [7]बहुलानाम् अधिकानां भङ्गानां या भङ्ग्यः ता बिभ्रतीति तद्भृत इत्यर्थः । एवंविधा मम गिरो वाण्यो जयन्ति, सर्वोत्कर्षेण वर्तन्त इत्यर्थः । एतेन स्ववाचामतिमधुरत्वात् अतिप्रौढत्वाच्च स्वग्रन्थे प्रेक्षावतां प्रवृत्तिरुचितैवेति भावः ॥२९॥

---

**मन्दरः**

इदानीमिति । प्ररोचनाम् अभिरुचिम् ॥
विरिञ्चीति ॥२९॥

---

पाठ. १. रसरमेत्यारभ्य-अत्रेत्यन्तो ग्रन्थो न पठ्यते-मधु. । २. विपञ्चिका-स्वर-मधु. । ३. तरङ्गभङ्ग्याश्च-मधु. ।

---

१. स्ववातिशयं-मा. । २. अञ्चिते-मा. । ३. °प्रसरणां-मा. । ४. गान्धर्यादिस्वरप्रसरणां-मा. । ५. सम्बन्धिन्यो माधुरीरसमयी मधुरसंवृत्ते धुरीणः-मा. । ६. मन्थरेण-मा. । ७. बहुलनां-मा. ।

वचनेष्वसम्भवात् सादृश्याक्षेपात् प्रकृतस्याप्रकृतधर्मसम्बन्धासम्भव-[1]मूलौ निदर्शना वान्तरभेदावर्थालङ्कारौ। वृत्त्यनुप्रासाः शब्दालङ्काराः। [3]तेषां सर्वेषां संसृष्टिः। सर्वातिशायित्वं व्यङ्ग्यम्॥ ॥२९॥

रस[4]ज्ञानामेवात्र प्रवृत्तिः स्वारसिकी न[5] सर्वेषामित्याह —

रसप्रसरनिर्भराः कविगिरां प्रसाराः परं
मुदं विदधते हृदि प्रदिमभाजि काव्यामृतैः।

---

नौका

अथ[1] रसरमादिशब्दानामर्थमाह—रसेत्यादिना। समुद्र इति। सिन्धवः सरितो बन्धवः यस्येति सिन्धुबन्धुः[2] समुद्र इत्यर्थः। इत्थम्भाव इति। किञ्चित्प्रकारप्राप्तिरित्थम्भाव इति भावः। [3]भङ्गास्तरङ्गा इति। 'भङ्गः [4]खण्डे पराजये। तरङ्गे रोगभेदे च' (ना. र. पं. २६३९) इति कोशादिति भावः। अवस्थाविशेष इति। प्रकार इत्यर्थः। 'भङ्गी प्रकारे, तुङ्गस्तु' इति रत्नमाला ( पं. २६९ )। अलङ्कारान् विशदयति-अ इत्यादिना। निदर्श-[5]नाभेदौ, पदार्थवृत्तिनिदर्शने इत्यर्थः। संसृष्टिरिति। परस्परनैरपेक्ष्यादिति भावः। एतेषां लक्षणानि तु उपरिष्टाद् वक्ष्यन्ते। फलितार्थमाह-सर्वातिशायित्वमिति ॥२९॥

---

मन्दरः

स्वयं व्याकरोति—रसरमेति। कञ्चित् प्रकारं गतस्य प्रकारान्तरप्राप्तिरित्थम्भावः। सा (भ्रमी) च मन्दरक्षोभादिति मन्तव्यम्। 'सर्वातिशायित्वं व्यङ्ग्यम्'। स्ववाचामिति शेषः ॥२९॥

---

पाठ. १. मूलनिदर्शना–मधु.। २. °र्शनाभेदा–नौका। ३. तेषां च–मधु.। ४. नवरसज्ञानां–मधु. ख.। ५. न तु सर्वेषां–मधु.।

---

१. अत्र रसमाधुर्यादिशब्दानाम्। अथ महारसेत्यादिना–मा.। २. बन्धुष समुद्र–मा.। ३. भङ्गान्तरङ्गा इति–मा.। ४. खङ्गे–मा.। ५. नाभेदौ पदार्थ°–मा.।

सुधाकरकराङ्कुरव्यतिकरेण चन्द्रोपला
द्रवन्ति शिशिराश्चिरादपि न [1]विन्ध्यवन्ध्योपलाः ॥३०॥

परमिति पदस्य केवलार्थवाचिनो हृदीत्यनेन [2]सम्बन्धः। अत्र यथा सुधाकरकराः [3]शिशिरशशिशिला एव द्रवयन्ति, [4]न परुषाः; तथा कविगिरो[5]ऽपि [6]सरसहृदयेष्वेव मुदमुदञ्चयन्ति, न [7]शुष्ककर्कशेष्विति कविगिरां सुधाकरकराणां च निरपेक्षवाक्यद्वये बिम्बप्रति-

---

नौका

एवं स्वग्रन्थे बुद्धिमुत्पाद्य 'किं सर्वस्य स्यात् प्रवृत्तिः, यस्य कस्यचिद् वा' इत्याशङ्क्य, वनितेव यूनां, रसालङ्कारादिकृतिरपि रसिकानामेव मनोज्ञा नेतरेषामित्यवतारयति—रसज्ञानामिति ॥

रसप्रसरेति। रसाः शृङ्गारादयो वक्ष्यमाणलक्षणाः। इदमलङ्क्रियादीनामप्युपलक्षणम्। तेषां [1]प्रसरैः निर्भराः पूर्णाः, कविगिरां कविवाचां प्रसारा रचनाविशेषाः। काव्यामृतैः वक्ष्यमाणलक्षणानि काव्यान्येव अमृतानि तैः। म्रदिमभाजि म्रदिमानं (मृदुत्वं) गते। आर्द्रे इति यावत्। हृदि हृदये परं केवलं मुदं सन्तोषं विदधते कुर्वन्ति। काव्यरसज्ञानामेव कविगिरः सन्तोषजनका इत्यर्थः। अनुकूलं दृष्टान्तमाह—सुधाकरेति। शिशिराः शीतलाः चन्द्रोपलाः चन्द्रकान्तमणयः। सुधाकरकराङ्कुराणाम् अङ्कुरसदृशचन्द्रकिरणानां व्यतिकरेण सम्पर्केण, द्रवन्ति द्रवीभवन्ति। विन्ध्यवन्ध्योपला विन्ध्यपर्वतव्यर्थपाषाणाः (न) चिरादपि। चिरकालस्यापि[2] न स्रवन्तीत्यर्थः ॥३०॥

---

मन्दरः

रसेति। काव्यान्येव अमृतानि तैः। अत्र 'काव्य'पदं नाटकादीनामुपलक्षणम् ॥३०॥

---

पाठ. १. वन्ध्यविन्ध्योपलाः—मधु.। २. वाक्यमिदं न पठ्यते—मधु.। ३. 'शशिशिला' इत्येव—मधु.। ४. न तु परुषपाषाणानि—मधु.। ५. सरसकविगिरोऽपि—मधु. ख.। ६. °सरसहृदयानामेव—मधु.। ७. °कर्कशानामिति—मधु.।

---

१. प्रसारैः—मा.। २. 'चिरकालस्य स्रवन्तीत्यर्थः' इत्येव—मा.।

बिम्बभावेन[1] साधर्म्यनिर्देशात् दृष्टान्तालङ्कारः। स च वृत्त्यनुप्रासेन संसृज्यते[2] ॥३०॥

इदानीं स्वग्रन्थवैयर्थ्यं परिहर्तुमाह —

१२. स्वग्रन्थस्य इतरेभ्योऽतिशयप्रतिपादनम् —

अलङ्क्रियाः पूर्वतरैः प्रणीता
न[3] योजिताः काश्चन नायकेन।

---

नौका

श्लोके 'परम्' इति पाठस्यार्थकथनपूर्वकमन्वयमाह — परमितीति। केवलार्थवाचिन इति। केवलशब्दार्थवाचिन इत्यर्थः। श्लोकतात्पर्यं वर्णयन् अलङ्कारं प्रकटयति—अत्र यथेत्यादिना। [1]शुष्कतर्केति। परुषनीरसकुतर्क-कलुषीकृते[2]ष्वित्यर्थः। दृष्टान्तालङ्कार इति। लक्षणमग्रे वक्ष्यते। संसृज्यत इति। दृष्टान्तालङ्कारस्यार्थालङ्कारत्वेन अनुप्रासस्य शब्दालङ्कारत्वेन च उभयोर्निरपेक्षत्वादिति भावः ॥३०॥

ननु काव्यप्रकाशादिग्रन्थेषु[3] सत्सु किमनेन नूतनग्रन्थेनेत्याशङ्क्य तेषां केषाञ्चिदनायकघटितत्वात् केषाञ्चिद् दुर्नायकघटितत्वान्न प्राशस्त्यमित्यभि[4]प्राय-मुत्तरमवतारयति---इदानीमित्यादिना ॥

---

मन्दरः

अत्रेति। सरसानि च तानि हृदयानि चेति विशेषणसमासः। शुष्को नीरसो यस्तर्कः तेन, तदध्ययनेनेत्यर्थः। 'कर्कशेषु' हृदयेष्वित्यनुवर्तते ॥३०॥

ननु बहुषु प्राचीनप्रणीतेषु प्रबन्धेषु प्रकाशमानेषु किं नूतननिबन्धनिर्माणेने-त्याशङ्क्य तेषु कतिपयगुणविकलत्वं दर्शयति—अलङ्क्रिया इति। पूर्वतरैः

---

पाठ. १. °भावनेन–ख.। २. संयुज्यते–मधु.। ३. नायोजिताः–ख.।

---

१. शुष्कतर्कतः–मा.। २. °कृतेत्यर्थः –मा.। ३. कादम्बर्यादि–मा.। ४. °प्रायस्योत्तर–मा.।

केचित् तु कुक्षिम्भरिभिर्निबद्धाः
क्षोदीयसा काञ्चन नायकेन ॥३१॥

अत्र अलङ्क्रियाशब्दः साध्यवसानलक्षणयाऽलङ्कारप्रतिपादकग्रन्थपरः[1] । ऐक्यप्रतिपत्तिः प्रयोजनम् । *क्षोदीयसा क्षुद्रतरेण। ईयसुनि 'स्थूलदूर०' [पा. ६. ४. १५६] इत्यादिना यणादिलोपः[2] पूर्वगुणश्च। कुक्षिम्भरिभिः स्वोदरपूरकैः। 'फलेग्रहि-

नौका

अलङ्क्रिया इति ॥३१॥

अत्र श्लोके तत्र तत्रार्थं वक्ति—अत्र अलङ्क्रियेत्यादिना । साध्यवसानेति। विषयिणा विषयनिगरणेनाभेदप्रतिपत्तिरध्यवसानं [1]तेन सहिता लक्षणा साध्यवसानलक्षणा तये[2]त्यर्थः। एतत्प्रपञ्चो लक्षणातरङ्गे भविष्यति। ऐक्यप्रतिपत्तिरित्यस्य अलङ्कारग्रन्थयोरित्यादि। 'क्षोदीयस्'[3]शब्दं साधयति—[4]ईयसुनीति

मन्दरः

आचार्यदण्डि-मम्मटपादप्रभृतिभिः। अलङ्क्रिया अलङ्कारग्रन्थाः काव्यादर्शकाव्यप्रकाशादयः। नायकेन न योजिताः। अनायकानां हारावलीनामिव तादृशीनामपि तासामरम्यत्वादनादरणीयत्वमित्याशयः। तर्हि सनायकाः प्रतापरुद्रीयादिप्रबन्धाः प्रथन्त एवेत्याशङ्क्याह—केचिदिति। कुक्षिम्भरिभिः स्वोदर(मात्र)पूरकैः, धनमात्रलोलुपैरित्यर्थः। केचिद् विद्यानाथादिभिस्तु। क्षोदीयसा क्षुद्रतरेण। तरलीकृतकाचानां तारहारयष्टीनामिव तासामप्यहृद्यत्वादग्राह्यत्वमित्याकूतम् ॥३१॥

अत्रेति। साध्यवसानलक्षणाया, सादृश्येतरसम्बन्धमूलकत्वाच्छुद्धयेत्यर्थः। प्रतिपाद्यप्रतिपादकभावः सम्बन्ध इति। वाच्यलक्ष्ययोरिति शेषः। ईयसुनीति।

पाठ. १. पर इत्यनन्तरं—'प्रतिपाद्यप्रतिपादकभावः सम्बन्धः' इत्यधिकं पठ्यते—मन्दर। २. लोपपूर्वगुणौ—ख.। *एतच्चिह्नमध्यगतो ग्रन्थो न पठ्यते-मधु.।

१. °ध्यवसा . . . मुसस्तेन—मा.। २. त इत्यर्थः—मा.। ३क्षोध्वं—मा.। ४. इयसु—मा.।

रात्मम्भरिश्च [पा. ३. २. २६] इति चशब्देन निपातनात् साधुः। नायको रत्नं नेता च* ॥३१॥

स्वालङ्कारस्य तद्वै[1]लक्षण्यमाह —

दिव्येनोत्तमनायकेन घटिता सेयं ममालङ्कृतिः
सद्वृत्ताकृतिना विदेहतनयावक्षोरुह[2]स्थायिना[3]।
तस्मादृग्दशकण्ठकीर्तिपयसो नैल्यावहश्रीजुषा
निश्वासेन महेन्द्रनीलमणिनोदारेण संशोभते ॥३२॥

---

नौका

कुक्षिम्भरि[1]शब्दं साधयति— फलेग्रहिरिति। नायकशब्दार्थमाह— नायक इति ॥३१॥

(स्वेति)। स्वालङ्कारस्य स्वकृतालङ्कारप्रबन्धस्य। तद्वैलक्षण्यं पूर्वग्रन्थवैलक्षण्यम् ॥

दिव्येनेति। दीव्यते स्तूयत इति दिव्येन। अन्यत्र प्रकाशमानेन। अत एवोत्तमनायकेन श्रेष्ठेन(नेत्रा)। अन्यत्र हारमध्यगतेन(रत्नेन)। '*नायको हारमध्यगः' इत्यमरः (२.६.१०२)। सद्वृत्ताकृतिना सत् श्रेष्ठं वृत्तं वृत्तित्वं

---

मन्दरः

'क्षुद्र-ईयसुन्' इति स्थिते 'स्थूलदूर°' (पा. ६.४.१५६) इत्यादिना यणादिलोपः रेफलोपः। यण्वटितशब्दस्वरूपलोपसङ्ग्रहार्थमादिशब्दः। अत्र तु रेफलोप एव। ततः 'क्षुद्-ईयसुन्' इति स्थिते पूर्वगुणः। (एवं) क्षोदीयानिति रूपसिद्धिः ॥३१॥

स्वग्रन्थस्य तद्वैलक्षण्यमाह — दिव्येनेति। दिव्येन उत्तमनायकेन च। रामादीनां दिव्योत्तमप्रकृतित्वात् तस्य दिव्योत्तमनायकत्वम्। अन्यत्र

---

पाठ. *एतच्चिह्नमध्यगतो ग्रन्थो न पठ्यते–मधु.। १. तद्वैषम्य–मधु.ख.। २. °वक्षस्थल–ख.। ३. °स्फायिना–मधु.

---

१. °म्भरशब्द–मा.। * यद्यपि 'तरलो हारमध्यगः' इत्येव पाठो बहुत्र दृश्यते। तथापि 'तरल' स्थाने नायक इति पाठभेदो दृश्यत इति मणिप्रभायामुक्तम् ॥

तदेव तादृक् यस्य[1] तत्तादृक्, उपमाशून्यमित्यर्थः ।

'क्षीरमध्ये क्षिपेन्नीलं, क्षीरं चेन्नीलतां व्रजेत् ।
इन्द्रनीलः स विज्ञेयः सर्वसम्पत्प्रदायकः ॥'

इत्युक्तलक्षणलक्षितत्वं द्योतयितुं तत्तादृगित्यादि विशेषणम्*। महेन्द्रनील[2]मणिपदं साध्यवसानलक्षणया रघुनायकपरम् । अनायक-

---

**नौका**

यस्याः सा तादृशी आकृतिः अवयवसंस्थानं यस्य एतादृशेन, सदाकारवतेत्यर्थः । सत्यौ[1] वृत्ताकृती चरित्रावयवसंस्थाने यस्येति वा । अन्यत्र सद्वर्तुलाकारेणेत्यर्थः । विदेहतनयावक्षोरुहस्थायिना सीताकुचकलशयोः स्थितेन । तत्संसर्गिणेत्यर्थः । उभयत्र समानं चैतत् । तत्तादृग्दशकण्ठकीर्तिपयसः निरुपमरावणकीर्तिक्षीरस्य नैल्यावहश्रीजुषा नैल्यसम्पादकलक्ष्मी(मुपेयुषा) । तदा(श्रययशःकालुष्या-पादकशोभास)[2]म्पन्नेनेत्यर्थः । अन्यत्र नैल्यसम्पादकशोभासम्पन्नेनेत्यर्थः। निस्त्रासेन भयरहितेन । अन्यत्र त्रासपटलादिदोषरहितेन । उदारेण गम्भीरेण । समानं चैतत् । एतादृशेन महेन्द्रनीलमणिना साध्यवसान-लक्षणया रघुनायकेन । अन्यत्र तन्नायकमणिना । घटिता प्रतिपादकतया सम्बद्धा । अन्यत्र गुम्फिता । सा पूर्वोक्ता, इयं बुद्धिस्था, अलङ्कृतिरलङ्कार-प्रतिपादको ग्रन्थः हारावली च संशोभते, सम्यग् भातीत्यर्थः । तथा चास्य ग्रन्थस्य सन्नायकघटितत्वात् सर्वोत्तमत्वमिति भावः ॥३२॥

---

**मन्दरः**

दिव्येन देदीप्यमानेन, उत्तमनायकेन प्रशस्ततरलेन च । सत्यौ प्रशस्ते वृत्ताकृती चरित्राकारौ यस्य तेन । अन्यत्र सती उत्तमा वृत्ता वर्तुला च आकृतिर्यस्य तेन । 'सत् प्रशस्ते विद्यमाने सत्याभ्यर्हितसाधुषु' इति विश्वः । विदेहतनयावक्षोरुहयोः स्थायिना, तयोरासक्तचित्तेनेत्यर्थः । अन्यत्र तत्र स्थातुं योग्येनेत्यर्थः । निस्त्रासेन निर्भीकेन । अन्यत्र निर्दोषेण । उदारेण औदार्ययुक्तेन । अन्यत्र स्थूलेन ॥३२॥

---

पाठ. १. यस्यासौ–ख. । २. अत्रेन्द्रनील°–मधु. इन्द्रनील–इत्येव–ख. । * तदेवे-त्यारभ्य विशेषणमित्यन्तं न पठ्यते–मधु. ।

---

१. 'सत्यावृत्याकृतिचरित्रावयवसंस्थाने'–मा. । २. तन्नेत्यर्थः –मा. ।

दुर्नायकोत्तमनायक[1]सङ्घटितेष्वलङ्कारेषु लोके[2] उत्तमनायकसङ्घटितालङ्कार एव सुदृशामादरातिशयदर्शनात्, तथाविधे स्वालङ्कारे भूयानादरो भवेत्, वैयर्थ्यशङ्का तु प्रत्युत प्राचीनेष्वेव[3] भविष्यतीति श्लोक[4]द्वयतात्पर्यार्थः। अत्र श्लेषानुप्राणिताऽतिशयोक्ति[5]रलङ्कारः ॥३२॥

---

नौका

श्लोके तत्तादृगित्यस्यार्थमाह तदेवेति। अस्य विशेषणस्य प्रयोजनमाह— 'क्षीरमध्य' इत्यादिना। इत्यादिविशेषणमिति। तत्तादृग् इत्यारभ्य जुषेत्यन्तं विशेषणमित्यर्थः। उक्तश्लोकद्वयस्याखण्डतात्पर्यमाह—अनायकेत्यादिना। अलङ्कारेषु तत्प्रतिपादकग्रन्थेषु। एवमग्रेऽपि। सुदृशां विदुषाम्। ननु उत्तमनायकेषु ग्रन्थेष्वादरसम्बन्धेऽपि भवदीयनूतननिबन्धे कथमादरः स्यात्? तत्राह[1]—तथाविधेति। उत्तमनायकघटितेत्यर्थः। भविष्यतीति। केषांचिदनायकघटितत्वात् केषांचिद् दुर्नायकघटितत्वाच्चेति भावः। श्लोकद्वयेति। 'अलङ्क्रिया' (सा. र. १/३१) (इति) 'दिव्येन (सा. र. १/३२) इत्यस्य चेत्यर्थः। अत्रालङ्कारमाह—अत्र[2] श्लेषेति। अतिशयोक्तिरिति। 'अध्यवसितप्राधान्ये त्वतिशयोक्तिः' इति तल्लक्षणादिति भावः ॥३२॥

---

मन्दरः

तदेवेति। साध्यवसानलक्षणया सादृश्यमूलकत्वाद् गौण्येत्यर्थः अनायकाश्च दुर्नायकाश्च उत्तमनायकसङ्घटिताश्चेति तेषु। अलङ्कारेषु अलङ्कारग्रन्थेषु हारेषु च। सुदृशां पण्डितानां वनितानां च। प्रत्युत वैपरीत्येन। केषांचिदनायकत्वात् केषाञ्चिद् दुर्नायकत्वाच्च वैपरीत्यमिति भावः। अतिशयोक्तिः भेदेऽभेदरूपातिशयोक्तिरित्यर्थः ॥३२॥

---

पाठ. १. °नायकघटिते–मधु.। २. लोके तूत्तमनायकघटिता–मधु.। ३. °ष्वेवेति श्लोकद्वयस्य तात्पर्यार्थः – मधु.। ४. श्लोकतात्पर्यार्थः–म.। ५. °तिशयोक्त्यलङ्कारः–ख.।

---

१. तदाह–मा.। २. अत्राश्लेषेति–मा.

१३. स्वग्रन्थस्य गतार्थत्वनिरासः

एकेन चरितार्थत्वा—
दितरानर्थता तु या ।
सा मद्ग्रन्थस्थितावन्य—
ग्रन्थानां किं न [1]जायताम् ॥३३॥

१४. रामयशोघनसारसुरभितत्वेन स्वग्रन्थस्योपादेयत्वम् -

काव्यामृताकलनया मृदुशीतलानि
श्रीरामदिव्ययशसा सुरभीकृतानि ।

---

नौका

नन्वस्य ग्रन्थस्य रसादिव्युत्पत्तिः फलम् । सा च प्राचीननिबन्धनेनापि सम्भवतीति किमनेन नूतनग्रन्थनिर्माणेनेत्यत आह—एकेनेति । एकेन येन केनचित् प्राचीननिबन्धनेन । चरितार्थत्वात् व्युत्पत्ते[1]र्जातत्वाद् । इतरानर्थता इतरस्यानर्थक्यम् । येति । सेत्युत्तरेणान्वयः । न जायतामिति । विनिगमनाविरहादिति भावः ॥३३॥

इदानीं स्वग्रन्थस्याशीर्वादव्याजेन [2]सतः स्तुवन् प्रार्थयते काव्यामृतेति । येषां जनानां मनांसि । काव्यमेवामृतं तस्याकलनया अनुभवेन करणेन

---

मन्दरः

अस्तूत्तमनायकसङ्घटितत्वम् । प्राचीनप्रबन्धैरेव चारितार्थ्याद् व्यर्थोऽयं प्रयास इत्यत[3] आह—एकेनेति । चरितार्थत्वात् व्युत्पत्तेर्जायमानत्वात् ॥३३॥

एवमुपपत्तिमुक्त्वा स्वग्रन्थेन सहृदयहृदयोल्लासो भवतीत्याह—काव्येति । काव्यामृतानामाकलनया अनुभवेन मृदूनि शीतलानि च । सुरभीकृतानि,

---

पाठ. १. जायते–मधु. ।

---

१. व्युत्पत्ति–मा. । २. सन्तः–मा. । ३. इत्याह–मा. ।

येषां मनांसि घनसारसमानि तेषाम्
एषा कृतिर्वितनुतां कमपि प्रहर्षम् ॥३४॥

१५. पुरोभागितादूषणम् -

कतिचन शुभपदसरणौ
तमोभरा व्यञ्जयन्ति [1]दोषाहीन् ।
[2]शमयति विभूषयति [3]वा
[4]मृग्यः स [5]हि नीलकण्ठ एव परम् ॥३५॥

---

नौका

मृदुशीतलानि मार्दवयुक्तानि शिशिराणि च । श्रीरामदिव्ययशसा श्रीरामोत्कृष्टकीर्त्या सुरभीकृतानि, तद्यशःश्रवणकुतूहलानीत्यर्थः । घनसार[1]समानि श्रीचन्दनवत् सरसानि, भवन्तीत्यर्थः । यत्तदोर्नित्यसम्बन्धादाह— तेषामिति तादृशान्तःकरणवतां जनानां एषा बुद्धिस्था, कृतिः प्रबन्धः, कमपि अनिर्वाच्यं प्रहर्षं वितनुताम् । विशेषेण करोत्वित्यर्थः ॥३४॥

मत्सरिणं दूषयन् सहृदयं प्रस्तौति—कतिचनेति । शमयत्विति । यो बुधो दोषौघान् शमयतु शान्ति नयतु, भूषयतु अलङ्करोतु वा स बुधो हि नीलकण्ठ एव, साक्षादीश्वर एव । अत एव परम् अत्यन्तं मृग्योऽन्वेषणीय

---

मन्दरः

तद्भक्तिपरवशीकृतानीत्यर्थः । अत एव घनसारसमानि तद्वद् गुणतो व्यापनशीलानीत्यर्थः । 'घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका' इत्यमरः (२.६.१३०) ॥३४॥

एवं सहृदयान् सम्प्रार्थ्य दुर्हृदयानामसूयाप्रकारं प्रतिपादयति- कतिचनेति कतिचन कतिपये तमोभराः अभेदोपचारादसहनशीला इत्यर्थः । शुभानाम

---

पाठ. १. दोषौघान्—नौका. २. शमयतु विभषयतु—नौका. ३. यो—नौका. ख
४. मान्यः —ख. । ५. स च—मधु. ।

---

१. घनसाररससमानि—मा. ।

१६. काव्यस्य प्रभुसम्मितवेदादिभ्यो विशिष्टत्वेन, तन्मीमांसा कर्तव्या -

**काव्यमीमांसाया[1] अनारम्भणीयत्वशङ्कां निवारयितुमाह —**

**मीमांस्यं पुनरत्र काव्यममुना सिद्ध्यन्ति कीर्त्यादयो**
**दुष्काव्यं हि निषेधभागितरथा रामायणादेः क्षतिः ।**
**कान्तासम्मितंतोपदेशकतया नार्येवकाव्यश्रिया**
**[2]स्वारस्यात् क्रियते हिताहितकृते पुंसां प्रवृत्त्यादिकम् ॥३६॥**

---

नौका

इत्यर्थः । तथा च लोके केचन गुणानधःकृत्य दोषानुद्भावयन्ति । सन्तस्तु दोषानधःकृत्य गुणानुद्भावयन्ति । अत एव—

'गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥'

इत्युक्तम् । अतो ये तु दोषानधःस्थाप्य गुणानेवोद्भावयन्ति, तेषामेवैषा कृतिः मुदं[1] वितनुतामिति भावः ॥३५॥

---

मन्दरः

अदोषाणां पदानां सुतिङन्तपदानां सरणौ रचनामार्गे । दोषा अहय इव तान् । व्यञ्जयन्ति प्रकटयन्ति । कतिचित् तामसा निर्दोषायामपि कवितायां दुःसहान् दोषानारोपयन्तीत्यर्थः । यः शमयति, तथादोषेषु एवं विवक्षिते गुणत्वमप्यापततीति शान्तिं नयतीत्यर्थः । यो विभूषयति वा, 'अत्रायं गुण एव, अन्यथाप्रयोगे दोषः' इत्येवंरूपेण समर्थयतीत्यर्थः । स पुमान् परं मृग्यो नीलकण्ठः श्रीकण्ठ एव हि ।

'गुणायन्ते दोषाः सुजनवदने, दुर्जनमुखे
गुणा दोषायन्ते द्वयमिदमभूद् विस्मयपदम् ।
महामेघः क्षारं पिबति कुरुते वारि मधुरं
फणी पीत्वा क्षीरं वमति गरलं दुःसहतरम् ॥

---

पाठ. १. °मीमांसायाम्–ख. । २. साध्यं स्यात्–नौका; सारस्यात्–ख.; साध्यं स्वी.° मधु. ।

---

१. पदं–मा.

नौका

ननु साहित्यरत्नाकराख्यं ग्रन्थं कथयामीत्युक्तम्। तदयुक्तम्। काव्यालापांश्च वर्जयेदिति निषेधादित्याशङ्क्य महता प्रबन्धेन काव्यमीमांसा-कर्तव्यतां साधयिष्यन् काव्यमीमांसायां वक्ष्यमाणदूषणभूषणजातं श्लोकेन सङ्ग्रहीष्यन् उत्तरमवतारयति काव्यमीमांसाया इति ॥

संग्रहश्लोकमाह—मीमांस्यं पुनरिति। अत्र अस्मिन् श्लोके। काव्यं 'सगुणालङ्कृती' इत्यादिवक्ष्यमाणलक्षणं काव्यम्। मीमांस्यं पुनः लक्षणस्वरूपादिभिर्विचारणीयमेव। 'पुनरप्रथमप्रश्ने [1]भेदावृत्त्यवधारणे' इति रत्नमाला (२९९६)। ननु [2]तन्मीमांसया किं सिद्ध्येदित्यत आह-अमुनेति। काव्येनेत्यर्थः। कीर्त्यादय इति। आदिना 'काव्यं यशसेऽर्थ-कृते व्यवहारविदे शिवेतरक्षतये' (का. प्र. १.२) इत्याद्युक्तप्रयोजनानां सङ्ग्रहः[3]। कीर्त्यादिसद्भावेऽपि, निषिद्धत्वात् कथं काव्यमीमांसायां प्रवृत्तिः? अन्यथा निरतिशयतात्कालिकानन्दसन्दोहसत्त्वाद्[4] वारवामलोचना-परिरम्भादावपि सतां प्रवृत्तिः स्यादत आह—[5]दुष्काव्यमिति। दुष्काव्यं

---

मन्दरः

इत्युक्तत्वादेकस्मिन्नेव विषये तत्तत्प्रकृतिवशात् प्रतीतिभेदो भवतीति भावः। कतिचन तमोभरा अन्धकारातिशयाः। शुभपदे योग्यस्थाने या सरणिस्तस्याम्। दोषाहीन् दुष्टसर्पान् व्यञ्जयन्ति। अन्धतमसव्याप्ते सत्पथेऽपि सर्पभीतिर्भवतीति भावः। यः शमयति स नीलकण्ठो मयूर एव। यो वा विभूषयत्यलङ्करोति, स नीलकण्ठः शितिकण्ठ एव। अत्र शब्द-शक्तिमूलध्वनिः ॥३९॥

काव्येति। काव्यमीमांसायाः काव्याङ्गभूतगुणालङ्कारादिनिरूपणात्मक-निबन्धनस्येत्यर्थः अनारम्भणीयत्वशङ्कां 'काव्यालापाँश्च वर्जयेत्' इति निषेधस्मृत्यापादितसन्देहमित्यर्थः। निवारयितुं युक्तिप्रमाणप्रतिपादनेन परिहर्तुम् ॥

---

१. भेदाकृत्यव–मा. २. °सायाः–मा. ३. सङ्ग्रहम्–मा. ४. सत्वा-द्वारा . . . मलोचनापरिरम्भादादपि–मा. ५. दुष्कार्यमिति–मा.।

### नौका

दुर्नायकघटितमुद्राराक्षसादि[1]। निषेधभाक् 'काव्यालापांश्च वर्जयेत्' इति निषेधविषयम्। न तु काव्यसामान्यमित्यर्थः। ननु[2] सामान्यतः प्रवृत्तस्यास्य [3]असत्काव्यविषयतया सङ्कोचो न युक्तः। इतरथा 'न परदारान् गच्छेत्' इति सामान्यनिषेधस्य [4]विवोढकान्ताव्यतिरिक्तविषयकत्वेन सङ्कोचस्यापि सुकरतया सतां [5]वारभामिनीगमने प्रवृत्त्यापत्तिः स्यादित्यत आह-इतरथेति। निषेधस्य काव्यसामान्यविषयकत्वे इत्यर्थः। रामायणादेरिति। आदिना भारतादेः परिग्रहः। क्षतिः उच्छेदः स्यादित्यर्थ। इत्थं च परदारगमननिषेधस्य *सर्वपरकान्ताविषयकत्वेऽपि क्षत्यभावात् युक्तं सामान्यविषयकत्वमेव। काव्यनिषेधस्य तु सामान्यविषयकत्वे रामायणाद्युच्छेदभीत्या असत्काव्यविषयकत्वेन सङ्कोच आवश्यक इति भावः। ननु एतावता काव्यविद्यया प्रतिष्ठादिकं [1]साध्येतेत्युक्तम्। तदयुक्तम्। प्रतिष्ठा सूकरि......विष्ठे (?)

---

### मन्दरः

मीमांस्यमिति। अत्र लोके, काव्यं मीमांस्यं पुनः, लक्षणोदाहरणादिभिर्विचारणीयमेव। 'स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः' इत्यम: (३.४.१९)। काव्यमीमांसायाः किं फलमित्यत्राह—अमुनेति। तर्हि निषेधस्मृतेः का गतिरित्याशङ्क्याह—दुष्काव्यमिति। दुष्काव्यं हि मुद्राराक्षसादि असत्काव्यमेव। 'हि हेतावववधारणे' इत्यमरः (३.३.२५७)। निषेधभाक् निषेधविषयः। इतरथा निषेधस्य काव्यसामान्यविषयकत्वे तु। रामायणादेः रामायणादिकाव्यसमूहस्य क्षतिर्हानिः भवेदिति शेषः। रामायणाद्युच्छेदस्यानङ्गीकार्यत्वात् निषेधस्य अन्यपरत्वमुचितमेवेति भावः। ननु श्रुतिस्मृतिभ्यामेव कर्तव्याकर्तव्यप्रवृत्तिनिवृत्तिसिद्धौ किमनेनेत्याशङ्क्य सरसोपदेश(क)स्य काव्यस्य तदतिशायित्वमित्याशयेनाह—कान्तेति। 'हिताहितकृते प्रवृत्त्यादिकं' हितार्थं प्रवृत्तिरहितार्थं निवृत्तिश्च। हिते प्रवृत्तिरहितान्निवृत्तिश्चेति यावत्। स्वारस्यात् क्रियते। काव्यश्रीः कर्तव्याकर्तव्ये व्यञ्जनावृत्त्योपदिशतीति स्वारस्यमिति भावः। तत उपदेशान्तरात् काव्यस्यातिशय इत्याशयः ॥३६॥

---

१. °मन्त्राराक्षसादि—मा.। २. न तु—मा.। ३. °स्यास्य सत्काव्य°—मा.। ४. विवाहकान्ता—मा.। ५. वारगामिनी—मा.। * परकान्ता—मा.।

१७. काव्यममीमांस्यमिति पक्षस्य विकल्प्य दूषणम् --

काव्यममीमांस्यमिति वदता वक्तव्यम्। किं विषयाभावात्? प्रयोजनाभावाद्वा? उत निषिद्धत्वाद्वा? आहोस्वित् पुरुषार्थपर्यवसानाभावाद् वा? तत्कर्तव्यताबोधकप्रमाणाभावाद्वा?

---

नौका

त्यादिना प्रतिष्ठाया निषिद्धत्वादित्याशङ्क्य, कामिनी( वत् )प्रवृत्तिसम्पादकतयाऽप्यस्याः प्राशस्त्यम्। तथा हि – यथा[1] हि कामिनी कटाक्षवीक्षणहावभावविलासैः पुरुषमारञ्जयन्ती व्यञ्जनाव्यापारेणैव सर्वं स्वकार्यं कारयति, निवर्तयति (च) कार्यान्तरात्, तद्वत् काव्यमे[2]तदपि सहृदयहृदयानन्दिन्या व्यन्जनावृत्त्या 'रामादिवत् वर्तितव्यम्, न रावणादिवत्' (का.प्र.१.२) इति कर्तव्ये प्रवर्तयति निवर्तयति चाकर्तव्यादित्याशयेनाह-कान्तासम्मितेत्यादिना। कान्तासम्मिततोपदेशकतया कान्तया स्त्रिया सम्मितता समानत्वं तेन हेतुना उपदेश[3]कतया। कान्तासमानतया उपदेश[4]युजेति यावत्। तादृश्या काव्यश्रिया काव्यसम्पत्त्या नार्येव कान्तयेव पुंसां हितार्थमहितनिवृत्त्य-(र्थमित्य)र्थः। प्रवृत्त्यादिकं क्रियते। आदिना निवृत्तिसङ्ग्रहः। तथा च प्रवृत्ति[5]निवृत्तिश्च क्रियते इत्यर्थः। ननु असाध्यं चेत् कथं क्रियत इत्यत आह-साध्यं स्यादिति। साध्यमपि स्यादित्यर्थः॥

इममेव सङ्गृहीतश्लोकार्थं बहुधा प्रपञ्चयति-काव्यममीमांस्यमित्यादिना। तत्र पूर्वपक्षिणं प्रति पञ्चधा विकल्पयति—किमित्यादिना॥

---

मन्दरः

काव्यमिति। वक्तव्यमिति। काव्यममीमांस्यमिति वदसि। तदमीमांस्यत्वे विषयाभावादित्यादिहेतुपन्चके को वा हेतुः? तं वदेत्यर्थः॥

---

१. यदा हि–मा.। २. काव्य एष यद्यपि–मा.। ३. °देशवार्तया–मा. ४. °भाजेति–मा.। ५. प्रवृत्तिनिवृत्तिश्च–मा.।

नाद्यः । वक्ष्यमाणलक्षणस्यैव काव्यस्य विषयत्वात् ।

न[1] द्वितीयः । [2]काव्यस्य कीर्त्यादिविविधपुरुषार्थसाधकतया त[3]न्मीमांसाया अपि प्रयोजनवत्त्वात् । अङ्गानां प्रधान[4]फलेनैव फलवत्त्वनियमात् । काव्य[5]स्यार्थवत्त्वं काव्यप्रकाशकारादिभिरुक्तम् ।

'काव्यं यशसेऽर्थकृते, व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये, कान्तासम्मिततयोपदेशयुजे ॥'
(का. प्र. १.२)

---

नौका

[1]नाद्य इति । विषयाभावात् इत्यादिप्रथमविकल्पो नावकल्पते इत्यर्थः । हेतुमाह–वक्ष्यमाणेति । 'सगुणालङ्कृती' इत्यादिना वक्ष्यमाणेत्यर्थः ॥

न द्वितीय इति । प्रयोजनाभावादिति द्वितीयविकल्पोऽपि न सम्भवतीत्यर्थः । तत्र हेतुमाह काव्यस्यैवे[2]त्यारभ्य विपश्चित[3] इत्युक्तत्वादित्यन्तेन । [4]कीर्त्यादीत्यादिना व्यवहारादिपरिग्रहः । तन्मीमांसेति । काव्यमीमांसेत्यर्थः । ननु काव्यस्य कीर्त्यादिफलकत्वेऽपि तन्मीमांसायाः कथं कीर्त्यादिफलकत्वमत आह–अङ्गानामिति । तथा च यथा प्रयाजादीनामङ्गानामाग्नेयादिप्रधानफल[5]स्वर्गफल(क)त्वं, तद्वदत्रापि प्रधानकाव्यफलं कीर्त्यादिरूपफलमेव काव्याङ्गमीमांसायाः फलमिति काव्यमीमांसाया न प्रयोजनशून्यत्वमिति भावः । ननु काव्यस्य कीर्त्यादिफलकत्वमेवासिद्धमत आह–काव्यस्येत्यादिना । काव्यप्रकाशकारादिभिरित्यादिना एकावलीकारादिपरिग्रहः ॥

---

मन्दरः

तत्राद्यं परिहरति–नाद्य इति । तत्र हेतुं दर्शयति वक्ष्यमाणेति । 'सगुणालङ्कृती काव्यम्' इत्यादिना द्वितीयतरङ्गवक्ष्यमाणकाव्यलक्षणनिर्दिष्टगुणालङ्कारादेरेवेत्यर्थः ॥

---

पाठ. १. नापि–मधु. । २. न पठ्यते–मधु । ३. काव्यमीमांसायाः प्रयोजन–मधु. । ४. फलवत्त्वेनैव–मधु. । ५. काव्यस्य चार्थ–नौका. ।

---

१. नाद्य इति–मा. । २. कार्यस्यै–मा. । ३. विपश्चित उक्तत्वा–मा. । ४. कीर्त्यादित्यादिना–मा. । ५. °फलः स्वर्ग–मा. ।

'विश्वोल्लङ्घनजाङ्घिकीं वितनुते कीर्तिं विधत्ते श्रियं
[1]हेलानिर्जितयक्षराजविभवां चिन्ताकरं हन्त्यघम् ।
दुग्धे स्वादुतरान् रसान् वितरति स्फारं कलाकौशलं
काव्यं निर्वृतिमावहत्यपि [2]परिस्पन्दापहं चेतसः ॥'

(एकावल्याम् १.९)

'परिवड्ढइ विण्णाणं, सम्भाविज्जइ जसो [3]विसप्पंदि गुणा ।
सुव्वइ [4]सुपुरिसचरिअं, किं तं जेण ण हरन्ति कव्वालावा ॥'

(सेतुबन्ध. १.१०)

---

**नौका**

काव्यं यशस इति । अत्र 'कृते[1]-विदे-युजें' शब्दाः सम्पदादिपाठात् भावे क्विबन्ताः ॥

एकावलीकारस[2]म्मतिमाह विश्वो[3]ल्लङ्घनेति । जङ्घया चरतीति जाङ्घिकी [4]जङ्घाली । शीघ्रगामिनीति यवात् । '[5]जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ' इत्यमरः । 'चरति' ( पा. ४.४.८ ) इति (ठक्) । 'टिड्ढाणञ्' (पा. ४.१.१९) इत्यादिना ङीप् । विश्वव्यापिनीत्यर्थः ।

---

**मन्दरः**

द्वितीयं निराकरोति-न द्वितीय इति । तत्र हेतुं प्रतिपादयति काव्यस्येति । तन्मीमांसायाः काव्याङ्गभूतपदार्थगुणालङ्कारादिमीमांसाया अपीत्यर्थः । ननु काव्यस्य कीर्त्यादिपुरुषार्थफलसाधकत्वेऽपि कथं तदङ्गमीमांमायास्तदित्याशङ्क्याह —अङ्गानामिति । प्रधानस्याङ्गिनो यत् फलं तदेव तदङ्गानामपीति नियमात् । यथा प्रधानभूताग्नेययागादेः फलमेव तदङ्गभूतान्वाधानादीनामपि। तथा काव्यस्य फलभूतं कीर्त्यादिकमेव तदङ्गभूतगुणादिमीमांसाया अपीति भावः ॥

---

पाठ. १. हेलाधिक्कृत°–मधु. ख. २. परिस्पन्दावहं–मधु. ख. ३. विढप्पन्ति–सेतु. । ४. सुउरिस–सेतु. ।

---

१. कृतिर्विदेयुङ्शब्दाः –मा. । २. °सम्मत–म. । ३. विश्वाभि .... लङ्घनेति–मा. । ४. जङ्घली–मा. । ५. जङ्घलातिजकातुल्यौ जङ्घाकरिगजाङ्घिकौ–मा.

(परिवर्धते विज्ञानं, सम्भाव्यते यशो [1]विसर्पन्ति गुणाः ।
श्रूयते सुपुरुषचरितं, किं तद् येन न हरन्ति काव्यालापाः ॥)

न[2] च[3] केवलं[4] दृष्ट[5]मात्रफलकत्वम् । किन्तु कीर्तिमुखेन स्वर्गादेरपि फलत्वात् ।

'कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः ॥'
इत्युक्तत्वात् ॥

---

नौका

चिन्ताकरम् आधिजनकम् अघं पापम् । [1]हन्तीति । पुण्यश्लोक[2]गुणवर्णनादित्यर्थः । 'दुःखैनोव्यसनेष्वघम्' इत्यमरः (३.३.२७०) । रसान् शृङ्गारादीन् । चेतसः परिस्पन्दं अपह[3]न्तीति परिस्पन्दा[4]पहम् । विक्षेप(निवृत्तिक)रमित्यर्थः । 'अन्येष्वपि दृश्यते' (पा. ३.२.१०१) इति ड[5]प्रत्ययः । अत्र सर्वत्र '[6]कवेः', यथायोगं 'सहृदयानां च' इति शेषः । सुगममन्यत् ॥

केषाञ्चित् सम्मतिमाह परिवड्ढ[7]ईति । अस्य प्राकृतश्लोकस्य छायाश्लोमाह--परिवर्धत इति । किं तद् येनेति । काव्यालापाः काव्यविचाराः येन प्रयोजनेन न हरन्ति मनं इति शेषः । मनोहरा न भवन्ति तत् किमपि नास्तीत्यर्थः । सर्वं सम्पन्नमेवेति भावः । गतमन्यत् ।

---

मन्दरः

ननु काव्यस्य प्रयोजनवत्त्वे किं प्रमाणमित्याशङ्क्य प्राचीनप्रतिपादितप्रमाणानि---दर्शयति काव्यमिति । अत्र भवतीति सर्वत्राध्याहारः । 'कृद्-विद्-युज्' शब्दा भावे क्विबन्ताः । ''कालिदासादीनामिव यशः । श्रीहर्षादेर्धावकादीनामिव धनम् । राजादिगतोचिताचारपरिज्ञानम् । आदित्यादेर्मयूरादीनामिवानर्थनिवारणम् । सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दम् । प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः

---

पाठ. १. अज्यन्ते--सेतु. । २. इतः पूर्वं--'न हरन्तीत्यत्र मन इति शेषः' इत्यधिकं--मन्दर. । ३. न पठ्यते--मधु. । ४. केवलदृष्ट--ख. । ५. प्रीतिकीर्त्यादिरूपदृष्टमात्र--नौका. ।

---

१. हन्तेति--मा. । २. श्लोकगुरुवर्ण--मा. । ३. अपराध्यतीति--मा. । ४. स्पन्दावहम्--मा. । ५. दप्रत्ययः--मा. । ६. कविर्यथा--मा. । ७. परिवड्ढयीति--मा.

'काव्यालापांश्च वर्जयेत्' इति स्मृत्या काव्यस्वरूपस्यैव निषिद्धत्वात् स्वर्गादे[1]रपि दूरोत्सारित[2]तेति तृतीयविकल्पो[3]ऽपि नावकल्पते। निषेधस्य मुद्राराक्षसाद्यसत्काव्यविषयत्वात्। अन्यथा रामायणादेरपि [4]हेयताप्रसङ्गात्। ततः[5] श्रवणमननादिभ्यो विष्णुकथानिर्वर्तककाव्यनिर्माणमेव[6] श्रेयःसाधनमिति मन्वानो भगवान् वाल्मीकिर्निर्ममे रामायणमिति[7] ॥

---

नौका

शङ्कते न चेति। दृष्टान्तमाह '[1]प्रीतिकीर्त्यादिरूपेत्यादि[1]'। समाधत्ते कीर्तिमुखेनेति। तत्र संवादमाह-कीर्तिमिति आसंसारं कीर्तिसंसरणपर्यन्तमित्यर्थः ॥

उत निषिद्धत्वादिति तृतीयविकल्पं दूषयितुं तमनुभाषते —काव्यालापांश्चेत्यादिना। 'स्वर्गादेरित्यादिशब्देन अर्थव्यवहारादिपरिग्रहः। तत्र हेतुमाह—निषेधस्येति। 'काव्यालापांश्च वर्जयेत्' इति निषेधशास्त्रस्येत्यर्थः। अन्यथा

---

मन्दरः

सुहृत्सम्मितार्थतात्पर्यवत्पुराणादीतिहासेभ्यश्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत् काव्यं लोकोत्तरवर्णनानिपुणकविकर्म तत् कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवत् वर्तितव्यम्, न रावणादिवत् इत्युपदेशं च यथायोगं कवेः सहृदयस्य च करोतीति सर्वथाऽत्र यतनीयम्' (का. प्र. १.२) इति काव्यप्रकाशकृद्भिरेव व्याकृतम्। यशोर्थावनर्थक्षतिश्च द्वयोः। व्यवहारज्ञानमुपदेशश्च सहृदयस्य। निवृत्तिरुभयोरपीति यथायोगशब्दार्थः ॥

---

पाठ. १. स्वर्गादिरपि दूरोत्सारित इति–ख.। २. दूरोत्सारितत्वमिति–मधु.। ३. अपिर्न पठ्यते–ख.। ४. प्रसङ्गः स्यात्–मधु.। ५. तत्र–ख.। ६. निर्ममे हि–मधु.। ७. इतिर्न पठ्यते–मधु. ख.।

---

१. प्रतिकीर्त्यादिरूपेत्यादिः।

---

टिप्प. १. इत्यादिनेत्यर्थः।

'असत्कीर्तनकान्तारपरिवर्तनपांसुलाम् ।
वाचं शौरिकथालापगङ्गयैव पुनीमहे ॥'

इत्यभिधाय वेदव्यासोऽपि हरिवंश[1]निर्माणाय प्रवृत्ते ॥

---

**नौका**

निषेधस्य काव्यसामान्यविषयकत्वे । हेयता त्याज्यता । न चेष्टापत्तिरित्याह-तत इति । निषेधस्य असत्काव्यविषयकत्वादित्यर्थः । श्रवणं विचारः, मननं युक्तिभिरनुचिन्तनं, 'आदिभ्य' इत्यादिना निदिध्यासनपरिग्रहः ॥

असत्कीर्तनेति । असत्कीर्तनम् असत्पुरुषवर्णनं तदेव (कान्तारं) [1]गहनं तत्र परिवर्तनेन सञ्चरणेन पांसुलां पङ्किलाम् । कुनायकवर्णनेन दुष्टामित्यर्थः । स्पष्टमन्यत् ॥

---

**मन्दरः**

विश्वेति । काव्यं कर्तृ । विश्वोल्लङ्घने जाङ्घिकीम् । झडिति जगद्व्यापिनीमित्यर्थः । हेलया निर्जितो यक्षराजस्य विभवो धनसमृद्धिः यया ताम् । 'अर्थरै विभवा अपि' इत्यमरः (३.१.९१) कलासु विद्यासु कौशलं ग्रहणादिनैपुण्यम् । अपि च किञ्च । चेतसः परिस्पन्दापहं चाञ्चल्यहरम् ॥ परिवर्द्धईति । छाया परिवर्धत इति । स्पष्टम् ॥

अपि चाभ्युदयोऽप्यस्तीत्याह—न चेति । दृष्टं कीर्त्यादिकमेव दृष्टमात्रम् । तत् फलं यस्य तस्य भावः तत्त्वम् । काव्यस्य न केवलं कीर्त्यादिरेव फलमित्यर्थः । किन्तु कीर्तिमुखेन कीर्तिद्वारा । अत्र मुखशब्दस्य उपायार्थकत्वम् । स्वर्गादिरपि अदृष्टस्येति शेषः । तत्र प्रमाणं दर्शयति—कीर्तिमिति ।

आसंसारं कीर्तिव्याप्तिपर्यन्तम् । 'यावन्नामास्य लोकेऽस्मिन् तावत् स्वर्गे महीयते' इत्युक्तत्वात् ॥

---

पाठ. १. °निर्माणे–मधु. ख. ।

---

१. दहनं–मा. ।

'सैवेह वाणी जनताघ[1]हारिणी
सुधारिणी संसृतिसिन्धुतारिणी ।
याऽनन्तनामावलिदिव्यहारिणी
स्खलत्पदैर्यद्यपि सा विकारिणी ॥'

इत्यादिनारदीयादिपुराणवचनैर्विष्णुकथाप्रतिपादककाव्यानां प्रशस्य[2]मानत्वाच्च ॥

---

नौका

सैवेहेति । इह अस्मिन् जगति । संसृतिः संसारः, स एव सिन्धुः समुद्रः तस्मात् [1]तारिणी तरणहेतुः । लोकानामिति शेषः । सा केत्याकाङ्क्षायामाह-यानन्तेति । [2]यद्यपि सा वाणी । स्खलत्पदैः असत्पुरुषप्रतिपादकतया दुष्टैः पदैः । विकारिणी दुष्टा । तथापीति शेषः । या वाणी, अनन्तस्य विष्णोः नामावलिरेव दिव्यहारः यस्याः सा तथोक्ता, सेत्यर्थः । तथा [3]च या वाणी विष्णुकथाप्रतिपादिका, सा सर्वोत्कृष्टेति भावः । विष्णुकथेति सन्नायकमात्रोपलक्षणम् ॥

---

मन्दरः

निषेधस्य सामान्यपरत्वेऽनिष्टप्रदर्शनपूर्वकं तृतीयविकल्पं दूरीकरोति-काव्यालापांश्चेति । काव्यस्वरूपस्य काव्यसामान्यस्यैवेत्यर्थः । तत्साध्यस्य कीर्त्यादेरभावप्रसङ्गेन तत्फलभूतस्वर्गादिरपि दूरापास्तो भवेदिति भावः । तर्हि निषेधस्मृतेर्वैयर्थ्यं स्यादित्याशङ्क्याह—निषेधस्येति । अन्यथेति । तस्य काव्यसामान्यविषयत्वे तु । रामायणादेरिति । ततः निषेधस्य असत्काव्यविषयत्वात् । श्रवणं प्रसिद्धं, मननं युक्तिभिरनुचिन्तनम् । विजातीयप्रत्ययनिराकरणपूर्वकसजातीयप्रत्ययप्रवाहीकरणरूपनिदिध्यासनम् आदिशब्दार्थः । रामायणमिति । रामायणमिति प्रसिद्धं काव्यं निर्ममे ॥

---

पाठ. १. जनताप—मधु. ख. । २. प्रशंस्यमान—मधु. मन्दरः ।

---

१. तराणी—मा. । २. या विना वाणी—मा. । ३. चेयं—मा. ।

तुरीयेऽपि विकल्पे इदं विवेचनीयम् किं पुरुषार्थापर्यवसायित्वं, तदसाधकत्वात् ? आहोस्वित् कॢप्तादेव प्रमाणाद् वेदादेर्हिताहितप्रवृत्तिनिवृत्तिसिद्धेरतथाविधस्यास्य वैयर्थ्यादिति ॥

---

नौका

पुरुषार्थपर्यवसानाभावादिति चतुर्थं विकल्पं दूषयितुं विकल्पयति-तुरीयेऽपीत्यादिना । तदसाधकत्वात् पुरुषार्थानवसाधकत्वात् । वेदादे-रित्यादिना स्मृत्यादेः परिग्रहः । निवृत्तिसिद्धेरिति । हिते प्रवृत्तिरहिता-न्निवृत्तिरित्यर्थः । अतथाविधस्य अक्लृप्तस्य प्रवृत्तिनिवृत्त्यसम्पादकस्येति वा । अस्य काव्यस्य ॥

---

सुन्दरः

असदिति । असत्कीर्तनमेव कान्तारं महारण्यं तस्मिन् परिवर्तनेन पांसुलां पापयुक्ताम् । 'महारण्ये दुर्गपथे कान्तारं पुन्नपुंसकम्' इत्यमरः (३.३.१७२) 'अपशवो वा अन्ये गो-अश्वेभ्यः' (जै. न्या. १०.८.३) इतिवन्नहि निन्दान्यायेन हरिकथाप्रशंसने तात्पर्यम्, न भारतनिन्दन इति भावः । प्रववृते प्रवृत्तोऽभूत् । अन्यथा कथं वेदव्यासः प्रवर्ततेत्याशयः ॥

सैवेति । सुष्ठु धारः धारणम् अस्या अस्तीति सुधारिणी सुष्ठु धर्तव्या । सा वाण्येव । यदि विचार्यमाणे सा स्खलत्पदैः दुष्टपदैः विकारिण्यपि । या वाणी अनन्तस्य विष्णोर्नामावल्या दिव्यहारिणी । हरिकथाप्रतिपादि-केत्यर्थः । सैवेति पूर्वेणान्वयः । 'अनन्तः शेषविष्ण्वोः स्यात्' इत्यमरः । प्रशस्यमानत्वाच्च इत्यस्य, तृतीयविकल्पोऽपि नावकल्पत इत्यनेन सम्बन्धः । मुद्राराक्षसाद्यसत्काव्यविषयत्वादिति पूर्वोक्तहेतुसमुच्चायकश्चकारः ॥

तुरीय इति । पुरुषार्थपर्यसानाभावादिति चतुर्थे विकल्पे । इदं किमित्यादिना प्रतिपाद्यमानं विकल्पद्वयमित्यर्थः । किमिति । तेषां पुरुषार्थानाम् असाधकत्वात् पुरुषार्थापर्यवसायित्वं किम् ? आहोस्वित् उतेत्यर्थः । अतथाविधस्य कल्प्यप्रमाणस्येत्यर्थः । अस्य काव्यस्य वैयर्थ्याद्धेतोः पुरुषार्थापर्यवसायित्वं किम् ? इति विवेचनीयमिति पूर्वेण सम्बन्धः । पुरुषार्थपर्यवसानाभाव एव पुरुषार्थापर्यवसितत्वम् ॥

---

पाठ. १. तुर्येऽपि-ख., तुरीविकल्पे-मधु. । २. उत-मधु. ।

नाद्यः। तत्साधकत्वस्य पूर्वमेवो[1]क्तत्वात्। न द्वितीयः। निषेधशास्त्रस्यान्यपर[2]त्वोक्तेरस्यापि क्लृप्तप्रमाणत्वात्।

१८. काव्यस्य उपदेशान्तरवेदादिवैलक्षण्यनिरूपणम् --

अथ मन्यसे उपदेशा[3]न्तराद्वेदा[4]देरेव प्रवृत्तिनिवृत्तिसिद्धौ काव्यस्य ततोऽतिशयाभावाद् वैयर्थ्यमिति।

मैवं मंस्था[5]ः। अतिशयसद्भावात्। तथाहि उपदेशो नाम कर्तव्याकर्तव्ययोरन्यतरबोधकं पौरुषेयमपौरुषेयं वा[6] वाक्यम्।

---

**नौका**

तदसाधकत्वाद् इत्याद्यविकल्पं दूषयति--नाद्य इति। तत्साधकत्वस्य पुरुषार्थसाधकत्वस्य। उक्तत्वादिति। 'काव्यं यशसे' इत्यादिनेत्यादिः। द्वितीयं दूषयति--न द्वितीय इति। निषेधेति। 'काव्यालापांश्च वर्जयेद्' इति निषेधस्य मुद्राराक्षसाद्यसत्काव्यविषयकत्वेन सत्काव्यस्य तु क्लृप्तप्रमाणतैवेत्यर्थः। नन्वस्तु[1] क्लृप्तप्रमाणता, तथापि वेदाद्युपदेशापेक्षया अस्यातिशयाभावाद् वैयर्थ्यमिति शङ्कते--अथेति। अतिशयमेवोपपादयति तथा हीत्या-

---

**मन्दरः**

तत्राद्यं परिहरति--नाद्य इति। तत्र हेतुं दर्शयति- तदिति। उदीरितत्वात् 'काव्यं यशसे' इत्यादिनोक्तत्वात्। द्वितीयं परिहरति--न द्वितीय इति। तत्र हेतुं प्रतिपादयति--निषेधशास्त्रस्येति। अन्यपरत्वोक्तेः असत्काव्यविषयत्वकथनात्। अस्य काव्यस्यापि। ततोऽस्यापि क्लृप्तप्रमाणत्वेन अवैयर्थ्यात् पुरुषार्थपर्यवसायित्वं सिध्यत्येवेत्याकूतम्। अथ इत्यादिना वैयर्थ्यम् इत्यन्तेन ग्रन्थेन काव्यस्य पुनर्वैयर्थ्यमापाद्य मैवं मंस्थाः इत्यादिना

---

पाठ. १. °मेवोदीरितत्वात्--मन्दर ख.। २. °परत्वात्--मधु. ख.। ३. उपदेशाद्वेदादेव--नौका.। ४. वेदादेव-- मधु. ख.। ५. न पठ्यते--मधु. ख.। ६. 'च' मधु.॥

---

१. नत्वस्तु--मातृका.।

तदेव शासनाच्छास्त्रम् । तदुक्तमाचार्यैः —

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां[1] येनोपदिश्येत तच्छास्त्रमभिधीयते ॥"

इति ।

---

नौका

द्विना । अथ मन्यस इति [1]शङ्कायाम् उपदेशाद्वेदादेव इत्यनेन वेदस्यैवोपदेशत्वमिति प्रतीयते । तच्चायुक्तम् । उपदेशस्य लौकिकालौकिककार्यसाधारण्यादित्याशयेनोपदेशलक्षणमाह—उपदेशो नामेति । तदेव [1]पौरुषापौरुषान्यतरदेव । उक्तार्थे भट्टतौतिकस्य सम्मति[2]माह—तदुक्तमाचार्यैरिति ।

---

मन्दरः

न निरर्थकम् इत्यन्तेन अतिशयं प्रतिपाद्य तन्निराकरोति । उपदेशान्तरात् काव्यस्यापि निर्व्यूढप्रामाण्यतयोपदेशत्वात् उपदेशान्तरत्वं वेदस्येति वेद्यम् । वैयर्थ्यमिति मन्यसेऽथ मन्यसे किम् ? । अत्र अथशब्दस्य प्रश्नार्थकत्वम् । 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ' इत्यमरः (३.३.२९७)। मैवं मंस्थाः एवं मा मन्यथाः। तथाहि अतिशयसद्भावमेवोपपादयतीत्यर्थः। उपदेशो नामेति । कर्तव्यबोधादेव अकर्तव्यान्निवृत्तिसिद्धेरकर्तव्यबोधादेव कर्तव्ये प्रवृत्तिसिद्धेश्च अन्यतरबोध एव पर्याप्त इति भावः। पौरुषेयं पुरुषप्रणीतं रामायणादिरूपम् । अपौरुषेयं स्वतः प्रवृत्तं वेदरूपं वा वाक्यमुपदेशशब्दार्थ इत्यर्थः। तदेव शास्त्रम् । तत्राचार्यसम्मतिमाह—प्रवृत्तिरिति । नित्येन श्रुतिरूपेण । कृतकेन कृत्रिमेण वा । येन वाक्येन ।

---

पाठ. १. प्रवर्तते येन—मधु. ॥

---

टिप्प. १. शङ्काग्रन्थ इत्यर्थः ।

---

१. पौरुषापुरुषस्येतरथेव—मातृका. । २. सम्मत°.—मातृका. ।

१९. उपदेशस्य त्रैविध्यं, वेदस्य शब्दप्रधानतासमर्थनं च --

स चोपदेशस्त्रिविधः—प्रभुसम्मितः, सुहृत्सम्मितः कान्तासम्मितश्चेति। तत्र प्रभुसम्मितो वेदः, शब्दप्रधानत्वात्। तथा[1] हि यथा लोके प्रभुर्वाङ्मात्रेण पुंसः[2] प्रवर्तयति निवर्तयति च, अन्यथा दण्डमापादयति, एवं वेदोऽपि शब्दप्राधान्येनैव [3]नियोज्यं यथायथं प्रवर्तयति निवर्तयति च[4]। विपक्षे[5] प्रत्यवायं सूचयति।

---

नौका

इत्थमुपदेशलक्षणमुक्त्वा—

"पाणिनिप्रमुखैस्तैस्तैः सर्वशास्त्रविशारदैः।
इह तावत् त्रिधा शास्त्रमभ्यधायि हि तत्र च॥
शब्दप्रधानं वेदाख्यं प्रभुसम्मितमुच्यते।
ईषदप्यन्यथापाठे पाठस्य दुरितं यतः॥
इतिहासपुराणादि सुहृत्सम्मितमिष्यते।
तस्यार्थवादरूपत्वात् कथ्यतेऽर्थप्रधानता॥
ध्वनिप्रधानं काव्यं तु कान्तासम्मितमिष्यते।
शब्दार्थ(र्थौ) गुणतां नीत्वा व्यञ्जनप्रवणं यतः॥" (एका. १.३-६)

---

मन्दरः

एवमिति। नियोज्यमधिकारिपुरुषम्। 'अहरहः सन्ध्यामुपासीत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'सत्यं वद' 'धर्मं चर' इत्यादिविधिवाक्यैः कर्तव्ये प्रवर्तयति। 'न कलञ्जं भक्षयेत्' 'न सुरां पिबेत्' 'न परदारान् गच्छेत्' 'नाप्सु मूत्रपुरीषं(षे) कुर्यात्' इत्यादिनिषेधवाक्यैरकर्तव्यान्निवर्तयति च। विपक्षे वैपरीत्ये। 'प्रत्यवायं सूचयति' [3]एनः प्रतिपादयतीत्यर्थः।

---

पाठ. १. यथा हि लोके—मन्दर. ख.। २. पुनः —मन्दरः। ३. नियोज्यान्—मधु.। ४. न पठ्यते—ख.। ५. पक्ष—ख.।

---

१. स्वै स्वैः—मातृका.। २. °मभ्युदायि—मातृका। ३. न प्रति°.—मातृका.

अत्रार्थस्य प्राधान्यमात्रपरित्यागः। न[1] तु स्वरूपत्यागः। तथात्वे तून्मत्तप्रलपितवदप्रवर्तकतैव वेदस्य स्यात्।

शब्दश्चात्र विधिप्रत्ययोपलक्षितं वाक्यम्। तस्य [2]प्राधान्यं प्रवर्तकत्वम्। तेन शब्दप्रधानं शास्त्रं प्रभुसम्मितमिति लक्षण[3]मुक्तं भवति।

---

**नौका**

इति जल्हण(विद्याधर)वचनमनुसृत्य उपदेशस्य त्रैविध्यमाह—स चेति। तत्र तेषु मध्ये। प्रभुसम्मितः को वेत्याकाङ्क्षायामाह—प्रभुसम्मित इति। तत्र हेतुमाह—शब्देति। हेतुसत्त्वमुपपादयति—तथा हीति। अन्यथा प्रवृत्ति-निवृत्त्योरभावे। शब्दप्राधान्येनेति। शब्दस्य प्राधान्यं प्रवर्तकत्वम्। नियोज्य[1]मविकारिणम्। निवर्तयतीति। ज्योतिष्टोमादिकर्मणि प्रवर्तयति, निवर्तयति च सुरापानादिल्यर्थः। विपक्षे प्रवृत्तिनिवृत्त्यभावे[2]।

ननु शब्दस्य प्राधान्ये अर्थस्य परित्याज्यता किम्? अत आह-अत्रार्थस्येति। तथात्वे स्वरूपस्य त्याज्यत्वे। ननु कीदृशं शब्दस्य प्रवर्तकत्वमित्याशङ्क्य प्रवर्तकशब्द[3]स्वरूपमाह—शब्द[4]श्चात्रेति। एवं शब्दस्य प्राधान्यमुपपाद्य पर्यवसितं लक्षणमाचष्टे—तेनेति। येन शब्दस्य प्राधान्यं तेनेत्यर्थः। शास्त्रमिति। वेदाख्यमिति शेषः।

---

**मन्दरः**

ननु शब्दप्राधान्येनैव निर्वाहे अर्थस्याजागलस्तनवत् वैयर्थ्यं स्यादित्याशङ्क्याह—अत्रेति। अध्ययनादेवाभ्युदयश्रवणादिति भावः। न त्विति। उन्मत्तप्रलपितवत् उन्मत्तप्रलापस्येव। शब्दप्राधान्येनेत्यस्य विवक्षितार्थमाह—शब्दश्चेति। विधिप्रत्ययैः लिङ्—लोट्—तव्यप्रत्ययैः, तदन्यतमेनेत्यर्थः। उपलक्षितं युक्तम्।

---

पाठ. १. न स्वरूपतः—मधु.। २. प्राधान्येन—ख.। ३. लक्षणं चोक्तं—मधु.।

---

१. °मथ कारणं—मातृका.। २. °भावेन सुशब्दस्य—मातृका.। १. °शब्दस्य रूप°.—मातृका. २. शब्दस्यात्रेति—मातृका.।

ननु पुरुषप्रवृत्तिरूप[1]भावनां विदधानः प्रत्यय एव प्रवर्तकः। तस्य प्रेरणार्थे[2] विधानात् तत् कथं वाक्यं प्रवर्तकमिति [3]चेत्, प्रत्ययः प्रवर्तक इत्याकलयन् स च विशिष्टभावनाभिधायीति किं नाचकलद् भवान्? तथाकलने वाक्यमेव प्रवर्तकमिति [4]किं नाज्ञासीत्? न हि भावयेद् इत्युक्ते कश्चित् प्रवर्तते। किन्तु इदमनेनैवं भावयेदिति[5]। तथा सत्यंशत्रयविशिष्टभावनाभिधायी

---

नौका

ननु विधिप्रत्ययोपलक्षितं वाक्यं प्रवर्तकमित्युक्तम्। तदयुक्तम्। प्रत्ययस्यैव प्रवर्तकत्वादित्याशयेन शङ्कते—नन्विति। अत्र च भावना द्विविधा शाब्दी, आर्थी चेति। तत्र शाब्दी भावना नाम लिङादिवाच्या तिङादिनिष्ठा प्रवर्तना। आर्थी च भावना आख्यातवाच्या पुरुषनिष्ठा किम्, केन, कथम् इत्यंशत्रयविशिष्टा पुरुषप्रवृत्तिरेव। तथा च (तयोः) का भावनेत्यत आह—पुरुषप्रवृत्तिरूपामिति। तथा च आर्थीं भावनामित्यर्थः। तस्य विधिप्रत्ययस्य। समाधत्ते न प्रत्यय इति। अंशत्रयेति।

---

मन्दरः

ननु वाक्यस्य प्रवर्तकत्वे विध्यादिषु, लिङ्-लोट्प्रत्ययविधायकं शास्त्रमनुपपन्नं स्यादित्याशङ्क्य प्रत्ययः प्रवर्तकः इत्यादिना समाधत्ते नन्विति। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र स्वर्गकामकर्तृकां स्वर्गफलिकां ज्योतिष्टोमनामकयागकरणिकां दीक्षणीयेष्ट्यादीतिकर्तव्यताकां भावनां विदधानः प्रत्ययो लिङ्प्रत्यय एव प्रवर्तकः। तस्य प्रेरणार्थे विधानात् नियमनात्। प्रत्यय इति। आकलयन् जानन् भवान्। विशिष्टां किं केन कथं रूपांशत्रयविशिष्टां भवितृभवनानुकूलव्यापाररूपभावनामभिधत्त इति तथोक्तः। तादृशः सन् प्रवर्तक इति किं नाचकलत् किं नाज्ञासीत्। तथा पूर्वोक्तप्रकारेण आकलने ज्ञाने सति। वाक्यमेव प्रवर्तकमिति। तादृशप्रत्ययस्य वाक्यरूप-

---

पाठ. १. रूपां–नौका. मधु. ख.। २. प्रेरणार्थविधा°.–मन्दर.। ३. चेन्न–नौका.। ४. न चावाशासीत्–मधु., वा नाशासीत–ख.। ५. °दित्युक्ते–मधु.।

प्रत्ययः प्रवर्तक इति[1] वाक्यमेव प्रवर्तकमित्युक्तं भवति। इदमुदितमाचार्यैः कारिकायाम् –

"किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ।
तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिंश्चोदनोच्यते॥"
इति

---

## नौका

किं केन[1] कथमित्यंशत्रयविशिष्टत्यर्थः। इत्थं च अंशत्रयविशिष्टविधिप्रत्ययस्य प्रवर्तकत्वे सिद्धे[2] वाक्यस्यैव प्रवर्तकत्वमायातमित्याह–इति वाक्यमेवेति। उक्तार्थे वार्तिकसंवादमाह–[3]इदमुदितमिति।

किमादीति। आदिना केन कथम् अंशयोर्ग्रहः। शास्त्रेऽस्मिन् वेदरूपशास्त्रे इत्यर्थः।

---

## मन्दरः

त्वादिति भावः। असुमेवार्थं विशदयति नहीति। किन्त्विति। प्रवर्तते इत्यनुवर्तते। तथा स(ती)त्यारभ्य भवत्यन्तं स्पष्टम्। अत्राचार्यसम्मतिं दर्शयति–किमिति। किमादिभिः किं केन कथं शब्दैः अपेक्षितैराकाङ्क्षितैः स्वर्गादिभिः पूर्णः प्रत्ययः लिङ्-लोडन्यतरः विधौ समर्थः। अयमर्थः – 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र, किम्–स्वर्गम्, केन–यागेन, कथम्–ज्योतिष्टोमाङ्गभूतदीक्षणीयाद्यनुष्ठानप्रकारेण, इत्येतदंशत्रयविशिष्टस्यैव प्रत्ययस्य विधौ सामर्थ्यमिति। तेन हेतुना प्रवर्तकं वाक्यमस्मिन् शास्त्रे चोदनोच्यते। विधिवाक्यस्य चोदनेति तान्त्रिकसमयः। ततो विशिष्टप्रत्ययरूपस्य वाक्यस्य प्रवर्तकत्वात् शब्दप्राधान्येन इत्यत्र शब्दशब्दस्य विधिप्रत्ययोपलक्षितवाक्यपरत्वमिति निष्कर्षः।

---

पाठ. १. इत्युक्तौ–मधु.।

---

१. तेन–मातृका.। २. सिद्धे इत्यनन्तरं 'वाक्यस्यैव प्रवर्तकत्वे सिद्धे' इत्यधिकम्–मातृका.। ३. इदमुदितमित्यादीन्यामादित्यादिना केनकथमंशयोः–मातृका.।

**अतो वेदवाक्यानामन्यथापाठे[1] अपाठे[2] वा अन्यथानुष्ठानेऽननुष्ठाने वा महान् प्रत्यवायः। अध्ययनविधेः [3]फलवदर्थावबोधपर्यन्तत्वात्। तेन प्रभुसम्मितो वेदः।**

---

**नौका**

नन्वेतावता कथं शब्दस्य प्राधान्यमत आह—अत इति। यतश्च शब्दस्य प्राधान्यमत इत्यर्थः। वेद[1]वाक्यानामन्यथापाठ इति। तथा च वेदवाक्यानामन्यथापाठे[2]ऽपि यतो दुरितं तदर्थस्य अननुष्ठाने अन्यथानुष्ठाने वा महान् प्रत्यवाय इति किमु वक्तव्यमिति (अतोऽत्र) शब्दस्य प्राधान्यमिति भावः। ननु अध्ययनविधेः अध्ययनमात्रस्य लाभेऽपि अनुष्ठानालाभादिदमयुक्तमत आह-अध्ययनविधे[3]रिति। [4]तथा च 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधेरनुष्ठानरूपफलवदर्थावबोधकत्वान्तत्वादनुष्ठानावश्यम्भावेन ह्यननुष्ठाने प्रत्यवाय इति भावः।

उपपादितं प्रभुसम्मितोपदेशमुपसंहरति तेनेति।

---

**मन्दरः**

अत इति। अतः शब्दप्राधान्याद्धेतोः। अन्यथापाठे स्वरवर्णाननुसारेणोच्चारणे। अपाठे वा 'मन्त्रान्तैः कर्मादीन् सन्निपातयेत्' इति नियमात् क्रियाकाले यथासमयमनुच्चारणे वा। अन्यथानुष्ठाने क्रियाया अन्यथाचरणे। अननुष्ठाने अकरणे वा महान् प्रत्यवायः भवतीति शेषः। ननु वेदस्य शब्दप्रधानत्वे कथमपाठादिभिः प्रत्यवाय इत्याशङ्क्याह-अध्ययनविधेरिति। 'स्वाध्यायोऽध्येतव्यः' इति तव्यप्रत्ययप्रतिपादितस्येत्यर्थः। फलवान् सफलो योऽर्थावबोधः स पर्यन्तोऽवधिः यस्य तस्य भावः तत्त्वं तस्मात्। अर्थावबोधस्य अनुष्ठानफलकत्वादनुष्ठानमेव तस्य फलमिति बोध्यम्।

तेन हेतुना वेदस्य प्रभुसम्मितत्वम्।

---

पाठ. १. °पाठेऽन्यथानुष्ठाने च महान्–ख.। २. अपाठे वा इति न पठ्यते–मधु.। °बोधानपर्यन्त.–मन्दरः।

---

१. पदवाक्यानां–मातृका। २. °पाठेति–मातृका। ३. °विधिरिति–मातृका.। ४. तथा च स्वध्यायोऽध्येतव्य इतयध्ययनविधिरनुष्ठानरूपफलं वदतां च बोधकत्वं तत्त्वाननुष्ठानावश्यम्भावे न त्वननुष्ठाने प्रत्यवाय इति भावः–मातृका.।

२०. पुराणादीनामर्थप्रधानतासमर्थनम् --

सुहृत्सम्मितः पुराणादिः, अर्थप्रधानत्वात्। अत्रार्थो वाक्यार्थो न पदार्थः, तस्याप्रवर्तकत्वात्। तत्प्राधान्यं च प्रवर्तकत्वमेव। अर्थ[1]वादात्मकाः पुराणादयो वेदवद् '[2]एतदेवं कुर्याद्' इति विधिबलेन पुरुषं प्रवर्तयितुं नेशते। किन्तु प्राचीनपुरुष-कथाशरीरवर्णनद्वारा सुहृद इव युक्तिभिरनुनीय प्रवर्तयन्ति।

कान्तासम्मितोपदेशस्तु(न्तु) काव्यम्।

'[3]ध्वनिप्रधानं शास्त्रं (तु) कान्तासम्मितमुच्यते।' इति लक्षणम्[4]।

---

नौका

अथ सुहृत्सम्मितमाह--सुहृत्सम्मित इति। तथा च सुहृत्सम्मित उपदेशः पुराणेतिहासादिरित्यर्थः। तत्र हेतुमाह--अर्थेति। ननु अर्थप्रधा-नत्वाद् इत्यत्र किं वाक्यार्थप्रधानता[1] (उत पदार्थप्रधानतेति विकल्प्य समाधत्ते-अत्रेति।) तथा च अर्थप्रधानं शास्त्रं सुहृत्स(म्मित)मिति लक्षणं बोध्यम्।

कान्तासम्मितोपदेशमाह--कान्तासम्मितेति। तथा च काव्यं कान्ता-सम्मितोपदेश(कम्)इत्यर्थः। अस्य लक्षणमाह--ध्वनिप्रधानमिति। ध्वनि-

---

मन्दरः

सुहृत्सम्मित इति। इतिहासपुराणादि सुहृत्सम्मितमिष्यते। "तस्यार्थ-वादरूपत्वात् कथ्यतेऽर्थप्रधानता"इत्युक्तत्वात्[1]। अर्थम् उक्तार्थं वदन्ति इति अर्थवादाः ते आत्मा येषां ते यथोक्ताः।

---

पाठ. १. अर्थप्रधानात्मकाः--मधु.। २. एतत् न पठ्यते--मधु. ख.। ३. ध्वनिप्रधानं शास्त्रं कान्तासम्मितम्--मधु. ख। ४. लक्षणात्--मधु।

---

टिप्प. 1. जल्हणेनेति शेषः।

---

१. °प्रधानतेति शेषः--मातृका.।

यथा हि कान्ताः[1] कटाक्षवीक्षणहावभावादिभिः पुरुषं रञ्जयन्ति,[2] व्यञ्जनव्यापारेणैव [3]सर्वं कार्यं कारयन्ति, एवं काव्यविद्यापि शब्दार्थतदुभयशक्तिमूलया [4]व्यञ्जनावृत्त्या सहृदयहृदया[5]नन्दिन्या लोकोत्तरचमत्कारकारिण्या 'रामादिवद्वर्तितव्यम्, न रावणादिवद्' इति व्यञ्जयन्ती सरसतामापाद्यैव पुंसः [6]कर्तव्ये प्रवर्तयति, निवर्तयति चाकर्तव्यादिति काव्यमुपदेशान्तरा[7]दतिशायितया न निरर्थकम् ।

---

नौका

लक्षणं त्वग्रे वक्ष्यते । तत्प्राधान्यं प्रवर्तकत्वमेव । अस्य कान्तासम्मित[1]त्वमुपपादयति--यथेत्यादिना । हावभावेति । तत्स्वरूपमप्यग्रे[2] वक्ष्यते । आदिभिः इत्यादिना मन्दहासमधुरालापा[3]दिपरिग्रहः । (व्यञ्जनाव्यापारेण) व्यञ्जनावृत्त्या, एतल्लक्षणमप्यग्रे । इत्थं त्रिविधमुपदेशं लक्षणोपपत्तिभ्यां प्रपञ्च्य काव्यस्य पूर्वोक्तनैरर्थक्यशङ्कां वारयन्नुपसंहरति---एव[4]मित्यादिना ।

---

मन्दरः

कान्तेति । 'ध्वनिप्रधानं काव्यं तु कान्तासम्मितमिष्यते । शब्दार्थौ गुणतां नीत्वा व्यञ्जनप्रवणं यतः ॥'(एका. १.३.६) इत्युक्तत्वात् । उपदेशान्तरादित्यतिशयसद्भावेन अवैयर्थ्यात् पुरुषार्थपर्यवसायित्वं व्यक्तमिति योज्यम् ।

---

पाठ. १. कान्ता--मधु. । २. रञ्जयन्तो--मधु. । ३. स्वाभिलषितं सर्वं कार्यं कारयति--मधु. । ४. चमत्कारकारिण्या इत्यनन्तरं पठ्यते--मधु. । ५. °हृदयाह्लादिन्या--मधु. । ६. प्रवर्तयति कर्तव्ये--मधु. । ७. °देशान्तरातिशयितया--मधु., °देशान्तरातिशयिततया--ख. ।

---

१. °समाधानमुप.--मातृका. । २. °प्यत्रैव वक्ष्यते--मातृका. । ३. °रालाप च परि°.--मातृका. । ४. काव्यमित्या°.--मातृका. ।

नापि पञ्चमः+ मूलप्रमाणाभावेऽपि काव्यविचारशास्त्र[1]प्रवृत्त्युपपत्तेः। दृश्यते हि मूलप्रमाणाभावेऽपि पदार्थमीमांसात्मकन्यायवैशेषिकशास्त्रयोः प्रवृत्तिः। उपलभ्यते च[2] पदमीमांसायाः सञ्चारः। तद्वद[3]त्रापि भविष्यति।

२२. काव्यमीमांसायां मूलप्रमाणसद्भावनिरूपणम् --

अथ मन्यसे 'स्वाध्यायोऽध्येतव्यः' इत्यत्राध्ययनविधिः प्रतीयते। तस्य च[4] फलवदर्थावबोधपर्यन्तता न्यायसिद्धा।

---

नौका

तदेषु पूर्वोक्तेषु पञ्चसु विकल्पेषु चतुष्टयं निरस्य 'तत्कर्तव्यताबोधकप्रमाणाभावाद्वा' इति पञ्चमं निरस्यति--नापि[1] पञ्चम इति। ननु मूलप्रमाणाभावे शास्त्रप्रवृ[2]त्तिरेवासिद्धेत्याशङ्क्य सदृष्टान्ता[3]लोकमुपपादयति-- दृश्यते हीति। पदार्थमीमांसा द्रव्यादिपदार्थविचारः। पदमीमांसा पदविचारः शब्दशास्त्रम्। भविष्यति। तथा च मूलप्रमाणाभावेऽपि काव्यमीमांसा युक्तेवेति भावः।

---

मन्दरः

पञ्चमविकल्पं परिहरति--नापि पञ्चम इति। 'तत्कर्तव्यताबोधकप्रमाणाभावाद्वा' इत्यन्तिमविकल्पोऽपि नावकल्पत इत्यर्थः। तत्र हेतुमुपपादयति--मूलप्रमाणाभावेऽपीति। का उपपत्तिरित्यत आह--दृश्यते हीति। पदार्थानां षोडशसङ्ख्याकानां च सप्तसङ्ख्याकानां च (वा) मीमांसा आत्मा ययोस्तयोः। न्यायवैशेषिकशास्त्रयोः न्यायशास्त्रस्य वैशेषिकशास्त्रस्य चेत्यर्थः। पदमीमांसायाः शब्दशास्त्रस्य। अत्रापि 'मूलप्रमाणाभावेऽपि' इत्यनुवर्तते। तद्वदिति। भविष्यति प्रवृत्तिरिति कर्तृपदमनुवर्तते -

---

पाठ. १. शास्त्रस्य प्रवृ°.–मधु.। २. च न पठ्यते–मधु. ख.। ३. तद्वत्तत्रापि–ख.। ४. न पठ्यते–मधु.।

---

१. राजपञ्चम–मातृका। २. °प्रवृत्तेरेवा.–मातृका.। ३. सदृष्टान्तं लोक°.–मातृका.।

अर्थावबोधश्च द्विविधः पदार्थगोचरो वाक्यार्थगोचरश्चेति। [1]द्विविधोऽपि विचारसाध्यः। तत्र वाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात् [2]तस्य च साधुपदाधीनत्वात् पदसाधुत्वमीमांसा[3]कर्तव्यताप्यध्ययनविधिनैवापादिता। अनन्तरं परस्परव्यावृत्तपदार्थबोधसिद्धये पदार्थविचारात्म[4]कयोर्न्यायवैशेषिक[5]शास्त्रयोरप्यारम्भस्तेनैवापादितः। एवं वाक्यार्थज्ञानाय वाक्यार्थमीमांसाशास्त्रारम्भोऽपीति न कुत्रापि मूलप्रमाणशून्यतेति। अत्रोच्यते। कान्तासम्मिततया [6]सारस्येन कर्तव्याकर्तव्ययोः प्रवृत्तिनिवृत्तिजनकत्वात् काव्यमुपदेशान्तरमतिशेत इत्यवोचाम। ध्वनिप्रधानं शास्त्रं कान्तासम्मितमिति लक्षणं [7]चावादिष्म।

---

**नौका**

ननु न्यायवैशेषिकादीनामध्ययनविधिमूलकत्वात् न प्रमाणाभाव इति शङ्कते—अथेत्यादिना शङ्काग्रन्थः स्पष्टः ॥

समाधत्ते—अत्रोच्यत इति। पूर्वोक्ते एव लक्षणोपपत्ती स्मारयति—कान्तेत्यादिना। न्यायसिद्धेति। तथा च विचारमन्तरेण ध्वनिज्ञानासम्भवात् तज्ज्ञानाय काव्यमीमांसापि कर्तव्यैवेति भावः। नन्वेतावतापि काव्यमीमांसाया मूलप्रमाणं नोक्तमेवेत्यतस्तदुपपादयति—उपलभ्यन्त इत्यादिना। पुण्यश्लोकस्य चरितमित्यादि। स्पष्टार्थः ॥

---

**मन्दरः**

ननु पदपदार्थवाक्यार्थमीमांसानां प्रवृत्तौ श्रुतिरेव प्रमाणं, न काव्यमीमांसाया इत्याशयेनाह-अथेति। न कुत्रापि मूलप्रमाणशून्यतेति मन्यसेऽथ मन्यसे किमिति सम्बन्धः। तस्य अध्ययनविधेश्च। न्यायसिद्धा यजनाद्यन्यथानुपपत्त्याऽर्थावबोधावश्यकता कल्प्यत इत्यर्थापत्तिप्रमाणसिद्धा। अनन्तरं पदसाधुत्वपरिशीलनानन्तरमित्यर्थः। परस्परं व्यावृत्तानां भिन्नानां पदार्थानां बोधसिद्धये। तेन

---

पाठ. १. अत्र द्विविधोऽपि–मधु.। २. तस्यापि–मधु.। ३. °मीमांसायाः कर्त°.–मधु.। ४. °विचारणात्मकयो.–ख.। ५. °वैशेषिकयोरप्यारम्भः–मधु.। ६. स्वारस्येन–मधु.। ७. च न पठ्यते–ख.।

ध्वनयश्च विचारमन्तरेण दुर्बोधा इति काव्यमीमांसाकर्तव्यता[1] च न्यायसिद्धा। उपलभ्यन्ते च [2]बहुतराणि श्रुतिस्मृतीतिहासपुराणेषु पुण्यश्लोकगुणप्रतिपादककाव्यकर्तव्यताप्रतिपादकानि वचनानि --

'पुण्यश्लोकस्य चरितमुदाहरणमर्हति।'

'कीर्तयेच्च जगन्नाथं वेदं चापि समीरयेत्।'

---

### नौका

ननु स्मृतीतिहासपुराणानां सिद्धे प्रामाण्ये तत्रत्यानाममीषां वचनानामपि काव्यकर्तव्यतायां प्रामाण्यं स्यात् तदेवासिद्धम्, अत आह--तत्र पुराणेति। पुराणभारतवचनानां पुराणवचनानां भारतवचनानां चेत्यर्थः। ननु पुराणादेर्वेदत्वमेवासिद्ध[1]मत आह--पुराणं पञ्चम इति। स्मृत्यधिकरणे निर्णीतमिति। ''*वैदिकैः स्मर्यमाणत्वात् तत्परिग्रहदार्ढ्यतः। सम्भाव्यवेदमूलत्वात् स्मृतीनां वेदमूलता'' (?) इति स्मृत्यधिकरणे स्मृतीनां [2]श्रुतिमूलकतयैव प्रामाण्यस्य

---

### मन्दरः

अध्ययनविधिनैव। वाक्यार्थमीमांसाशास्त्रस्य पूर्वमीमांसायाः। आरम्भोऽपि अत्रापि शब्दाद् अध्ययनविधिनैवापादित इति पदत्रयस्यानुवृत्तिः।

---

पाठ. १. °तापि न्याय.--ख.। २. बहूनि--मधु.।

---

१. °सिद्धत्वमत-मातृका.। २. °स्मृति.--मातृका.।

---

टिप्प.--

*जैमिनीयन्यायमालायां तु कारिकेयमित्थं पठ्यते--

वैदिकैः स्मर्यमाणत्वात् सम्भाव्या वेदमूलता।
विप्रकीर्णार्थसंक्षेपात् सार्थत्वादस्ति मानता॥ (जै. ३.१.२)

विवृतं चापि तत्रैव--विमता स्मृतिर्वेदमूला। वैदिकमन्वादिप्रणीतस्मृतित्वात्, उपनयनादिस्मृतिवत्। न च वैयर्थ्यं शङ्कनीयम्। अस्मदादीनां प्रत्यक्षेषु परोक्षेषु नानावेदेषु विप्रकीर्णस्यानुष्ठेयार्थस्यैकत्र संक्षिप्यमाणत्वात्। तस्मादियं स्मृतिर्धर्मे प्रमाणम् इति॥

'क उत्तमश्लोकगुणानुवादात्
पुमान् विरज्येत विना पशुघ्नात् ।'

'प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः ।
अकीर्तिं¹कर्तनीं चैव कुकवित्वविडम्बनाम् ॥'

---

नौका

निर्णीतत्वेन काव्यकर्तव्यतायामपि तद्बोधकस्मृतीनां प्रामाण्यं सङ्गतमेवेति भावः ॥

ननूक्तस्मृतीनां रागमूलकत्वेनाप्रामाण्यम् । यूपहस्तिनो (हस्तेन) दानमाचरतीत्यादिवत् । वाजपेययूपपरिव्याणशाटकं 'यूपहस्ते'(हस्त)शब्दार्थः । इति शङ्कते—नन्विति । एतासां 'पुण्यश्लोक(स्य)चरितम्' इत्यादीनाम् । ननु रागमूलकत्वे कथमप्रामाण्यम् ? अतस्तत्र सम्मतिमाह—तदुक्तमिति । रागेति । राग इच्छा, द्वेषो मन्युः । तथा च रागादिमूलकत्वे सदृष्टान्तम-

---

मन्दरः

अत्रोच्यत इत्यादिना काव्यमीमांसाशास्त्रस्यापि मूलप्रमाणं दर्शयति—ध्वनयश्चेति । काव्यमीमांसाकर्तव्यता च न्यायसिद्धा, ध्वनिबोधान्यथानुपपत्त्या काव्यमीमांसावश्यकता कल्प्यत इत्यर्थापत्तिप्रमाणसिद्धा । न तत्र केवलमर्थापत्तिरेव, शब्दप्रमाणमप्यस्तीत्याह—उपलभ्यन्त इति । किञ्चेति चार्थः । वचनान्युपलभ्यन्त इत्यन्वयः ।

तान्युदाहरति—पुण्येति । पुण्य उत्तमः श्लोकः कीर्तिः यस्य तस्य । 'पद्ये यशसि च श्लोकः' इत्यमरः (३.३.२)। चरितं कर्तृ। उदाहरणमर्हति, पुण्यश्लोकचरितं वर्णनीयमित्यर्थः ॥

---

पाठ. १°वर्धनीं.–मन्दर. । अकीर्तिवर्धिनीं–ख. ।

'कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः ।
अकीर्तिं तु निरालोकनरकोद्देशदूतिकाम् ॥'

'तस्मात् कीर्तिमुपादातुमकीर्तिं च व्यपोहितुम् ।
काव्यालङ्कारशास्त्रार्थः सम्पाद्यः कविपुङ्गवैः ॥'

इत्यादीनि[1] ।

अत्र पुराणभारतवचनानां वेदरूपत्वेन प्रामाण्यं[2] निर्विवादम् । 'पुराणं पञ्चमो वेदः' 'भारतं पञ्चमो वेदः' इति[3] तयोर्वेद[4]त्वोक्तेः ।

---

नौका

प्रामाण्यपूर्वपक्षमुपसंहरति--तथा चेति । स्मृतिवदिति । तथा च 'हेतुदर्शनाच्च' इत्यधिकरणे 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' इति स्मृते रागमूलकत्वेनाप्रामाण्यमुक्तम्, तद्वदिति भावः । अवान्तरदीक्षाविसर्जनार्थो होमः वैसर्जनीयहोमः । स च यजमान-तत्पत्नीपुत्रभ्रातृषु समन्वारब्धेषु अहतेन वाससा उपरि सम्प्रच्छादितेषु कर्तव्यः । तत्र तत्सम्प्रच्छादनार्थं वासो वैसर्जनीयहोमीयम् । तदध्वर्युर्गृह्णातीति स्मृत्यर्थः ।

---

मन्दरः

कीर्तयेदिति । हरिकीर्तनं वेदपारायणसममित्यर्थः । हरिकथावर्णनं नियमेन कर्तव्यमिति भावः । क इति । उत्तमश्लोकस्य गुणानुवादात् गुण-वर्णनात् । पशुघ्नात् सौनिकात् विना । यद्वा अपगता शुक् यस्मात् सोऽपशुक् तमात्मानं हन्तीत्यपशुघ्नः आत्मज्ञानशून्यः तस्माद् विना । कः पुमान् विरज्येत विरक्तो भवेत् । न कोऽपीत्यर्थः ॥

---

पाठ. १. इत्यादि–मधु. । २. निर्विवादमेव–मधु., निर्विचिकित्सम्–ख. ।
३. इत्यभयो.–मधु. । ४. वेदतोक्तेः –मधु. ख. ।

स्मृतिवचनानां श्रुतिमूलकत्वेन प्रामाण्यं स्मृत्यधिकरणे [१]निर्णीतमेव। ननु 'काव्यालापाँश्च वर्जयेद्' [२]इति स्मृतिबाधित[३]त्वादेतासां स्मृतीनां रागादिमूल[४]कत्वं वर्णनीयम्। तदुक्तम्—

'रागद्वेषमदोन्मादप्रमादालस्यलुब्धता:।
क्व वा नोत्प्रेक्षितुं शक्या: स्मृत्यप्रामाण्यहेतव:॥'

इति

---

नौका

समाधत्ते—मेवमिति।

अत्राप्रामाण्यवर्णनमिति। तथा च वैसर्जनीयस्मृते: दृष्टरागमूलकत्वेनाप्युपपत्तेरत्यन्तादृष्टश्रुतिमूलकत्वकल्पनमयुक्तमिति तस्या[१] यथाकथञ्चिदपि प्रामाण्यं[२] न सम्भवति। प्रकृते स्मृतीनां प्रामाण्ये न कश्चिद् दोष इति भाव:। प्रकृतस्मृतीनां सयुक्तिकं प्रामाण्यमुपपादयति—प्रकृते त्विति। निषेधस्मृति: काव्यालापांश्च वर्जयेदिति निषेधस्मृति:। काव्यमात्रं सदसत्काव्य-

---

मन्दर:

अकीर्तिमिति। निरालोका: प्रकाशरहिता:। अन्धतमसावृता इत्यर्थ:। ये नरकास्तेषाम् उद्देशस्य प्रदेशस्य दूतिकाम्, तत्प्रापणसाधनभूतामित्यर्थ:। आहुरित्यनुवर्तते।

काव्येति। काव्यालङ्कारशास्त्रयो: अर्थोऽभिधेय: स एव अर्थो धनम्। काव्यं काव्यमीमांसाशास्त्रं च कविभि: कथनीयमित्यर्थ:।

---

पाठ. १. निर्णीतम्—मधु.। २. °दित्यादिस्मृत्या—मधु.। ३. °बाधितानां°.—ख.। ४. °मूलत्वं—मन्दर. ख.।

---

१. तस्य—मातृका.। २. प्रामाण्यं सम्भवेदिति—मातृका.।

तथा[1] च वैसर्जनीयवासोग्रहणस्मृतिवदप्रामाण्यमिति चेन्नैवम् । कथञ्चिदपि प्रामाण्यानिर्वाहे[2]ऽत्राप्रामाण्यवर्णन[3]मिति । प्रकृते[4]तु व्यवस्थया प्रामाण्यं निर्वोढुं शक्यते । तथा हि—यदि निषेधस्मृतिः काव्यमात्रं गोचरयेत्, [5]तर्हि रामायणादेरप्युच्छेदः स्यादिति न्याया-

नौका

सामान्यम् । तदनुरोधेन युक्त्यानुगृहीतविशेषवचनानुसारेण । सामान्य-निषेधः काव्यालापांश्च वर्जयेदिति सामान्यतः प्रवृ[1]त्तनिषेधः । विशेषस्मृतय

मन्दरः

ननु श्रुतिस्मृतीहासपुराणेषु इत्युद्दिश्य श्रुतिर्नोदाहृतेत्याशङ्क्य पुराणादीनां श्रुतिरूपत्वमिति समाधत्ते—अत्रेति ।

नन्विति । रागादिमूलत्वं वर्णनीयम्, रागादिमूलत्वेनाप्रामाण्यं वक्तव्यमित्यर्थः । ननु पाराशर्यादीनां रागाद्युपहतचेतस्कत्वं वक्तुमयुक्तमित्या-शङ्क्य तत्तदुपयोगवशात् तेऽपि तादृशा भवन्तीत्याह—रागेति । क वा पुरुषे उत्प्रेक्षितुं न शक्याः । रागादयः सर्वेष्वपि उत्प्रेक्षितुं शक्या एवेत्यर्थः । ततश्च तथा सति । वैसर्जनीयेति । अवान्तरदीक्षाविसर्जनार्थहोमीयवासोग्रहणस्मृते-रिव । यथा अनुरागमूलाया 'वैसर्जनीयहोमीयं वासोऽध्वर्युर्गृह्णाति' इति स्मृतेरप्रामाण्यं तथैवासामपीति चेन् नैवम् । कथञ्चिदिति । अप्रामाण्यवर्णनं कर्तव्यमिति शेषः । तथाहि व्यवस्थया प्रामाण्यनिर्वाहप्रकारमेवोपपादयती-त्यर्थः । यदीति । काव्यमात्रं काव्यजातम् । न्यायानुगृहीततया रामा-

पाठ. १. ततश्च—मन्दर. मधु. । २. °निर्वाहेऽप्रामाण्य°—मधु. मन्दर. ख. । ३. °वर्णनम्—मधु. ख. । ४. तु न पठ्यते—मधु. । ५. तर्हि न पठ्यते—मन्दर. ।

१. प्रवृत्ति.—मातृका. ।

नुगृहीततया विशेषवचनानां बलवत्त्वात् [1]तदनुरोधेन सामान्यनिषेधोऽसत्काव्य[2]विषयतया प्रामाण्यमश्नुवीत। विशेष[3]स्मृतयश्च स्वार्थे निष्प्रतिपक्षतया निरङ्कुशं प्रामाण्यं भजेरन्नित्यु[4]भयेषां प्रामाण्यं व्यवस्थाप्यते। [5]अतो न कश्चिद् दोषः॥

२३. काव्यमीमांसाया अध्ययनविधिमूलकत्वसमर्थनम्

अथैवमपि काव्यमीमांसाया मूलभूतप्रत्यक्षश्रुत्या विना न वैदिकम्मन्यः परितुष्यति भवान्। तर्हि तदुपन्यासेन[6] भवन्तं

---

नौका

इति। 'पुण्यश्लोकस्य चरितम्' इत्यादिस्मृतयः। इत्युभयेषामिति। 'पुण्यश्लोकस्य' इत्यादिकाव्यकर्तव्यताबोधकानां 'काव्यालापाँश्च वर्जयेत्' इति निषेधस्य चेत्युभयविधानामित्यर्थः॥

तदेवं काव्यमीमांसां प्रसाध्य वेदेऽपि काव्यलक्षणाक्रान्तानां [1]वाक्यानां बहुशः सत्त्वात् तज्ज्ञानाय काव्यमीमांसा कर्तव्यैवेत्यध्ययनविधिरपि प्रतिपादयतीति वक्तुं पूर्वपक्षिणं प्रत्याह—अथैवमपीत्यादिना। वैदिकम्मन्यः वैदिका-

---

मन्दरः

यणाद्यनुच्छेदान्यथानुपपत्त्या विशेषस्मृतीनां बलवत्त्वं कल्प्यत इत्यर्थापत्तिप्रमाणावलम्बिततया। तदनुरोधेन विशेषवचनबलानुसारेण। अश्नुवीत प्राप्नुयात्॥

अथेति। न परितुष्यत्यथ। अत्रापि अथशब्दः प्रश्ने। वक्ष्यमाणेति गुणतरङ्गे वक्ष्यमाणलक्षणाः। वेदेऽर्थव्यक्त्यादीन् क्रमेणोदाहरति—'यदेकस्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते। यन्नैकां

---

पाठ. १. तदनुरोधात्–ख.। २. °काव्यप्रामाण्य°–मधु। ३. °स्मृतयस्तु–मधु.। ४. °त्युभायानां–मन्दर. मधु। ५. ततो–मधु। ६. °न्यासेनैव–ख.।

---

१. काव्यानां–मातृका.।

परितोषयिष्यामः । तथा हि — अध्ययनविधिर्वैदिकप[1]दपदार्थ-वाक्यार्थमीमांसानां प्रयोजक इति [2]हि त्वयोक्तम् । [3]स एव विधिः काव्यमीमांसा[4]प्रयोजकोऽपि भवति । सन्त्येव हि प्रायशो वेदेष्वपि काव्य[5]लक्षणलक्षितान्यदोषाणि सगुणानि सालङ्काराणि वाक्यानि ।

[6]गुणा [7]वक्ष्यमाणलक्षणा [8]अर्थव्यक्त्यादयः । ते च— 'यदेकस्मिन् यूपे[9] द्वे रशने' [10]इत्यादिषु वाक्येषु सम्भवन्ति ।

---

नौका

भिमानी, वेदवाक्यान्येव प्रमाणमित्यभिमानशालीत्यर्थः । तदेवोपपादयति— तथा हीति । अध्ययनविधिरिति । 'स्वाध्यायोऽध्येतव्यः' इति विधिः । सालङ्काराणि वाक्यानीति । एतेन '[1]सगुणालङ्कृती काव्यं शब्दार्थौ दोषवर्जितौ' (द्वितीये) इति काव्यलक्षण[2]मुक्तं भवति । ननु गुणालङ्काराणां किं लक्षणम् ? के च त[3]इत्यत आह–गुणालङ्कारा इति । वक्ष्यमाणलक्षणा इति । गुणालङ्कारतरङ्गयोरिति शेषः । [4]अर्थाभिव्यक्त्यादय इति । झटि-

---

मन्दरः

रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वे पती विन्दते इत्यादिषु । एवमन्यत्रापि तत्तद्गुणा द्रष्टव्याः । आ ते गर्भ इति । इषुधिं बाण इव ते योनिं पुमान् गर्भ ऐतु । अत्र उपमानादीनामुपादानादुपमा । त्रिंशदस्या

---

पाठ. १. पदेति न पठ्यते–मधु. । २. हि न पठ्यते–मधु. । ३. स एव काव्या–मीमांसायाः प्रयोजकोऽस्तु–मधु. । ४. प्रयोजको भवतु–ख. । ५. लक्षितानि ह्यदोषाणि–मधु. ख. । ६. गुणालङ्कारा वक्ष्यमाण° नौका. । ७. वक्ष्य-माणा गुणा अर्थ.°–ख., वक्ष्यमाणलक्षणा गुणा अर्थ°.–मधु. । ८. अर्थाभिव्य-क्त्या°.--नौका. । ९. °यूप इत्यादिवाक्येपु--ख. । १०. इत्यादिवाक्येषु–मन्दर इत्यादौ–मधुः ।

---

१. सगुणालङ्कृतिकाव्यशब्दाथौ दोषवर्जिताविति–मातृका. । २. °मुचितं–मातृका. । ३. इत्याह–मातृका. । ४. अर्थादिव्यक्त्या.–मातृका. ।

[1]अलङ्कारा उपमादयः। 'आ ते गर्भो योनिमेतु पुमान् बाण इवेषुधिम्' (आश्व.गृ.सू. १.१३.६) इत्यादिषूपमा। 'त्रिंशदस्या जघनं योजनानि' (तै. ब्रा. २.४.२) इत्यादावतिशयोक्तिः। 'प्राणा उपरवा हनू अधिषवणे' (तै.६.२.११.४) इत्यादौ रूपकम्। 'यस्यामुशन्तः प्रहराम शेपम्' (ऋ.१०.८५-३७) 'उपोप मे परामृश' 'जायेव पत्य उशती

---

नौका

त्यवबोधकत्वमर्थाभिव्यक्तिः, प्रसिद्धार्थ इति यावत्। आदय इत्यादिना ओजःप्रभृतीनां परिग्रहः। ते च गुणाश्च। गुणवद्वाक्यमुदाहरति—यदेकस्मिन्निति। 'यदेकस्मिन् यूपे द्वे रशने परिव्ययति' इति वाक्ये प्रसिद्धार्थवत्त्वम्। यूपे [1]रशनाद्वयपरिव्याणस्य प्रसिद्धत्वादित्यर्थः। [2]आदिष्वित्यादिना 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमाधत्ते' इत्यादेः परिग्रहः। सालङ्कारवाक्यान्युदाहरति — आ ते गर्भ इत्यादिना। इषुधिं तूणीरं बाण इव पुमान् गर्भ पुरुषगर्भः ते योनिमैतु प्रविशत्वित्यर्थः। उपमा

---

मन्दरः

इति। अस्या जघनं कटिपुरोभागः त्रिंशद्योजनानि, तत्परिमितमित्यर्थः। अत्रासम्बन्धे सम्बन्धरूपातिशयोक्तिः। 'प्राणा उपरवा हनू अधिषवणे जिह्वा चर्म ग्रावाणो दन्ताः' (तै. ६.२.११.४) इत्यत्र आसन्दीचरणन्यासार्थावटचतुष्टयमुपरवाः, ते यज्ञपुरुषस्य प्राणाः। अत्रोपरवेषु प्राणत्वारोपः। एवमुत्तरत्राप्यारोपा ग्राह्याः। अधिषवणे सोमलतानिष्पेषणसाधनभूतपालाशफलकद्वयं हनू। चर्म आस्तृतमजिनं जिह्वा। ग्रावाणः शिला दन्ताः। अत्र रूपकम्। यस्यामिति। यस्यां विषये

---

पाठ. १. वाक्यमिदं न पठ्यते—नौका.।

---

१. रशनाद्वयं परि.—मातृका.। २. आदिष्वेत्यादिना—मातृका.।

सुवासाः' इत्यादिषु शृङ्गाररसः। 'तेषामसुराणां तिस्रः पुर आसन्' इत्यादिषु वीररसः। 'यो वा अस्य पशुमत्ति मांसं सोऽत्ति' इत्यादिषु बीभत्सरसः। 'को मोहः [1]कस्तथा शोकः' इत्यादौ शान्तरसः। [2]एवमन्येष्वपि [3]गुणालङ्काररसास्तत्र तत्र द्रष्टव्याः।

---

नौका

धर्मलुप्तोपमेत्यर्थः। अतिशयोक्तिरिति। जघनस्य त्रिंशद्योजन[1]परिणाहासम्बन्धेऽपि सम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपातिशयोक्तिः। रूपकमिति। व्यस्तरूपकमित्यर्थः। सरसवाक्यान्युदाहरति—यस्यामुशन्त इति। शेपो मेहनदण्डः। शृङ्गाररसः सम्भोगशृङ्गाररसः।

---

मन्दरः

उशन्तः कामयमानाः। अत्र मेहनप्रहरणरूपानुभवेन तद्व्यञ्जितौत्सुक्यादिमिश्र नायकरतिप्रतीतेः शृङ्गाररसाभिव्यक्तिः। उपेति। मे मम उपोप वराङ्गस्यात्यन्तसमीपे परामृश पाणिना स्पृश। अत्र सङ्गतयोर्नायकयोः तत्तत्संल्लापाद्यनुभवेन तद्व्यञ्जितकालाक्षमत्वलक्षणौत्सुक्येन च सम्भोगशृङ्गारप्रतीतिः। जायेति। पत्ये प्रियाय उशती कामयमाना सुवासाः सूक्ष्माम्बरधारिणी जाया भार्येव। अत्रापि नायिकारूपालम्बनविभावेन तदलङ्करणरूपोद्दीपनविभावेन कालाक्षमत्वलक्षणौत्सुक्येन च शृङ्गाररसाभिव्यक्तिः। 'तेषामसुराणां तिस्रः पुर आसन्' इत्यादिवाक्येषु त्रिपुरसंहारोत्साहप्रतीतेर्वीररसाभिव्यक्तिः। य इति। अस्य सत्रयागदीक्षितस्य। अत्र वपापुरोडाशादिप्राशनं मांसादिभक्षणमित्युक्त्या जुगुप्साप्रतीतेर्बीभत्सरसाभिव्यक्तिः। क इति।

---

पाठ. १. कस्तदा–मधु.। २. एवमन्ये–मधु., एवमन्येऽपि–ख.। ३. गुणालङ्कारास्तत्र–मधु. ख.।

---

१. परिणाहसम्बन्धे.–मातृका.।

अतस्तदवबोधनार्थं गुणालङ्काररसादिप्रतिपादककाव्यमीमांसारम्भोऽध्ययनविध्यनुमत एवेति सन्तोष्टव्यमायुष्मता ॥

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या[1] ह्येताश्चतुर्दश ॥'

इति चतुर्दशसु विद्यास्थानेषु काव्यमीमांसाया [2]अपि परिगणनादनुपादेयत्वं नाशङ्कनीयम् । तथा सति रामायणादेरनुपादेयताप्रसङ्गात् ।

---

नौका

नन्वेतावता कथं काव्यमीमांसा(या)अध्ययनविधिपरिगृहीततेत्यतस्तदुपपादयति–अत इति । यतः काव्यलक्षणाक्रान्तवाक्यानि वेदे दृश्यन्ते, अत इत्यर्थः ॥

इतोऽपि हेतोरनुपादेयत्वं नेत्याह––अङ्गानीति । षडङ्गानि निरुक्तादयः । तदुक्तम्––'शिक्षा व्याकरणं छन्दो निरुक्तं ज्यौतिषं तथा । कल्पश्चैते (श्चेति) षडङ्गानि व्याकृतानि [1]मनीषिभिः' इति । परिगणनादिति ।

---

मन्दरः

अत्र ज्ञानोदयात् मोहशोकयोः क्षेपवशादभावसम्भावनया शमप्रतीतेः शान्तरसाभिव्यक्तिः । एवमिति । तत्र तत्र काव्यलक्षणलक्षितेषु तेषु तेषु वाक्येष्वित्यर्थः ॥

---

पाठ. १. विद्या एता–मधु. ख. । २. अपरिगणनादनुपादेयत्वमिति न शङ्कनीयम्–मन्दर., अपरिगणनात् अनुपादेयत्वमिति नाशङ्क्यम्.–मधु., अपरिगणनादनुपादेय[ता]पदमिति न शङ्कनीयम्–ख. ।

---

१. मुनिभिः –मातृका. ।

२४. उपसंहारः —

**तस्माद् विषयप्रयोजनसद्भावान्निषेधस्यान्यविषयत्वान्मूलप्रमाणसद्भावाच्च काव्यमीमांसाशास्त्रमारम्भणीयमिति सर्वमनवद्यम् ॥३६॥**

**इति श्रीमत्त्रिभुवनपवित्रहरित[स]गोत्रावतंसवाराणसीवंश-पद्माकरप्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्याय-पर्वतनाथसूरिमण्डितमण्डलेश्वरसूनुना श्रीयल्लमाम्बागर्भरत्नाकर-**

---

नौका

पुराणस्य काव्यलक्षणाक्रान्ततया काव्यत्वेन तस्य [1]चतुर्दशविद्यापरिगणने काव्य-सामान्यस्यापि परिगणनमेवेति भावः। नाशङ्कनीयमिति। अन्यथा बाधक-माह—तथा सतीति।

एवं काव्यमीमांसां प्रसाध्य उक्तानुवादपुरःसरमुपसंहरति—तस्मादिति। गुणालङ्कारतदवबोधलक्षणविषयप्रयोजनयोः सत्त्वेन 'काव्यालापांश्च वर्जयेत्' इति निषेधस्यासत्काव्यविषयकत्वेन, 'पुण्यश्लोकस्य चरितम्' इत्यादिमूलप्रमाणसिद्ध-त्वेन च काव्यशास्त्रारम्भो युक्त एवेति भावः ॥३६॥

सम्प्रति कविः स्वकीर्तनानुवृत्तये[1] स्वनामकथनपूर्वकं प्रकरणसमा(प्ति)-

---

मन्दरः

तस्मादिति। अस्यैव विवृतिर्विषयप्रयोजनसद्भावादित्यादिहेतूपादानम्। अत्र प्रयोजनसद्भावादित्यनेनैव पुरुषार्थपर्यवसायित्वप्रतीतेस्तदनुक्तिरिति ज्ञेयम्। अनवद्यम् अदुष्टम् अनुकूलमिति यावत् ॥३६॥

इतीति। इतिशब्दः समाप्तौ। 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः। श्रीमत् त्रिभुवनपवित्रं च यद् हरित(स)गोत्रं तस्य वतंसोऽलङ्कार-

---

टिप्प. 1. चतुर्दशविद्यासु परिगणनादिति यावत्।

पारिजातेन निर्मलाचार[1]पूतेन चतुर्दशविद्याविभूषणवता श्रीधर्म-सङ्ख्यावता विरचिते श्रीमद्रघुकुलतिलकयशोघनसारसुरभिते साहि-त्यरत्नाकरनामन्यलङ्कारशास्त्रे ग्रन्थारम्भसमर्थनं नाम प्रथमस्तरङ्गः[2] ॥

२५. स्वग्रन्थप्रशंसा

[1]आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मन-

---

नौका

माह—(इति) श्रीमदित्यादिना। इतिशब्दः समाप्तौ। अयं च 'तरङ्ग' इत्युत्तरेणान्वेति। तरङ्ग इति संज्ञाकरणं चास्य ग्रन्थस्य रत्नाकरसंज्ञत्वेन, रत्नाकरे तरङ्गाणामौचित्यादिति ध्येयम्।

स्वग्रन्थं प्रस्तौति—आस्थामन्दिरमिति। रामात्मनो रामस्वरूपस्य। इन्दिरायां लक्ष्म्यां प्रणयः परिचयोऽस्यास्तीति इन्दिराप्रणयिनः। तद्भर्तुरित्यर्थः।

---

मन्दरः

भूतः स चासौ वाराणसीवंशपद्माकरप्रभातभानुश्च तेन। पदवाक्यप्रमाणानि व्याकरणपूर्वमीमांसान्यायवैशेषिकशास्त्राणि तान्येव पारावाराः समुद्राः तेषां पारीणः पारङ्गतः महोपाध्यायः साङ्गवेदाध्येता च यः पर्वतनाथसूरिः स इति पण्डितमण्डलेश्वरः पण्डितसार्वभौमः तस्य सूनुना। श्रीयल्लमाम्बागर्भ एव रत्नाकरः तस्मिन् पारिजातेन। चतुर्दशविद्या एव विभूषणानि तान्यस्य सन्तीति तद्वता। श्रीधर्म इति सङ्ख्यावान् पण्डितः तेन। 'सङ्ख्यावान् पण्डितः कविः' इत्यमर। श्रीमद्रघुकुलतिलकस्य यश एव घनसारः तेन सुरभिते अधिवासिते। तत्प्रतिपादनप्रकाशिते इति यावत्। प्रथमस्तरङ्गः समाप्त इति शेषः। एवमुत्तरत्रापि बोध्यम्।

आस्थामन्दिरमिति। देवस्य विष्णोः आस्थामन्दिरं तत्कथाप्रतिपाद-कत्वात् तन्निवासस्थानत्वव्यपदेशः। अन्यत्र मुख्यागारभूतः। त्वङ्गन्तः

---

पाठ. १. न पठ्यते–ख.। २. गद्यमिदं न पठ्यते–मधु.।

---

१. °वृत्तयेऽस्य नाम–मातृका.।

स्त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरैरङ्गीकृताडम्बरः ।
तादृङ्निर्मलधर्मसूरिकवितासोल्लासकल्लोलिनी-
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः ॥३७॥

[२]धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातः पर्वतेशाच्छुभगुणगणभूर्यल्लमाम्बासुगर्भे ।

---

नौका

देवस्य विष्णोः [१]आस्थामन्दिरं प्रतिपादकत्वेन वितानगृहम् । तादृक् निरुपमानो निर्मलश्च यो धर्मसूरिः धर्मभट्टः तस्य कवितेव सोल्लासकल्लोलिनी

---

मन्दरः

प्रकाशमानाः तुङ्गा महान्तश्च ये तरङ्गाः परिच्छेदविशेषाः त एव चलदुन्नततरङ्गाः तेषां रिङ्गणभरैः आटोपातिशयैः अङ्गीकृतः आडम्बरोऽतिशयो यस्य स तथोक्तः, अपरित्यक्तगम्भीरघोषश्च । तादृश्योऽनुपमा निर्मलाः निर्दोषाश्च या धर्मसूरिकविता रसोल्लसितशब्दार्थरचनाः ता एव सोल्लासकल्लोलिन्यः महानद्यः ताभिः पूर्णः, महानद्याश्रयभूतश्च । कर्णौ च मनश्च हरतीति तथोक्तः, श्रोत्रान्तःकरणानन्दकरश्च । साहित्यरत्नाकर एव रत्नाकरो विजयते । अत्र सावयवरूपकानुप्रासयोः संसृष्टिः ।

---

पाठ. १. पद्यमिदं न पठ्यते–ख. । २. न पठ्यते पद्यमिदम्--नौका. ख. । —
मधुसूदनमिश्रैस्तु —
'धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः सञ्जातो यल्लमाम्बाकृतसुकृतफलं पर्वतेशस्य भाग्यम् । काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतुस्तस्यालङ्कारशास्त्रे रघुपतिचरिते चादिमोऽयं तरङ्गः ॥' इत्येव 'आस्था मन्दिरम्' इत्यतः पूर्वं पठ्यते ।

---

१. आस्थामण्डपं–मातृका ।

व्याख्याविख्यातकीर्तेर्विवरणगुरुवाक्साङ्ख्यमुख्यागमानां
तस्यालङ्कारशास्त्रे रघुपतिविभुके चादिमोऽयं तरङ्गः ॥३८॥

---

नौका

परिपूर्णनदी तया पूर्णो निर्भरः। एवंविधः साहित्यरत्नाकरो विजयते सर्वोत्कर्षेण वर्तते। 'विपराभ्यां जेः' (पा. १.३.१९) इति तङ्। शिष्टं स्पष्टमिति सर्वमवदातम्।

इति श्रीमत्त्रिभुवनपवित्रविचित्रचरित्रचर्लान्वयसुधासिन्धुसुधाकरायमाण-
श्रीमद्ब्रह्मविबुधपौत्रस्य श्रीसूरिमाम्बासहचरश्रीलक्ष्मणार्यतनयस्य
बेङ्कटसूरिणः कृतौ साहित्यरत्नाकरव्याख्याने नौकाख्याने

**प्रथमस्तरङ्गः।**

श्रीचर्लान्वयदुग्धसागरशशी श्रीसूरिमाम्बापतिः
श्रीमान् लक्ष्मणनामको बुधवरः श्रीवेङ्कटाख्यं बुधम्।
यं प्रासूत सुतं हि तेन रचितः साहित्यरत्नाकर-
व्याख्याने प्रथमस्तरङ्ग इति सन्नौकाभिधाने महान्॥

---

मन्दरः

[1]धर्मान्तर्वाणिवर्य इति। विवरणं प्रसिद्धम्। गुरुवाक् प्रभाकरग्रन्थः, साङ्ख्यं साङ्ख्यशास्त्रं च तानि मुख्यानि आद्यानि येषां ते तथोक्ताः, ते च ते आगमाः शास्त्राणि तेषाम्। शिष्टं स्पष्टम्। अत्र चकारः पूरणार्थः।

इति श्रीमल्लादिलक्ष्मणसूरिविरचिते
**साहित्यरत्नाकरव्याखाने**
मन्दराख्याने

**प्रथमस्तरङ्गः॥**

श्रीरामार्पणमस्तु।

---

टप्प. 1. धर्मो धर्माख्योऽन्तर्वाणिषु शास्त्रवित्सु वर्यः श्रेष्ठः। धर्मसूरिरिति यावत्। 'अन्तर्वाणिस्तु शास्त्रवित्' इत्यमरः॥

# साहित्यरत्नाकरे

## द्वितीयोऽभिधातरङ्गः

### वाचकशब्दार्थनिरूपणम्

[1]अथ कृतिनायके [2]रघुनायके नायकगुणानाह—

१. नायकगुणाः—

महाकुलीनत्वमुदारता च तथा महाभाग्यविदग्धभावौ ।
तेजस्विता धार्मिकतोज्ज्वलत्वममी गुणा जाग्रति नायकस्य ॥१॥

२. महाकुलीनता—

[3]तत्र महाकुलीनता यथा—

आवासः कथमस्मदादिवचसां वंशो रघूणां भवेद्
यस्यासीत् प्रभवस्त्रिमूर्तितनुभृद् भानुस्त्रिवेदीमयः ।

---

नौका

एवं तावत् पूर्वतरङ्गे महता प्रबन्धेन काव्यमीमांसा सप्रपञ्चं प्रसाधिता । काव्ये लोकोत्तरगुणो नायको वर्ण्य इति चोक्तम् । तत्र के ते नायकगुणा इत्याकाङ्क्षायां पूर्वशास्त्रानुसारेण कतिचन गुणान् गणयितुं गुणसङ्ग्रहकारिका-

---

मन्दरः

एवं काव्यमीमांसाशास्त्रमारम्भणीयमिति निर्वाह्य सम्प्रति कथानायकस्य रघुनायकस्य गुणान् कतिचिद्विवेक्तुकामस्तानुद्दिशति—अथेति । अथ ग्रन्थारम्भसमर्थनानन्तरम् ।

---

पाठ. १. आदौ 'आस्थामन्दिरम्' इति पद्यं पठ्यते–ख. । २. प्रभुनायके–क. । ३. न पठ्यते–मन्दर. ख, महाकुलीनता नाम कुले महति सम्भवः । यथा–क. ।

यत्सम्भूतभगीरथस्य [1]तनया गङ्गा जगत्पावनी[2]
यत्र व्यक्तिमुपागतः[3] किमपरं रामात्मना श्रीपतिः ॥२॥

३. उदारता–

[4]उदारता यथा—

प्रत्यासन्नसुधांशुबिम्बमुकुरे संलक्ष्यमाणानना-
श्चञ्चत्काञ्चननूत्नरत्न[5]खचितप्रासादशय्यासनाः ।

---

**नौका**

मवतारयति—अथेति । कृतिनायके कृतेः[1] प्रबन्धस्य प्रतिपाद्ये नेतरि । सङ्ग्रहकारिकामाह–महाकुलीनत्वमिति । 'महाकुलादञ्खञौ' (पा. ४.१.१४१) इत्यत्र 'अन्यतरस्यां' ग्रहणानुवृत्त्या खप्रत्ययः[2] । नायकस्य नायकसम्बन्धिनो अमी गुणा जाग्रति स्फुरन्ति । नायके विद्यन्त इत्यर्थः । 'जक्षित्यादयः षट्' (पा. ६.१.६) इत्यभ्यस्तत्वात्, झेः 'अदभ्यस्तात्' (पा. ७.१.४) इत्यदादेशः ॥१॥

अथ यथोद्देशमेतेषामुदाहरणान्याह—तत्रेत्यादिना । तत्र तेषु मध्ये । महाकुलीनतेति। अस्य लक्षणं तु 'महाकुलीनता नाम कुले महति सम्भवः' इति ।

---

**मन्दरः**

महाकुलीनत्वमिति । महाकुलीनत्वादयोऽमी सप्त नायकस्य गुणा जाग्रति प्रकाशन्ते ॥१॥

---

पाठ १. दुहिता–मधु. क. ख. । २. °पाविनी–मधु., °पालनी–नौका., व्यापिनी–ख. । ३. °गतः स भगवान्–मन्दर. । ४. यद्विश्राणनताच्छील्यमौदार्यं तन्निगद्यते यथा–क., उदारत्वं यथा–मधु. ख. । ५. °रचित.--मधु. क. ख. ।

---

१. कृते प्रबन्धे--मातृका. । २. °प्रत्ययः । अस्य लक्षणं तु महानायकस्य-मातृका. ।

सुन्दर्यो विदुषां सुरेन्द्रतरुणीसंल्लापलीलारसे
संसक्ताः कथयन्ति राघवविभोरौदार्यमत्यद्भुतम् ॥३॥

---

नौका

आवास इति। रघूणां वंशः कुलम्। 'वंशो वेणौ समूहे च पृष्ठास्थिनि कुलेऽपि च' इति रत्नमाला (पं.१०८४)। अस्मदादिवचसाम् आवासः स्थानम्। गोचर इति यावत्। कथं केन प्रकारेण भवेत्। न केनापीत्यर्थः। सम्भावनायां लिङ्। तत्र हेतुमाह—यस्यासीदिति। तिसृणां मूर्तीनां ब्रह्मविष्णुरुद्ररूपाणां तनुं देहं बिभर्तीति तनुभृत्। ब्रह्मविष्णुमहेश्वरात्मक इत्यर्थः। तदुक्तम्—'एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः' इति। त्रयाणां वेदानां समाहारः त्रिवेदी वेदत्रयम्। 'तद्धितार्थ°'—(पा. २.१.५१) इत्यादिना समाहारसमासः। 'द्विगोः' (पा. ४.१.२१) इति ङीप्[1]। तन्मयः तत्स्वरूपः। स्वरूपार्थे मयट्। एवम्भूतो भानुर्यस्य रघुवंशस्य। प्रभवत्यस्मादिति प्रभवः कारणम् आसीत्। हेत्वन्तरमाह—यत्सम्भूतेति। यस्मिन् रघुवंशे जातेत्यर्थः। (तथाभूतस्य भगीरथस्य तनया

---

मन्दरः

महाकुलीनत्वमित्युद्देशवचनेनैव 'महाकुलीनता नाम कुले महति सम्भवः' इति लक्षणं सिद्धवत्कृत्य उदाहरति—आवास इति। आवास आश्रयः। गोचर इति यावत्। त्रिमूर्तितनुभृत् कालत्रयेऽपि ब्रह्मविष्णुरुद्रस्वरूपधरः। त्रिवेदीमयः तथैव त्रयीरूपः। प्रभवो जन्महेतुः कूटस्थ इति यावत्। 'स्याज्जन्महेतुः प्रभवः' इत्यमरः (३.३.२१०)। जगन्ति स्वर्गमर्त्यपाताललोकान् मन्दाकिनी–गङ्गा–भोगवतीरूपैः पावयतीति तथोक्ता। भगवान् षड्गुणैश्वर्यसम्पन्नः।

'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा[2] ॥' (भागवते ३.३१)

---

पाठ. १. ङीप्—मातृका.। २. इतीरितः—मा.।

४. महाभाग्यम् –

सर्वसर्वसहैश्वर्यं महाभाग्यमुदी[1]र्यते ॥

यथा ––

आचक्रवालवसुधातलचक्रवालं
सर्वे नराधिपतयः ससुरासुरेन्द्राः ।

---

नौका

गङ्गा), जगन्ति लोकान् पालयतीति तादृशी । आसीदित्यनुषङ्गः । किं बहुना ? सर्वज्ञो विष्णुरेव हि साक्षाद् अत्र वंशे रामरूपेण अवततारेत्याह–यत्र व्यक्तिमिति । यत्र यस्मिन् वंशे व्यक्तिम् आविर्भावम् उपागतः प्राप्तवानित्यर्थः । अपरं वंशप्राशस्त्यनिभित्तमन्यत् किमु वक्तव्यमित्यर्थः । एतेन श्रीरामचन्द्रस्य महाकुलीनता स्पष्टैव । अत्र स्वभावोक्तिरलङ्कारः ॥२॥

उदारतामुदाहरति––उदारतेति । तल्लक्षणं तु 'यद्विश्राणनताच्छील्यमौदार्यं तन्निगद्यते' (प्रता. १.१६) इति ॥

प्रत्यासन्नेति । सुधांशुबिम्ब एव मुकुरे दर्पणे । 'दर्पणे मुकुरादर्शौ, इत्यमरः (२.६.१४०) । चञ्चत् प्रकाशमानं यत् काञ्चनम् । यद्यपि 'चन्चु' धातोः '[1]वन्चुचन्च' ( धा. पा. १८९, १९० ) इत्यादिवर्गपठितस्य गत्यर्थकतैव, तथापि धातूनामनेकार्थत्वात् प्रकाशार्थकत्वम् । चञ्चत्काञ्चनेन

---

मन्दरः

इति स्मरणात् । व्यक्तिम् आविर्भावम् । अत्र स्वभावोक्तिरलङ्कारः । 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' (प्रता. ८.२२) इति लक्षणात् ॥२॥

'यद्विश्राणनताच्छील्यमौदार्यं तन्निगद्यते' (प्रता. १.१६) इति लक्षितमौदार्यमुदाहरति––प्रत्यासन्नेति । प्रत्यासन्नं प्रासादौन्नत्यात् सन्निकृष्टं यत्

---

पाठ. १. °मुदीरितम्–मधु. ।

---

१. 'व्रन्चचञ्चन्नित्यादिवण्डकस्थस्य गत्यर्थकतैव' मातृका. ।

नीराजयन्ति रघुनन्दनपादपीठं
कोटीरकोटिघटितस्फुटरत्नदीपैः ॥४॥

---

**नौका**

नूतरत्नै(श्च)खचिताः[1] प्रत्युप्ता ये प्रासादाः। यद्यपि 'प्रासादो देवभूभुजाम्' (अमर. २.२.९) इत्युक्त्या देवादीनामेव निवासेषु प्रासादशब्दः प्रयोक्तव्यः, तथापि 'हर्म्यादि धनिनां वासः' ( अमर. २. २. ९ ) इत्यत्र आदिपदात् प्रासादस्यापि ग्रहणाभिप्रायेण तथोक्तिः। तादृशेषु प्रासादेषु शय्या एवासनानि सिंहासनानि यासां तास्तथोक्ताः। उदारस्य भाव औदार्यं दातृत्वम्। ब्राह्मणादित्वात् ष्यञ्। 'उदारो दातृमहतोः' इत्यमरः (३.३.१९२)। एतेन औदार्यं स्पष्टम्। अत्र समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारः ॥३॥

---

**मन्दरः**

सुधांशुबिम्बं तदेव मुकुरः तस्मिन् संलक्ष्यमाणानि संदृश्यमानानि आननानि याभिस्ताः। सर्वासामपि एकदा सन्दर्शनासम्भवात् गतिवशेन यदा यस्याः तदाभिमुख्यं भवति, तदा सा तस्मिन् स्वसौन्दर्यं पश्यतीति भावः। औदार्यं कथयति।

'सम्भ्रमः स्नेहमाख्याति वपुराख्याति भोजनम्।
आचारः कुलमाख्याति विद्यामाख्याति भूषणम्' ॥

इतिवत् तासां तादृग्वैभवेनैव तदौदार्यमनुमीयत इति भावः। अत्र समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारः। 'उदात्तमृद्धेश्चरितं श्लाघ्यं चान्योपलक्षणम्' (कुवलया. श्लो. १६२) इति लक्षणात्। चन्द्रबिम्बे सौन्दर्यालोकनस्य दिगधीशाङ्गनाभिः सह संलापस्य चासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरिति तयोरङ्गाङ्गिभावेन सङ्करः ॥३॥

---

१. अत्यग्रमणिभिः चञ्चिताः—मातृका।

५. वैदग्ध्यम् --

कृत्यवस्तुषु चातुर्यं वैदग्ध्यमभिधीयते ॥

यथा —

सीताशोकममर्त्यदैन्यमसुरक्रौर्यं च मन्दोदरी-
कण्ठे मङ्गलसूत्रमात्मलघुतामेकेषुणा योऽलुनात् ।

---

**नौका**

महाभाग्यं लक्षयति—सर्वेति । सर्वं सहत इति सर्वंसहा भूमिः, सर्वा च सा सर्वंसहा चेति समानाधिकरणसमासः । 'सर्वंसहा वसुमती' इत्यमरः (२.१.३) । सर्वंसहेत्यत्र '[1]संज्ञायां भृतृ॰'(पा. ३.२.४६) इत्यादिना खचि मुमागमः । तस्या ईश्वरत्वम् ऐश्वर्यम्, सार्वभौमत्वमित्यर्थः ॥

इदमुदाहरति—आचक्रवालेति । अत्र आचक्रवालेत्याङ्प्रश्लेषो वक्तव्यः । तथा चायमर्थः—चक्रवालो लोकालोकगिरिः । 'लोकालोकश्चक्रवालः' इत्यमरः (२.३.२) । आ चक्रवालात्, चक्रवालपर्यन्तमित्यर्थः । 'पञ्चम्यपाङ्परिभिः' (पा. २.३.१०) इति पञ्चमी । 'आङ्मर्यादाभिविध्योः[2]' (पा. २.१.१३) इत्यव्ययीभावः । आचक्रवालं यत् वसुधातलचक्रवालं तत्तद्भूप्रदेशमण्डल-मिति[3], आचक्रवालवसुधातलचक्रवालम् । 'चक्रवालं तु मण्डलम्' इत्यमरः

---

**मन्दरः**

अथ महाभाग्यं लक्षयति—सर्वेति । सर्वा च सा सर्वंसहा च सर्वसर्वं-सहा तस्या ईश्वरोऽधिपः तस्य भावः सर्वसर्वंसहैश्वर्यम् ॥

उदाहरति — आचक्रवालेति । आ चक्रवालात् लोकालोकपर्वतात् आचक्रवालम् । चक्रवालपर्यन्तमित्यर्थः । 'लोकालोकश्चक्रवालः' इत्यमरः (२.३.२) । अत्र तलशब्दस्य स्वरूपार्थकत्वम् । 'अधः स्वरूपयोरस्त्री तलम्' इत्यमरः

---

१. संज्ञायांभृ–शिभुभागमः । तस्याङ्स्वरत्वं एश्वर्यम–मातृका । २. ॰विधौ मातृका । ३. ॰मित्या आचत्रा.–मातृका ।

लीलोन्मीलितसप्त[1]सालवितते: श्वेतातपत्रायुत-
च्छेत्तुस्तस्य विदग्धताविवरणे ब्रह्मापि जिह्मायते
॥८॥

---

नौका

(१.३.६)। 'सुप्सुपा' (पा. २.१.४) इति समासः। चक्र[1]वालपर्यन्ता-खण्ड( भू )मण्डलमित्यर्थः। [2]तदभिव्याप्याचक्रवालवसुधातलचक्रवालमिति प्राथमिकस्याङो द्वितीयान्तेन समासः। केचित्तु चक्रवालश्च वसुधा-तलचक्रवालं च ते उभे अभिव्याप्य आचक्रवालमिति द्वन्द्वः, तेन आङः समास इत्याहुः। [3]नीराजयन्ति नीराज(व)न्तं नीराजनवन्तं [4]कुर्वन्ति। नीराजव-(च्छब्दा)त् 'तत्करोति' (ग. सू. २०४) इति ण्यन्तात् कर्तरि [5]लटि णाविष्ट-वद्भावात् मतुपो लोपः ॥४॥

---

मन्दरः

(३.३.२०२)। तदभिव्याप्य आचक्रवालवसुधातलचक्रवालम् चक्रवालपर्वत-पर्यन्ताखिलभूमण्डलमभिव्याप्येत्यर्थः। अत्र आङ्प्रश्लेषेण आदिमस्य मर्या-दार्थकत्वम् अन्तिमस्याभिविध्यर्थकत्वं च बोध्यम्। अभिविधिरभिव्याप्तिः। स्थिता इति शेषः। रघुनन्दनपादपीठं नीराजयन्ति। पादपीठस्य पुरतो नमन्तीत्यर्थः। एतेन लोकान्तराधिपत्यप्रतीतेर्महाभाग्यस्य कैमुत्यन्यायसिद्धत्वा-दर्थापत्तिरलङ्कारः। 'कैमुत्येनार्थसंसिद्धिरर्थापत्तिरलङ्क्रिया (प्र. रु. पृ. ३२९) इति लक्षणात् ॥४॥

---

पाठ. १. °तालबितते:—क.।

---

१. चक्रेवाल.—मातृका.। २. तदभिमात्या—मातृका.। ३. नाराजयन्ती—मातृका.। ४. कुर्वन्ती—मातृका.। ५. लङि—मातृका।

६. तेजस्विता —

[1]तेजस्वित्वं तथा —

> तत्तादृक्प्रौढदोषाचरतिमिरभरोल्लुण्ठनाकुण्ठशक्तेः
> सर्वत्रोज्जृम्भमाणस्फुरण[2]रघुमणिस्फारतेजः खरांशोः ।

नौका

वैदग्ध्यं लक्षयति — कृत्येति । कृत्यवस्तुषु कर्तव्यार्थेषु चातुर्यं [1]प्रयोग-कौशलम् ॥

उदाहरति — [2]सीताशोकमिति । आत्मलघुतां आत्मनः स्वस्य [3]या लघुता रावणकृतनिजदारहरणजन्यदुष्कीर्तिरूपं लाघवं [4]तामित्यर्थः । यो रामः अलुनात् चिच्छेद । 'लूञ् छेदने' (धा. पा. १५०७) लङ् । '[5]प्वादीनां' (पा. ७. ३. ८०) इति ह्रस्वः । वैदग्ध्यप्रकटनायैव तस्येतिपर्यन्तं विशिनष्टि-[6]लीलेत्यादिना । श्वेतातपत्राणामयुतस्य दशसहस्रस्य दशानन (स्यातपवारणा) योपर्युद्धृतदशसहस्र[7]च्छत्राणां [8]छेत्तुः निवारयितुः ।

मन्दरः

अथ वैदग्ध्यं लक्षयति — कृत्येति । कृत्यवस्तुषु कर्तव्यार्थेषु ॥

उदाहरति — सीतेति । आत्मनो लघुतां दारापहरणजन्यलाघवं च । श्वेतातपत्राणां रावणसम्बन्धिश्वेतच्छत्राणामयुतस्य च्छेत्तुः । सप्तसालोन्मूलने श्वेतातपत्रच्छेदनेऽपि 'एकेषुणा' इत्यनुवर्तते । जिह्मायते जिह्मो मन्द इवाचरति । 'जिह्मस्तु कुटिले मन्दे' इति विश्वः ( ८९-१८ ) । अन्येषां का कथे'त्यपि' शब्दार्थः । अत्र पूर्वार्धे गम्यमानस्य रावणसंहारस्य भङ्ग्यन्तरेणोक्तत्वात् पर्यायोक्तमलङ्कारः । 'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्' (कुवल. श्लो. ६८) इति लक्षणात् ॥९॥

पाठ. १. तेजस्विता–मधु° । २. °रघुपति°–मन्दर ।

१. कौशलः–मातृका । २. शीता°–मातृका । ३. यो–मातृका । ४. तदित्यर्थः–मातृका । ५. ल्वादीनां–मातृका । ६. जितेत्या°–मातृका । ७. च्छत्राणि–मातृका । ८. चेतुर्विवारयितु–मातृका ।

**तत्तद्ब्रह्माण्डभाण्डे विमलतरवियन्नीरनीरन्ध्रगर्भे**
**बिम्बा एव स्फुरन्ति प्रतिफलिततनोर्नूनमेकैकसूर्याः ॥६॥**

---

**नौका**

पुरा — [१]ऋश्यमूके गिरौ श्रीरामः सुग्रीवप्रत्ययार्थमेकेन बाणेन सप्त सालतरून् युगपदेव [२]हि निर्बिभेद (रा. कि. १२. १–३), सुवेलाचलनिविष्टां स्वसेनां द्रष्टुं प्रासादाग्रमारूढस्य रावणस्य सहागतश्वेतातपत्राणि [३]चिच्छेदेति च पौराणिकं कथाद्वयमत्रानुसन्धेयम् । विदग्धताया विवरणे वर्णने [४]विषये । [५]जिह्म इवाचरति जिह्मायते मूकवद् वर्तत इत्यर्थः । 'कर्तुः क्यङ् सलोपश्च' (पा. ३. १. ११) इति क्यङ् । 'जिह्मायते[६] परं ब्रह्मापी' त्यादिना इतरे जिह्मा इति किमु वक्तव्यमिति सूचितम् । वाचामगोचरमस्य वैदग्ध्यमिति भावः । अत्र पूर्वोत्तरार्धयोः स्वभावोक्तिः । उत्तरार्धे (च) अद्भुतवर्णनात्मकं भाविकमि(ति) वेदितव्यम्[1] ॥५॥

---

**मन्दरः**

अथ तेजस्विता — 'जगत्प्रकाशकत्वं यत् तेजस्वित्वं तदुच्यते' (प्रतापरुद्रीये १. १७) इति लक्षणम् ॥

उदाहरति — तत्तादृगिति । तत्तादृशोऽनुपमाः प्रौढाः प्रसिद्धाश्च दोषाचरा राक्षसाः त एव, तत्तादृशः प्रौढगाढाः दोषासु रात्रिषु चरन्तीति दोषाचराश्च ये तिमिरभरा अन्धकारातिशयाः तेषामुल्लुण्ठने हरणे अकुण्ठशक्तेः अप्रतिहतसामर्थ्यस्य । विमलतरं यत् वियत् तदेव नीरं तेन नीरन्ध्रः परिपूर्णो गर्भो यस्य तस्मिन् । तत्तद्ब्रह्माण्डभाण्डे तेषु तेषु ब्रह्माण्डभाण्डेषु । जातावेकवचनम् । प्रतिफलिता तनुर्यस्य तस्य । सर्वत्रोज्जृम्भमाणं स्फुरणं यस्य तत् तथोक्तं, तच्च तद् रघुपतिस्फुरणतेजश्च, तदेव खरांशुः तस्य । बिम्बाः

---

विशेषः. 1. 'अत्र रावणवधरूपकार्यसम्पादनेन सीतशोकोच्छेदनस्य दैवात् कारणात् विशेषालङ्कारः' इति मधु° ।

---

१. बिलस्य मूले--मातृका । २. हि तयोर्मानसोः सुवेला°-मातृका । ३. चिच्छेदिति--मातृका । ४. विषयैः--मातृका । ५. जिह्मा--मातृका । ६. जित्वरात्मने परं--मातृका ।

**अत्र सकलब्रह्माण्डप्रकाशकस्य रघुकुलतिलकप्रतापसूर्यस्य गगनजलपूरिते[1] एकैकस्मिन् ब्रह्माण्डे प्रतिफलितमूर्तेः प्रतिबिम्बा**

---

**नौका**

अथ — 'जगत्प्रकाशकत्वं यत् तेजस्वित्वं तदुच्यते' ( प्रतापरुद्रीये १. १७ ) इत्युक्तलक्षणं तेजस्वित्वमाह – तेजस्वित्वं यथेति ॥

उदाहरति — तत्तादृगिति । तमिव पश्यन्तीति तादृशः । ते [1]तादृश इति च तत्तादृशो निरुपमा इत्यर्थः । ते च ते प्रौढाः [2]प्रगल्भा गाढाश्चेति तत्तादृक्प्रौढाः ये दोषासु रात्रिषु चरन्तीति दोषाचरा राक्षसाः, [3]दोषान् अघान्याचरन्तीति च । 'सायं[4] निशयव्ययं दोषा स्त्री वा ना दूषणाघयोः इति रत्नमालायाम् ( पं. १११९ ) । त [5]एव तिमिरभराः तिमिरातिशयाः तेषामुल्लुण्ठनेत्यादि स्पष्टम् । रघुमणिः रघुश्रेष्ठो रामचन्द्रः । विमलतरवियत् निर्मलगगनम् । तदेव नीरं जलं, तेन [6]नीरन्ध्रगर्भे, पूर्णोदके ( इति यावत् ) । [7]एकैकसूर्या इति । नानालिङ्गत्वाद् ऋतूनां नानासूर्यत्वम् । 'द्वादशात्मा दिवाकरः' इति [8]चोक्तिः बहु( त्वे प्रमाणम् ) । अत्र [9]प्रतिबिम्बा एव सूर्या जगत् प्रकाशयन्ति, किमुत बिम्बभूतः प्रतापसूर्य इति कैमुतिकन्यायेन लोकोत्तरमस्य तेजस्वित्वमिति भावः ॥ ६ ॥

---

**मन्दरः**

प्रतिबिम्बा एव । 'बिम्बोऽस्त्री मण्डलं त्रिषु' ( अम. १. ३. १९ ) इति पुंलिङ्गता । 'बिम्बं फले बिम्बिकायां प्रतिबिम्बे च मण्डले' इति विश्वः (८०. ३) । एकैकसूर्याः सन्तः स्फुरन्ति ॥६॥

---

पाठ. १. °जलपरिपूरिते--मधु ।

---

१. ते तादृश इतिवत्तत्तादृशा निरुपमा–मातृका । २. प्रगल्भो गाढश्चेति–मातृका । ३. दोषान्यघान्या°–मातृका । ४. सायं निश्च–यं दोषा स्त्री दाना दोषाघयोः–मातृका । ५. त्व च तिमिरभरः–मातृका । ६. नीरन्ध्रं गर्भपूर्णोदके–मातृका । ७. एवैकसूर्या–मातृका । ८. चोक्तेः बहु--मातृका । ९. °बिम्बा एकः सूर्यो जगत् प्रकाशयति किमुत बिम्बभूतः--मातृका ।

**एव[1] एकैकसूर्याः सन्तः स्फुरन्ति, न तु तदितरे सवितारः[2] सन्तीत्यपह्नवालङ्कारभेदः। अतिशयोक्तिरूपकश्लेषाश्च[3]। तेषां सङ्करः ॥६-१॥**

---

**नौका**

अत्रालङ्कारान् विविनक्ति — अत्रेत्यादिना। रघुकुलस्य तिलकवत् तिलकः श्रेष्ठो रामचन्द्रः। गगनजलपूरिते गगनमेव जलं तेन पूर्णे। अपह्नवालङ्कार[1]भेद इति। आरोप्यापह्नवरूप इत्यर्थः। ननु-एतदेव कथ[2]मत्रेत्यतस्तदुपपादयति — 'प्रतिबिम्बा एव' इत्यादिना 'इती'त्यन्तेन। 'यत्र प्रकृतं निषिध्याप्रकृतमारोप्यते [3]तत्रापह्नव' इति हि तत्सामान्यलक्षणम्। एवं चात्र प्रकृतसूर्येषु 'बिम्बा' इति बिम्बत्वमारोप्य एवकारेणेतरव्यवच्छेदमुखेन सूर्यत्वस्यापह्नवाद् युक्तमस्यारोप्यापह्नवरूपत्वमिति भावः। किञ्च — अलङ्कारान्तराण्यपि सन्तीत्याह — अतिशयोक्तीत्यादिना। अतिशयोक्तिस्त्वसम्बन्धे सम्बन्धरूपा, प्रतापभानोः प्रतिफलनासम्बन्धेऽपि सम्बन्धोक्तेः। 'तेजः [4]खरांशोः' इत्यत्र समस्तवस्तुविषयं सावयवं रूपकमेकम्। 'ब्रह्माण्डभाण्डे'

---

**मन्दरः**

अलङ्कारान विवृणोति — अत्रेति। अपह्नवालङ्कारभेद इति। तत्तद्ब्रह्माण्डस्थितेषु सूर्येषु सूर्यत्वमवधारणेनापह्नुत्य बिम्बत्वारोपात्। अतिशयोक्तिरूपकश्लेषाश्चेति। प्रतापभानोः प्रतिफलनासम्बन्धेऽपि सम्बन्धोक्तेः, दोषाचरादिषु तिमिरभरत्वाद्यारोपात्, 'तत्तादृक्प्रौढदोषाचरा' इत्यत्रार्थद्वयप्रतिपादनाच्च। एतेषां सङ्कर इति। अङ्गाङ्गिभावलक्षण इत्यर्थः। अपह्नवस्यातिशयोक्त्युत्थापितत्वाद् अतिशयोक्त्यपह्नवयोः, वियदादिषु नीरत्वाद्यारोपस्यातिशयोक्त्युपकारकत्वाद् रूपकातिशयोक्त्योः, तेजसि खरांशुत्वारोपस्य

---

पाठ. १. न पठ्यते--मन्दर। २. सूर्याः--मधु। ३. °श्चेत्येतेषां--मन्दर, °श्चेति तेषां--मधु।

---

१. °लङ्कारः। भेद इति – मातृका°। २. कथमत्रेत्यत° – मातृका°। ३. तत्रापह्नव – मातृका°। ४. तेजः सुधांशोः – मातृका°।

७. धार्मिकता --

धार्मिकत्वं यथा ---

ताताज्ञाचरणाद् वनं गतवतः सन्त्यज्य राज्यश्रियं
कैकेय्यामविकारिणश्च भरतच्छन्देऽप्यनावर्तिनः ।

नौका

इत्यत्रापि इदमेवापरं रूपकमिति रूपकद्वयमित्यर्थः[1] । श्लेषाश्चेति । प्रस्तुता-प्रस्तुतगोचरो[2]ऽर्थश्लेष इत्यर्थः । यद्यप्युभयश्लेषो[3]ऽन्यमतेन,: अस्यैव उत्तरत्र स्वयं खण्डितत्वात् । (सङ्कर इति) । अत्र तेजोभानोरसम्बन्धप्रतिफलन-रूपसम्बन्धोक्तिरूपातिशयो[4]क्त्युत्थापितत्वादपह्नवस्येत्यनयोरङ्गाङ्गिभावेन सङ्कर इत्यर्थः । अन्यथा – प्रतिफलनाभावेन प्रसिद्धसूर्ये प्रतिबिम्बत्वारोपणस्यैव असाङ्गत्यापातात् । 'ब्रह्माण्डभाण्डे[5]' इति रूपकाभावे आश्रयाभावेन प्रति-फलनसम्बन्धोक्ते[6]रयुक्तेः* रूपकोत्था[7]पितैवातिशयोक्तिरिति तयोरङ्गाङ्गिभावः। 'तेजः[8]खरांशो'रिति रूपकं श्लेषा[9]ङ्गमिति तयोरप्यङ्गाङ्गिभावः इति विभाव-नीयम् । श्लेषाश्चेति चकारेण नूनमित्युत्प्रेक्षा समुच्चीयते । एतेषां लक्षणानि तूपरिष्टाद् वक्ष्यन्ते ॥६–१॥

अथ — 'धर्मैकायत्तचित्तत्वं धार्मिकत्वमुदाहृतम्' (प्रता. १.१८) इति लक्षणलक्षितं धार्मिकत्वमुदाहरति — धार्मिकत्वं यथेति । धर्मं चरत्यासेवत

मन्दरः

'तत्तादृगि' त्यादिश्लेषानुग्राहकत्वाद् रूपकश्लेषयोश्चेति बोध्यम् ॥६–१॥

अथ धार्मिकत्वम् — 'धर्मैकायत्तचित्तत्वं धार्मिकत्वमुदीर्यते' (प्रता. नायक. १.१८) इति लक्षणम् ॥

टिप्प. *'अयुक्तेः', अयोगादित्यर्थः ।

१. अनन्तरं–तत्र तेजसः परयोः समस्तवस्तुविषयतेति बोध्यम् इत्यधिकं पठ्यते-मातृकायाम् । २. गोचरोऽर्थः – मातृका° । ३. श्लेषस्य मतेनास्यैव – मातृका° । ४. °योक्त्यार्थपत्यादयह्न° – मातृका° । ५. °भाण्डा इति – मातृका । ६. °रयु-क्तैः – मातृका° । ७. °त्थापितेव – मातृका° । ८. °खरांशुरिति – मातृका । ९. श्लेषान् समिति – मातृका ।

यातायाहितसोदराय शरणं लङ्काश्रियं यच्छत-
[1]स्तस्माद् दाशरथेः सुरासुरनरेष्वन्यो न धन्यो जनः ॥७॥

---

नौका

इति धार्मिकः। 'सकृत्कृतधर्मो न धार्मिक' इति वृत्तिकारः। तस्य भावस्तत्त्वम् ॥

[1]ताताज्ञाचरणादिति। पितुराज्ञा[2]करणहेतोः। कैकेय्यामिति। [3]बहुतरतागस्कारिण्यामपीत्यादिः। अविकारिणः, असूयादिविकारशून्यात्। भरत[4]च्छन्देऽपि 'वनात् पुरीं प्रविश' इत्यादिभरताभिप्राये सत्यपि, भरतप्रार्थनायां सत्यामपीत्यर्थः। 'अभिप्रायश्छन्द आशयः' इत्यमरः (३.२.२०)। अनावर्तिनः [5]वनादनिवृत्तात्। शरणं रक्षितारं याताय प्राप्ताय अहितसोदराय रावणानुजाय विभीषणाय। सम्प्रदाने चतुर्थी। यच्छतः प्रदातुः [6]श्रीमद्दाशरथेः श्रीरामात्। 'अन्यारादितरर्ते' (पा. २. ३. २९) इत्यादिना पञ्चमी। अन्यः [7]परो जनः (धन्यः) सुकृती। धार्मिक इति यावत्। न, नास्तीत्यर्थः। लोके एष श्रीराम एव महाधार्मिको यत एवंविधमशक्यं धर्ममाचरितवानिति भावः। अत्र स्वभावोक्तिः ॥ ७ ॥

---

मन्दरः

उदाहरति — ताताज्ञेति। कैकेय्यां विषये अविकारिणः मुखसङ्कोचादिविकारशून्यादित्यर्थः। भरतस्य च्छन्दे अयोध्यां प्रति पुनरागमनाभिप्राये सत्यपि। 'अभिप्रायश्छन्दः आशयः' इत्यमरः। अनावर्तिनः वनादनिवृत्तात्। यच्छतो दातुः। अत्र तकारयकारादेरेकैकस्यासकृदावृत्त्या वृत्त्यनुप्रासः ॥७॥

---

पाठा. 1. श्रीमद्दाशरथेः – नौका ॥

---

१. देवताज्ञा° – मातृका। २. °करणो हेतुः – मातृका। ३. बहुतरा। एकवेण्या° – मातृका। ४. श्चन्देऽपि – मातृका। ५. रसादनिवृ° – मातृका ६. °द्दाशरथिः – मातृका। ७. परौजसः – मातृका.

८. उज्ज्वलत्वम् -

## उज्ज्वलत्वं [1]सौन्दर्यम् । यथा —

यत्सौन्दर्य[2]मवेक्ष्य जीर्णमुनयो वाताम्बुपर्णाशना
धैर्यं नार्य इवापसार्य [3]सहसा सन्त्यज्य लज्जामपि ।

---

**नौका**

'रूपसम्पन्नदेहत्वमौज्ज्वल्यं परिकीर्तितम्' (प्रताप. १. १४) इति लक्षणलक्षितमौज्ज्वल्यमुदाहरति—उज्ज्वलत्वमिति । सौन्दर्यवत्त्वं रूपवत्त्वम् । एवं च कुण्डलमुक्ताहारनूपुराङ्गदादिचतुर्विधभूषणाभावेऽपि भूषितवदवभासमान आकारविशेषः । तदुक्तं भावप्रकाशे —

'आवेध्यारोप्यनिक्षेप्यबन्धनीयैरभूषितम् ।
यद् भूषितमिवाभाति तद् रूपमिति कथ्यते' ॥ इति ॥

यत्सौन्दर्यमिति । इदं च व्यवहितेनापि 'रामस्ये'त्यनेन योग्यताबलात् सम्बद्ध्यते । तथा च — रामस्य सौन्दर्यं पूर्वोक्तलक्षणं रूपम् । जीर्णमुनयो

---

**मन्दरः**

' रूपसम्पन्नदेहत्वमौज्ज्वल्यं परिकीर्त्यते ' (प्रता. नाय. १.१४) इति लक्षितमुज्ज्वलत्वमुदाहरति— यदिति। वाताम्बुपर्णाशना:, भक्ष्यभोज्यादिमधुराहारादिगन्धानभिज्ञा इत्यर्थः । इति कामानुद्दीपनोक्तिः । किञ्च जीर्णमुनयो जरदृषयः । यदिति सौन्दर्यविशेषणम् । समस्तत्वे[1]तु यच्छब्दस्य रामार्थकत्वे 'तत् क्व वे'त्यत्र तच्छब्दस्य सौन्दर्यार्थकत्वानौचित्यात् । सौन्दर्यं (च) "आवेध्यारोप्यविक्षेप्यबन्धनीयैरभूषितम् । यद् भूषितमिवाभाति तद्रूपमिति कथ्यते" (भावप्रकाशे) इति लक्षणलक्षितं रूपम् । सहजं तत्तत्तपोविघाता-

---

पाठ. 1. सौन्दर्यवत्त्वं – नौका । 2. °मुदीक्ष्य – मधु । 3. सहनं – मन्दर°, सहजां क. ख. ।

---

१. °त्वेन – मातृका ।

**सम्भोगं किल वव्रुरित्यभिदधे पौराणिकैस्तत्क्व वा ।**
**रामस्य, क्व नु कामरूपविभवः स्त्रीमात्रनेत्रप्रियः ॥८॥**

---

नौका

वृद्धा ऋषयः । धैर्यं स्थैर्यं हर्षादिविकाररहित्यलक्षण(म)प(सार्य परित्यज्य सहसा सद्य एव रामसन्दर्शनोत्तरक्षण एवेति यावत् । नार्य इव लज्जामपि सन्त्यज्य सम्भोगं किल वव्रु-)रिति । किलेति[1] । तद्वरणरूपवृत्तान्तः (पौराणिकैः) यद् यस्माद् अभिदधे [2]अभिहितः । 'सम्भावनायां वार्तायां स्मृतावनुनये[3] किल' इति रत्नमाला । तत् [4]तादृशं रामस्य सौन्दर्यं क्व ? अन्यत्र (न) भवे (दि) ति (भावः) । कामरूपविभवः मन्मथरूपसम्पत्तिः क्व ? इत्यनेन लोकातिशायिसौन्दर्यमस्येति भावः । तथा [5]च श्रीरामस्य सौन्दर्यलाभेन मुनिभिः सम्भोगः प्रार्थित इत्यादिपौराणिकी कथात्रानुसन्धेया ॥८॥

---

मन्दरः

गताप्सरःसौन्दर्यसङ्गीतनृत्तादिसमाकलनेऽपि स्थिरमित्यर्थः । सम्भोगं वव्रुः किल । अत्र किलेति वार्तायाम् । 'सम्भावनायां वार्तायां स्मृतावनुनये किल' इति रत्नमाला (पं. २६१०) । अभिदधे अभिहितम् । अत्र अननुरूपयोः राममाररूपयोः घटनोक्तेर्विषमालङ्कारभेदः ।

> 'विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत् ।
> विरूपघटना चासौ विषमालङ्कृतिस्त्रिधा'॥ (प्रतापरुद्रीये ७.३९)

इति लक्षणात् ॥ ८ ॥

---

१. किल वत परितिवृत्तान्तः – मातृका । २. अभिहिता–मातृका । ३. त्रुटितमत्र मातृकायाम । ४. तत्तन्मात्र – मस्य – मातृका । ५. तत्र – मातृका ।

[1]यदिति भिन्नं पदम् ॥८-१॥

नायकलक्षणम् --

अथ नायकस्वरूपं निरूप्यते —

कीर्तिप्रतापसम्पन्नः पुमर्थत्रयतत्परः ।
धुरन्धरश्च गुणवान् नायकः परिकीर्त्यते ॥ ९ ॥

---

नौका

यत्सौन्दर्यमित्यत्र [1]यस्य सौन्दर्यमिति षष्ठीसमासभ्रमं वारयति--यदिति। भि[1]न्नमित्यस्य हे[2]त्वर्थकमित्यादिः ॥ ८-१ ॥

महाकुलीनत्वम् (९.१) इत्यादिसङ्ग्रहकारिकायाम् — 'उदारता[3] च' इत्यनुक्तसमुच्चायकेन 'च'शब्देन सङ्गृहीता ये महामहिमत्वादयो दशरूपकोक्ताः, ते तत्रैव द्रष्टव्याः (२.१,२)। एते च यथासम्भवं स्त्रीपुरुषसाधार[4]णाः। पुरुषमात्रनियतास्त्वन्येऽपि शोभादयः। तदुक्तम् —

---

मन्दरः

यत्सौन्दर्यमित्यत्र यच्छब्दस्य श्रीरामपरत्वभ्रान्तिं वारयति—यदिति भिन्नं पदमिति ॥ ८-१ ॥

---

पाठ. १. न पठ्यते वाक्यमिदम् – मधु° ।

---

टिप्प. 1. भिन्नमिति पदादौ हेत्वर्थकमिति पदं पठनीयम्। तथा च – 'यदिति हेत्वर्थकं भिन्नं पदम्' इति फलतीत्यर्थः। व्याख्यातं च तैस्तथैव – 'यद् यस्माद् अभिदधे अभिहितम्' इति ।

---

१. यत्सौन्दर्यमिति षष्ठी° – मातृका । २. वात्यर्ध(र्थ)कमित्यादिः – मातृका । ३. उदारतावित्यनुक्तसमुच्चयकेन – मातृका । ४. °साधारणः – मातृका ।

नौका

'शोभा विलासो माधुर्यं गाम्भीर्यं स्थैर्यतेजसी ।

ललितौदार्यमित्यु[1]क्ताः सात्त्विकाः पौरुषा गुणाः ॥' (दश. २.१०)

इति । तेऽपि तत्रैव द्रष्टव्या इत्युपेक्ष्य नायकलक्ष[1]णं वक्तुं प्रतिजानीते — अथेति ॥

कीर्तीति । कीर्तिः सत्समाख्या । कोशदण्डजं तेजः प्रतापः । पुमर्थत्रयं धर्मार्थकामाः । धुरन्धरो धूर्वहः । "धूरेव धुरा", 'टाब[2]न्तत्वं हलन्तानां' इति वचनात् [2]टाप् । तां धारयतीति धुरन्धरः । "सञ्ज्ञायां भृतॄवृजि°" (पा. ३.२.४६) इत्यदिना 'खच्' प्रत्ययः । 'खित्यनव्ययस्य' (पा. ६.३.६६) इति ह्रस्वः । 'अरुर्द्विषत्—' (पा. ६.३.६७) इत्यादिना मुमागमः इति 'धुरन्धर'शब्दं कुमारस्वामी व्या[3]चख्यौ (प्र.रु. १.२२ व्या.)। 'गुणवान्'—गुणा अपि पूर्वोक्ताः साधारणाः ये महाकुलीनत्वादयः, ये च असाधारणाः शोभादयः, तद्वान् , इत्येव सामान्यलक्षणम् । नयति प्राप्नोति इतिवृत्तफलं चेति नायक इति व्युत्पत्त्या प्रब[4]न्धव्यापिफलवानित्यपि विशेषो द्रष्टव्यः । अत्र 'धुरन्धरश्चे'ति चशब्दोऽनुक्तसमुच्चायकतया 'उत्तममध्यमाधमभेदेन नायकस्त्रिविध इतीमं विभागमनुकर्षति । एवं च उक्तगुणसम्पन्नः प्रब[5]न्धव्यापिफलशिरस्कव्यापार उत्तमः । कतिपयगुणशून्यो मध्यमः । 'बहुगुणशून्योऽधम' इति विवेकः । यद्यपि – गुणसङ्ग्रहकारिकायाम् – 'उदारता च' इति चकारसङ्गृहीतानां कीर्त्यादीनामत्र 'गुणवान्' इति पदे[6]नैवोपादानसम्भवे पृथक् [7]पुनरुपादाने प्रयोजनाभावः, तथाप्येतेषां सर्वेष्वपि नायकेष्वावश्यकत्वमिति द्योतनार्थमिति रहस्यम् ॥ ९. ॥

---

टिप्प. 1. '°मित्यष्टौ सत्त्वजा गुणाः' इति दशरूपके (निर्णय°) । 2. 'आपं चैव हलन्तानां' इति सिद्धान्तकौमुद्यां पठ्यते ।

---

१. °लक्ष्यां – मातृका । २. टिन – मातृका । ३. माचख्य – मातृका । ४. प्रसाधव्यापि – मातृका । ५. प्रबन्धस्यापि फल – मातृका । ६. पदेनैकोपादान° – मातृका । ७. पौनरुपादाने – मातृका ।

[1]तत्र प्रतापसम्पत्तिः प्रागेव प्रा[2]दर्शि।

१०. कीर्तिसम्पन्नत्वम् --

कीर्तिसम्पत्तिर्यथा —

न ग्रस्तस्तमसा न चाह्नि मलिनो [3]दर्शेन नो कर्शितो
नैवास्तङ्गति[4]मान्न चाङ्कितनुर्नो पाक्षिकश्रीरपि।
लोकालोकनगेन्द्रलङ्घनविधौ नो पङ्गुभावं गतो
निर्दोषो गुणसागराद् रघुपतेर्जातो यशश्चन्द्रमाः ॥ १० ॥

---

नौका

'तत्र' कीर्त्यादिगुणेषु। प्रागेव दर्शिते(ति)। 'तत्तादृक्प्रौढ०' — (सा.र. २.६) इत्यादितेजस्वित्वो[1]दाहरणप्रदर्शनेनैव प्रदर्शितेत्यर्थः ॥

कीर्तन(कीर्ति)सम्पत्तिमुदाहरति— न ग्रस्त इति। [1]तमसा राहुणा अन्धकारेण च न ग्रस्तः नाक्रान्तः। 'तमस्तु राहुः स्वर्भानुः' इत्यमरः (१.२.२७)।

---

मन्दरः

एवं नायकगुणान् निरूप्य सम्प्रति तदाश्रयभूतनायकस्वरूपनिरूपणं प्रतिजानीते — अथेति ॥

कीर्तीति — कोशदण्डजं तेजः प्रतापः। 'स प्रभावः प्रतापश्च यत् तेजः कोशदण्डजम्' इत्यमरः। गुणवान् पूर्वोक्तमहाकुलीनत्वादिभिर्महामहिम-पाण्डित्यप्रभृतिभिश्च गुणैर्युक्तः ॥ ९ ॥

---

पाठ. १. नेयं पङ्क्तिः पठ्यते – मधु। २. दर्शिता – नौका। ३. दर्शेऽपि – मधु। ४. °ङ्गतिविन्न – मधु°, °ङ्गतवान्न ख°, °ङ्गमितो न – क°।

---

विशे. 1. "तमसा तमोगुणेन ग्रस्तः अभिभूतो न, प्राकृतचन्द्रस्तु तमसा राहुणा अभिभूयत इति व्यतिरेको यशसः" इति – मधु.।

---

१. °तेजस्वीत्युदाहरण° – मातृका।

**नौका**

प्रसिद्धचन्द्रस्तु तमोग्रस्तः, कीर्ति[1]चन्द्रस्तु नैवमिति प्रसिद्धचन्द्रमसः कीर्तिचन्द्रव्यतिरेक[2] इह प्रतीयते । अत एव व्यतिरेकालङ्कारः । दर्शेन '[3]दर्शः सूर्येन्दुसङ्गमः' (अमर. १.४.८) इत्युक्तेः सूर्यसङ्गमेन ([4]नो कर्शितः न कृशत्वमापन्नः । प्रसिद्धचन्द्रस्तु – दर्शे सूर्यं प्राप्य क्षीणो भवति । अयं कीर्तिचन्द्रस्तु सूर्यमण्डलं प्राप्यापि न क्षीणः, प्रत्युत विद्योतमान एवास्तीति विशेषः । यशसः सूर्यमण्डलव्यापित्वं व्यज्यते । लोकालोकनगेन्द्रलङ्घनविधौ) पङ्गुभावं खञ्जत्वं नो गतः । प्रसिद्धचन्द्रस्य चक्रवालगिरिपर्यन्तमेव सञ्चारः ; कीर्तिचन्द्रस्य तु ततोऽतीत्य गतिरिति विवेकः । दोषा रात्रयः ता एव दोषा निर्गुणाः तेभ्यो निर्गतः निर्दोषः। दोषास्पृष्ट इत्यर्थः । अत एवात्र श्लेषप्रतिभोत्थापितरूपकोज्जीवितो व्यतिरेकालङ्कारः । रघुपतेः सम्बन्धिनो गुण एव सागरः तस्मात् । एतेन निरुप[5]माऽस्य कीर्तिरिति भावः । अत्र व्यतिरेकरूपकालङ्कारयोः नैरपेक्ष्यात् संसृष्टिः ॥ १० ॥

---

**मन्दरः**

तत्रेति । तत्र तस्मिन् नायके । 'प्रादर्शि' 'तत्तादृक्'—(२.६) इत्यादितेजस्वित्वोदाहरणे प्रदर्शिता ॥

कीर्तिसम्पत्तिमुदाहरति — न ग्रस्त इति । तमसा राहुणा । 'राहौ ध्वान्ते गुणे तमः' इत्यमरः (३.३.२३१) । न ग्रस्तो न ग्रहीतः । प्रसिद्धचन्द्रस्तु राहुणा ग्रस्यते । एवमग्रेऽपि यशश्चन्द्रे तत्तद्धर्मनिषेधेनैव प्रसिद्धचन्द्रे व्यतिरेकेण तत्तद्वैशिष्ट्यं बोध्यम् । निर्दोषः तमोग्रस्तत्वादिदोषेभ्यो निर्गतः । प्रसिद्धचन्द्रस्तु सदोषः । यशोरूपश्चन्द्रमाः यशश्चन्द्रमाः । अत्र प्रसिद्धचन्द्राद् रामचन्द्रकीर्तिचन्द्रस्याधिक्यप्रतिपादनाद् व्यतिरेकालङ्कारः —

'भेदप्रधानसाधर्म्यमुपमानोपमेययोः ।
आधिक्याल्पत्वकथनाद् व्यतिरेकः स उच्यते ॥' (प्रतापरुद्रीये ७.४)

इति लक्षणात् ॥ १० ॥

---

१. कीर्तिः चन्द्र° – मातृका° । २. व्यतिरेकः । ह प्रति° – मातृका । ३-४. त्रुटितमत्र – मातृका° । ५. निरुपमोऽस्य – मातृका ।

यथा वा—

उद्वेलाद् गुणसागराद् रघुपतेर्निर्धूतदोषाकरा-
दासीत् कोऽप्यविपल्लवः शुभयशोमन्दारभूमीरुहः ।
नानाभूधरबीजसागररसान् गर्भेऽभितो बिभ्रति
ब्रह्माण्डानि फलानि यत्र बहुशः संश्लिष्य सञ्जाग्रति ॥११॥

नौका

अस्यैवोदाहरणान्तरमाह — उद्वेलादिति । उद्वेलात् वेलातिक्रमणात् । दोषाकरः चन्द्रः दुष्टश्च । स एव स इति दोषाकरः । निर्धूतः तिरस्कृतः दोषाकरो येन तस्मात् निर्धूतदोषाकरात् । एवंविधात् रघुपतिगुणसागरात् । कोऽप्यनिर्वाच्यः । नन्वेवं चेत् किं चित्रम् ? तत्राह — नानेति । बिभ्रति[१] दधन्ति बहुशो बहूनि ब्रह्माण्डान्येव फलानि [२]कर्तॄणि । यत्र यस्मिन् यशोमन्दारे (सं)जाग्रति स्फुरन्तीत्यर्थः[1] । विपुलतरमस्य यश इति भावः ॥११॥

मन्दरः

विच्छित्तिविशेषेणोदाहरणान्तरमाह — उद्वेलादिति । उत्सृष्टे वेले कूलकालौ येन तस्मात् । एतेन कूलेन आकल्पस्थायित्वात् कालेन नियन्त्रितात् प्रसिद्धसागरात् सर्वदेशेषु सर्वदा च व्यापनशीलस्य श्रीरामगुणसागरस्य विशेषो दर्शितः । 'वेलाऽब्धितीराब्धिवृद्ध्योः कालमर्यादयोरपि' इति रत्नमाला (पं. ९८९) । निर्धूता दोषाकरा दुष्टा येन तस्मात्[2] । तद्गुणकीर्तनेन दुरितदूरीकरणादिति भावः । प्रसिद्धसागरस्तु उदयास्तमययोरङ्गीकृतदोषाकर इत्याशयः । कोऽपि विलक्षणः । प्रायेण विलक्षणादुत्पन्नोऽपि विलक्षणो

विशे. 1. 'निर्धूतो दोषाकरो दोषसमूहो येन तस्मात्' – इति मधु । 2. एतेन यशसामखण्डब्रह्माण्डव्यापित्वं ध्वन्यते' – इति मधु ।

१. बिभ्रतीव धत्ते – मातृका । २. कर्तृ – मातृका ।

[1]वेलाशब्देन कूलकालौ द्वावपि विवक्षितौ। तेन -- 'उद्वेल' [2]शब्देन देशकालनियन्त्रितात् प्रसिद्धसागराद् [3]रामगुणसागरस्य व्यतिरेको दर्शितः। निर्धूतदोषाकरादित्यत्रापि तथैव। [4]'अविपप्लवः' वृक्षपक्षे -- पल्लवव्यतिरेकशून्यः, कीर्तिपक्षे -- विपल्लेशेनापि रहितः। नानाभूधरा एव बीजानि, सागरा एव रसाः। अत्र -- श्लेषरूपकातिशयोक्तीनां सङ्करः। 'बिभ्रतीत्यत्र' 'वा नपुंसकस्य' (पा. ७.१.७९) इति वैकल्पिको नुमभावः। [5]धार्मिकत्वौदार्यवर्णनादेव [6]तदुभयतुल्यकोटिकः कामोऽप्यर्थसिद्ध एव ॥११-१॥

नौका

उद्वेलादिपदेषु अलङ्कारादीनि स्वयमेव विशदयति — वेलाशब्देनेत्यादिना। अत्र — 'उद्वेलादित्यत्र' इत्यादिः[1]। विवक्षिताविति। 'वेलाब्धितीराब्धिवृद्धयोः कालमर्यादयोरपि' (ना. र. ९८९) इति कोशादिति भावः। ततः किमत आह — तेनेति। दर्शित इति। जलसागरस्तु किञ्चिद्देशकालनिबद्धः, गुणसागरस्तु सर्वदेशकालयोरस्तीति व्यतिरेकप्रतीतेरिति भावः। इत्यत्रापि तथैवेति। तथा च प्रसिद्धसागरो दोषाकरसहितः, एष तु न तथेति व्यतिरेकः प्रतीयत इति भावः। पल्लवानामभावो विपल्लवः,

मन्वरः

भवतीति भावः। वैलक्षण्यमेव प्रतिपादयति—नानेत्यादिना। बिभ्रति दधन्ति। बहुशो बहूनि ब्रह्माण्डानि फलानीति व्यस्तरूपकम्। सञ्जाग्रति प्रकाशन्ते ॥११॥

पाठ. १. अत्र वेलाशब्देन द्वावेव कूलकालौ विवक्षितौ – मधु। २. °पदेन – मधु। ३. श्रीरामगुण° – मधु। ४. 'अविपल्लव' इत्यारभ्य 'रसाः' इत्यन्तो भागो न पठ्यते – मधु। 5. 'प्रतापसम्पत्तिः प्रागेव दर्शिता' इत्यधिकमादौ पठ्यते – मधु। 2. तदुभयसम्पत्तिरुक्ता, तदुभयतुल्यकोटिः कामो – मधु, क. ख.।

टिप्प. 1. वेलाशब्देनेत्यतः प्राक् – 'उद्वेलादित्यत्र' इति पठनीयमित्यर्थः। तथा च – 'उद्वेलादित्यत्र वेलाशब्देन' इति फलतीति विभाव्यम्।

नौका

पल्लव[1]व्यतिरेकः। 'वि[2] निषेधे पृथग्भावे' इत्यव्ययेषु रत्नमाला (पं. २९६०)। न विद्यते विपल्लवः पल्लवव्यतिरेकोऽस्येति व्युत्पत्त्या अविप[3]ल्लवः, पल्लवसहित इत्यर्थः। इत्याशयेन अविपल्लवशब्दं व्याचष्टे — अविपल्लव इति। इतीति शेषः[1]। न विद्यते विपदाम् आपदां लवो यस्येति व्युत्पत्तिमभिप्रेत्याह — कीर्तिपक्ष इति। यशोमन्दारस्य विशिष्टानेकब्रह्माण्डाश्रयत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेः असम्बन्धे सम्बन्धरूपातिशयोक्तिः। सा च 'यश एव मन्दार' इति रूपकेण तदुचितावयवरूपका(णा)त् सावयवेनोज्जीवितेत्यनयोरङ्गाङ्गिभा[4]वसङ्करः। एवं 'निर्धूतदोषाकराद्' इत्यादौ दोषाकर एव दोषाकर इति श्लेषरूपकयोः स एव सङ्कर इति भावः। ननु 'बिभ्रती'ति कथं सिद्धम्? तत्राह — बिभ्रतीत्यत्रेति। कामोऽप्यर्थसिद्ध एवेति। 'धर्मार्थकामाः सममेव सेव्याः' इति नीतिशास्त्रानुसारादिति भावः ॥११-१॥

---

मन्दरः

विवृणोति — वेलाशब्देनेति। तथैवेति। व्यतिरेको दर्शित इत्यर्थः। अत्रेति। यशसि मन्दारत्वारोपस्य विशिष्टब्रह्माण्डेषु फलत्वारोपस्य च हेतुहेतुमद्भावात् परम्परितरूपकम्। 'अविपल्लव' इति श्लेषस्य यशोमन्दारे सपल्लवतासम्पादकत्वात् श्लेषरूपकयोरङ्गाङ्गिभावः। यशोमन्दारे ब्रह्माण्डानां संश्लेषासम्बन्धेऽपि सम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपातिशयोक्तिः। सा च रूपकोत्थापितेत्यनयोरङ्गाङ्गिभावश्चेति भावः। व्यतिरेकालङ्कारः स्फुट एवेति तस्य श्लेषादीनां च संसृष्टिरिति बोध्यम्। बिभ्रतीति। बिभ्रन्तीत्यस्यापि विद्यमानत्वात्।

---

टिप्प. 1. मूले 'अविपल्लव' इत्यनन्तरम् 'इति' शब्दोऽध्याहर्तव्य इत्यर्थः। तस्य प्रतीकत्वात्।

---

१. पल्लवे व्यतिरेकः – मातृका। २. विनौषधे पृथग्भावे इत्यव्ययरत्नमाला – मातृका। ३. अविप्लवः – मातृका। ४. °भावः सङ्करः – मातृका।

१२. धुरन्धरत्वम् --

**धुरन्धरत्वं यथा —**

> आचार्यवान् वररुचिस्त्रिपुरारिरासी -
> दाकल्पवाञ्छयनवानपि दानवारिः ।
> दिक्पालका विदधुरुत्तमयानचर्यां
> दोर्मण्डले रघुपतौ [1]धरणीं दधाने ॥ १२ ॥

---

नौका

धौरेयतामुदाहरति — आचार्यवानिति । पूर्वं भूभारभरणस्य फणीन्द्राधीनतया उपदेष्टा नास्ति । सम्प्रति तु तस्य श्रीरामायत्तत्वेन निर्भरः फणीन्द्रः वररुचये भाष्यमुपदिष्टवान् । अतो वररुचिरा[1]चार्यवानित्यर्थः । एवमग्रेऽपि । दिक्पालका इति । पूर्वं भूभाराक्रान्तेषु दिग्गजेषु सत्सु इन्द्रादिदिक्पालानां गजयानसञ्चाराभावेऽपि इदानीं तद्भारस्यान्यथासिद्धतया निर्भरैर्दिङ्नागैः सञ्चरन्तीन्द्रादय इति भावः । शेषादयो धरणीं बिभ्रतीत्यागमः । शेषादिभरणीयां भुवं भुजेन दधतः श्रीरामचन्द्रस्य धौरेयता किमु वक्तव्येति भावः ॥१२॥

---

मन्दरः

एवं कीर्तिसम्पत्तिमुदाहृत्य लाघवार्थं पृथगुदाहरणमन्तरेण त्रिवर्गसमृद्धिं दर्शयति—धार्मिकत्वेति । 'ताताज्ञा '–(सा. र. २.७) इति धार्मिकत्वोदाहरणाद् धर्मे, तादृग्धनसमृद्धिं विना तादृशौदार्यस्यासम्भावितत्वात् 'प्रत्यासन्न' (सा. र. २.३) इत्यौदार्योदाहरणादर्थं च सिद्धवत्कृत्य तत्सद्भावात् तस्य कामः स्वतः सिद्ध्यतीत्याशयेनाह — तदुभयेति । कोटिरुत्कर्षः । 'कोटिः प्रकर्षचापाग्रसङ्ख्यापक्षान्तराश्रिषु' इति रत्नमाला (पं. ३४३) ॥११-१॥

---

पाठ. १. धरणिं – मधु० ।

---

१. वररुचिकाचार्य० – मातृका ।

**यथा वा —**

**मृदुचन्दनशीतराम[1]बाहौ**
**कलिता भूर्विजहौ निवासखेदम् ।**
**अतिनिष्ठुरकूर्मकर्पराग्रे**
**विषनिर्दूषितशेषभोगभागे ॥ १३ ॥**

---

नौका

उदाहरणान्तरमाह — मृद्विति । [2]कूर्मकर्पराग्रे कूर्मस्य कच्छपस्य [3]कर्पराग्रे पृष्ठाग्रे । कूर्मरूपी हरिः धरणीं दधारेति पौराणिकाः । अस्याशयस्तु पूर्ववदेव ॥ १३ ॥

---

मन्दरः

धुरन्धरत्वमुदाहरति — आचार्यवानिति । दोर्मण्डले भुजदेशे । 'स्यान्मण्डलं द्वादशराजकेऽपि देशे च बिम्बे च कदम्बके च । कुष्ठप्रभेदेऽप्युपसूर्यकेऽपि भुजङ्गभेदे शुनि [1]मण्डलः स्यात् ' इति विश्वः (लान्तेषु श्लो.८१)। वररुचिर्वाक्यकारः, आचार्यवान् सद्गुरुलाभवान् । पूर्वं शेषस्य समस्तमस्तकविधृतभूभारत्वात् वररुचेर्भाष्योपदेष्टा नासीत् । अधुना तु भुजभागविधृतविश्वविश्वम्भराभारे रघुवीरे स सद्गुरुसकाशात् भाष्यसम्प्रदायान् सद्गृहणातीति भावः। त्रिपुरारिस्त्रिपुरान्तकः, आकल्पवान् कङ्कणकेयूरहाराद्याभरणधारणसमञ्चितवेषः । ' अथ प्रयत्नोन्नमितानमत्फणैर्धृते कथञ्चित् फणिनां गणैरधः ' (शिशु. १.१३) इत्युक्तत्वात् भुजङ्गभूषणस्य तस्य तदसम्भवादाभरणाभावोऽभूत् । अद्य तु भूभारस्यान्यायत्तत्वात् तत्सम्भवेन तल्लाभोऽभवदिति भावः । उत्तमयानैः गजैः चर्या सञ्चारम् । अत्र सम्भूय धरित्रीधारिभ्यः शेषादिभ्योऽसहायधुरन्धरस्य श्रीरामस्याधिक्यप्रतीतेर्व्यतिरेकालङ्कारो व्यज्यते । लक्षणं तूक्तम् ॥१२॥

---

पाठ. १. °बाहा° – मधु° क. ख. ।

---

१. मण्डने – मातृका । २. कूर्मखर्वराग्रे – मातृका । ३. खर्पराग्रे – मातृका ।

अत्र'निष्ठुर' 'विषनिर्दूषित' [1]पदमहिम्ना भूदेवताया अनुचितस्थलावस्थानेन महान् [2]सन्तापो [3]जात इति वस्तु वस्तुना ध्वन्यते ॥ १३-१ ॥

१२. गुणाढ्यत्वम् --

गुणाढ्यत्वं यथा —

शेषाश्चेत् पुरुषास्त्रिविष्टपजुषः सर्वेऽप्यनाशाशुषः
सर्वज्ञाश्च चतुष्पदीपरिमितां वाचं वदेयुः [4]सदा ।
शब्दाश्च क्रमवर्जिता यदि समस्तार्थाभिधानक्षमा
नाक्रान्ताश्च विवक्षया रघुपतेस्तत्राप्यगण्या गुणाः ॥ १४ ॥

---

नौका

अत्र यो विशेषस्तमाह — अत्र निष्ठुरेत्यादिना ॥ १३-१ ॥

गुणाढ्यतामाह — गुणाढ्यत्वं यथेति ॥

---

मन्दरः

उदाहरणान्तरमाह — मृदुचन्दनेति । कलिता स्थिता । अतिनिष्ठुरस्य कूर्मकर्परस्य कूर्मपृष्ठस्य अग्रे उपरिभागे । अत्र — वैपुल्यनैष्ठुर्याभ्यां कटाहसादृश्यात् कमठपृष्ठस्य कर्परत्वव्यपदेशः । 'कपाले च कटाहे च भैक्षपात्रे च कर्परः' इति रत्नमाला (पं. १८९३)। अत्रापि पूर्ववदलङ्कारः॥१३॥

ध्वनिविशेषं विवृणोति — अत्रेति ॥ १३-१ ॥

---

पाठ. १. °पदद्वयमहिम्ना - मधु° । २. अनुतापो - मधु क. ख. । ३. जज्ञ इति - मधु°, जायत इति वस्तुना - ख. । ४. तदा - ख. ।

नौका

शेषा इति। पुरुषाः [1]शेषाश्चेत् [2]सहस्रमुखाः फणीन्द्रा यदीति सम्भावना। किं पुरुषा [3]इति [4]सङ्कोचः ? नेत्याशयेनाह — [5]त्रिविष्टपेति। त्रयाणां विष्टपानां समाहारः त्रिविष्टपम्, भुवनत्रयमित्यर्थः। समाहारे द्विगुः, पात्रादित्वात् न स्त्रीत्वम्। तज्जुषः तद्गताः। '[6]जुषी प्रीतिसेवनयोः' (धा. पा. १२८९) इति क्विप्। [7]नन्वनित्यैस्तु किं सिद्ध्येयदत आह — अनाशेति। नित्याः सन्त इत्यर्थः। भूयादेवं, किञ्चिज्ज्ञैः किं कार्यमित्याशङ्क्य न हीत्याशयेनाह—सर्वज्ञा इति। सर्वज्ञाः सन्त इत्यर्थः। ननूक्तरूपैरपि पुरुषै[8]र्वाग्धेनोरेकपद (मात्रवादिभिः) किं सेत्स्यतीत्याशङ्क्याह — [9]चतुष्पदीति। चतुर्णां पदानां समाहारश्चतुष्पदी। 'तद्धितार्थः —' (पा. २. १. ५१) इत्यादिना समासः। 'द्विगोः' (पा. ४.१.२१) इति ङीप्। क्रमवर्जिता इति। क्रमवत्त्वे विलम्बापत्तेरिति भावः॥ १४॥

---

मन्दरः

गुणाढ्यत्वमुदाहरति — शेषा इति। पुरुषाः शेषाश्चेत् सहस्रमुखा यदि। ननु भूलोकवासिभिः तैः शेषैरपि किं भवेदित्याशङ्क्याह — त्रिविष्टपजुष इति। तथापि कतिपये (एव) ते ? (न) इत्याशयेनाह — सर्वेऽपीति। तरुगुल्मलतादिपिपीलिकामत्कुणमशकादिस्थावरजङ्गमाश्चेत्यर्थः। नन्वेवमपि परिमितायुर्भिस्तैः किं स्यादित्यत्राह — अनाशाशुष इति। ननु तथाप्यल्पज्ञानां तेषां तद्गुणाः कथं गोचरा भवेयुरित्यत्राह — सर्वज्ञाश्चेति। ननु तथापि वैखरीमात्रोच्चारिभिस्तैः कथं गण्यन्त इत्यत्राह — चतुष्पदीनि। चतुर्णां पदानां समाहारश्चतुष्पदी, तत्परिमितां, परापश्यन्तीमध्यमावैखरीनामकपदचतुष्टयपरिच्छिन्नामित्यर्थः। तादृशीं वाचं वदेयुर्यदि। नन्वेकदा विशिष्टवागुच्चारणक्षमत्वेऽपि किं भवेदित्यत्राह — सदेति। ननु तादृग्गणयितृसम्प—

---

१. शेषाश्च – मातृका। २. सम्भावनाफणीन्द्रा – यदिति – मातृका। ३. 'पुरुषा इति' पुनः पठ्यते – मातृका। ४. सङ्कोचेनेत्या° – मातृका। ५. त्रिविष्टेति – मातृका। ६. जुषेः – मातृका। ७. °नित्योऽस्तु – मातृका। ८. 'र्वा धेनोरेकपाद' – मातृका°। ९. चतुष्पदेति। चतुर्भिः पदानां – मातृका।

[1]अत्र सर्वपदं यथायथं सम्बद्ध्यते। तरुगुल्मलतादयश्चतुर्मुखान्ता जीवाः सर्वशब्दार्थः। चतुष्पदीपरिमिता। वाग्धेनोश्चत्वारि पदानि [2]सन्ति। [3]तत्र पदत्रयं प्राणिनो नोच्चारयितुं क्षमन्ते। [4]किन्तु [5]तुरीयममेव [6]पदं वदन्ति। [7]अयं चार्थः 'चत्वारि वाक्परिमिता पदानि' (ऋ. १.१६४.४५) इत्यादिश्रुतिसिद्धः।

---

**नौका**

श्लोकतात्पर्यं स्वयमेवाह — अत्रेत्यादिना। यथायथं यथास्वम्। 'यथास्वं तु यथायथम्' इत्यमरः (३.४.१४)। सम्बद्ध्यत इति। तथा च—'पुरुष'शब्देन 'जुष' इत्यनेन 'शब्दा' इत्यनेन च 'सर्वेऽपि' इति पदं सम्बद्ध्यत इत्यर्थः। 'पुरुषजुष'—पदसम्बन्धे सर्वशब्दार्थमाह — तरुगुल्मेत्यादिना। चतुष्पदीत्यादेः सत्त्वार्थे श्रुतिं (प्रमाणयति)—चत्वारीति।

'चत्वारि वाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः।

---

**मन्दरः**

त्सद्भावेऽपि शब्दानां लिङ्गविभक्तिवचनानुसारिविशेषणविशेष्यभावरूपक्रमनियमितत्वाद् विलम्बापत्तिः स्यादित्याशङ्क्याह — शब्दाश्च क्रमवर्जिता इति। ननु तथापि तेषां वाचकलक्षणव्यञ्जकभेदभिन्नत्वात् कालातिपातः स्यादित्यत्राह—समस्तेति। अभिधालक्षणाव्यक्तिप्रसक्तिं विना वाच्यलक्ष्यव्यङ्ग्यार्थाख्यानशक्ताश्चेदित्यर्थः। नन्वेवमपि तेषां प्रकृतोपयुक्तार्थविवक्षानुसारेण प्रयोक्तव्यत्वात् विलम्बापत्तिः स्यादित्यत्राह — नाक्रान्ताश्च विवक्षयेति। विवक्षया आकाङ्क्षया। नन्वेवं सामग्र्यामपि निखिलगुणगणगणना स्याद्वा न वेत्यत्राह — तत्रापीति। रघुपतेः सर्वेऽपि गुणा अगण्याः, कतिचिद् गणिता भवेयुरिति भावः॥ १४॥

---

पाठ. १. अत्रेत्यारभ्य 'शब्दार्थः' इत्यन्तं न पठ्यते – मधु°। २. न पठ्यते–मन्दरः ख.। ३. तत्राद्यपद° – क.। ४. न पठ्यते – मधु° क.ख.। ५. तुर्यमेव – ख, तुरीयपदमेव – मधु°। ६. न पठ्यते – क.। ७. इत्ययमर्थः – मधु° अयमर्थः क.।

वदेयुरिति सम्भावनायां लिङ्। वदनं सम्भावितं चेदित्यर्थः। *समस्तेति। लक्षणादिवृत्त्या अर्थबोधकत्वे विलम्बापत्तेरिति भावः। 'तत्रापि' [1]तथापीत्यर्थः। अतिशयोक्तयः,* [2]गणनासामग्री-[3]मेलनेऽपि कार्यानुत्पत्तेर्विशेषोक्तिश्च। सा चातिशयोक्त्यनुप्राणितेति[4] सङ्करः॥ १४—१ ॥

---

### नौका

गुहा त्रीणि निहिता नेङ्गयन्ति

तुरीयं वाचो मनुष्या वदन्ति'। (ऋ. १.१६४.४९)

इति श्रुतिसिद्धः इत्यर्थः। विलम्बापत्तेरिति। लक्षणायाः शक्यसम्बन्धरूपायाः शक्यापेक्षत्वादिति भावः। अत्रालङ्कारानाह — अतिशयोक्तय इति। पुरुषादीनां शेषत्वाद्यसम्बन्धेऽपि सम्बन्धोक्तिरूपा इत्यर्थः। [1]गणनेति। सम्भावितकारणकलापे सत्यपि गुणगणनारूपकार्यानुत्पादात् विशेषोक्त्यलङ्कार इत्यर्थः। 'सा च' विशेषोक्तिश्च। अत एव न स्त्रीलिङ्गनिर्देशानुपपत्तिः। सङ्कर इति। अङ्गाङ्गिभावेनेत्यादिः। अतिशयोक्तिमहिम्नैव सामग्रीमेलनस्य वक्तव्यतया [2]तदुत्थापिताया विशेषोक्तेरङ्गाङ्गिभावेन सङ्कर इति भावः॥१४-१॥

---

### मन्दरः

अत्र कतिपयपदार्थाभिधानपूर्वकमलङ्कारान् विवृणोति — अत्रेति। यथायथं यथायोगम्। पुरुषशब्दगुणशब्दैः सम्बद्ध्यते। तस्य पुरुषविशेषणत्वे को लाभ इत्यत्राह — तरुगुल्मेति। अयं चेति।

---

पाठ. ** एतच्चिह्नमध्यगतो भागः न पठ्यते – मधु°। १. तदापीत्यर्थः–ख.। २. अत्र गणना° – मधु°। ३. °सत्त्वेऽपि – मधु°। ४. तेषां सङ्करः – मन्दरः।

---

१. गुणानामिति – मातृका। २. तदुत्थापितया – मातृका।

१३. **नायकभेदाः --**

**स च नायकश्चतुर्विधः—'धीरोदात्तो धीरोद्धतो [1]धीरललितो धीरशान्तश्च' इति ॥**

---

नौका

अथ धीरोदात्तादयश्चत्वारो नायकाः सर्वसाधारणाः । तेषामेव शृङ्गाराश्रयतया अनुकूलादिभेदेन प्रत्येकं चतुर्विधानामुत्तममध्यमाधमभेदेन पुनः

---

मन्दरः

"चत्वारि वाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति" ॥ (ऋ. १.१६४.४५)

इति श्रुतिप्रतिपादितः । लक्षणादीति । लक्षणाया वाच्यार्थबाधतद्योगप्रयोजनपर्यालोचनसापेक्षत्वाद् व्यञ्जनायाश्च शब्दार्थोभयशक्तिमूलत्वाच्चेति भावः । अतिशयोक्तय इति । पुरुषादीनां शेषत्वादिसम्भावनायाः शशविषाणकल्पत्वादसम्बन्धे सम्बन्धरूपातिशयोक्तय इत्यर्थः । गणनासामग्रीति । विशेषोक्तिश्चेति । 'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे' इति लक्षितेत्यर्थः । सा चेति । अतिशयोक्तीनां कारणपौष्कल्यसम्पादकत्वात् तदनुप्राणितेति भावः । 'सङ्करः' अङ्गाङ्गिभावलक्षण इत्यर्थः । तेषामिति । अलङ्कारत्वाभिप्रायेण पुंलिङ्गनिर्देशः ॥ १४—१ ॥

एवं सामान्यतो नायकस्वरूपं निरूप्य तद्भेदप्रदर्शनपूर्वकं तद्विशेषानाह— स चेति ॥

---

पाठ. १. धीरशान्तो धीरललितश्चेति – क. ख. ।

१४. धीरोदात्तः --

[1]गम्भीरः सारसम्पन्नः कृपावानविकत्थनः ।
परकीयगुणग्राही धीरोदात्तो निगद्यते ॥ १८ ॥

[2]गाम्भीर्यं हर्षामर्षादिव्यञ्जकविकारशून्यत्वम् ॥ १८-१॥

---

नौका

प्रत्येकं त्रैविध्ये अष्टाचत्वारिंशद् भेदाः । धीरोदात्तादिशब्दाश्च महावीरचरितादिमहाप्रबन्धेषु एकस्यानेकरूपाभिधानेन बस्तवृषभमहोक्षादि[1]शब्दवदवस्थावाचिनो न जातिवाचका इति प्रतिपादितं दशरूपके (२. ७)। तत्र कतिचन लक्षणोदाहरणाभ्यां [2]प्रदर्श्यन्त इत्याशयेन नायकं चतुर्धा गणयति-- स चेति । उक्तलक्षण इत्यर्थः । चातुर्विध्यमेव दर्शयति—धीरोदात्त इति ॥

तत्रादौ धीरोदात्तं लक्षयति—गम्भीर इति । सारो बलम् । 'सारो बले स्थिरांशे च' इत्यमरः । परदुःखप्रहाणेच्छुः कृपावान् । आत्मश्लाघाविहीनोऽविकत्थनः । 'अनुदात्तेतश्च हलादेः' (पा. ३.२.१४९) इति युच् ॥१९॥

'[3]गम्भीर' इत्यत्र गाम्भीर्यं निर्वक्ति—गाम्भीर्यमिति । [4]इष्टलाभजनितो मनःप्रसादो हर्षः । सापराधविषयो रोषोऽमर्षः । आदिना इष्टानुभवादिजन्यानन्दादिलक्षणसुखादिकं सङ्गृह्यते । विकारो [5]मुखप्रसादमुखमालिन्यादिः ॥
॥ १९—१ ॥

---

मन्दरः

तत्र धीरोदात्तं लक्षयति—गम्भीर इति । सारसम्पन्नः शारीरबलाढ्यः । 'सारो बले स्थिरांशे च' इत्यमरः (३.३.१७१)। कृपावान् परदुःखासहिष्णुः । अविकत्थनः आत्मश्लाघाविमुखः । परकीयान् शत्रुसम्बन्धिनो गुणान् गृह्णाति तथोक्तः ॥ १९ ॥

---

पाठ. १. आदौ 'तत्र यथा' इति पठ्यते मधु° । २. तत्र गाम्भीर्यं – मधु° ।

---

१. °शब्दतदवस्था° – मातृका । २. प्रदर्श्यते – मातृका । ३. गाम्भीर्य इत्यत्र – मातृका । ४. इष्टालाभ° – मातृका । ५. मुनिप्रसार° – मातृका ।

**यथा —**

**राज्यस्थो वा वनस्थो भवति रघुपतिस्तुल्यनिन्दाप्रसादः**
**कैलासोद्धारणादीन् [1]प्रकटयति गुणानद्भुतान् रावणस्य**
**सीताश्लेषाभिलाषिण्यपि गलविपिने न्यस्तशस्त्रः कृपावान्**
**लज्जासिन्धौ निमज्जत्यवनतवदनः किन्नरैर्गीयमानः ॥ १६ ॥**

---

**नौका**

उदाहरति—राज्यस्थ इति। अनेन गाम्भीर्यं दर्शितम्। 'प्रकटयति' श्लाघते—इत्यनेन ([1]रामभद्रस्य) परकीयगुणश्लाघित्वं दर्शितम्। गलविपिन इति। 'रावणस्ये'त्यनुकृष्यते। रावणस्य गलविपिन इत्यर्थः। शस्त्र इति। अनेन सार[2]सम्पत्तिरुक्ता। 'लज्जे'त्यादिना अविकत्थनत्वमुक्तम्। एवं च सर्वोत्कर्षेण वृत्तित्वं धीरोदात्तत्वमिति फलितम् ॥ १६ ॥

---

**मन्दरः**

अन्येषां सुग्रहत्वात् गाम्भीर्यमात्रं विवृणोति—गाम्भीर्यमिति। विकारा मुखविकासतत्सङ्कोचादयः ॥ १९—१ ॥

उदाहरति—राज्यस्थ इति। तुल्यः वक्त्रप्रसादो मुखप्रसन्नता यस्य स तथोक्तः। सिंहासनोपवेशच्छत्रचामरादिमहाराजलक्षणोपभोगसमये कण्टकाद्यावृतकान्तारभागकन्दमूलाद्यन्वेषणवेलायां च अवैलक्षण्यमुखलक्षण इत्यर्थः। एतेन लोकोत्तरं गाम्भीर्यं तस्येति दर्शितम्। 'कैलासोद्धारणादीन्' पुष्पकापहरणैरावणोत्क्षेपणादय आदिशब्दार्थः। 'प्रकटयति' रावणदूषणप्रस्तावप्रवृत्तानां पुरतः—

'गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥' (चं. ९.११.१)

---

पाठ. प्रगणयति – क. ख.।

---

१. त्रुटितमत्र – मातृकायाम्। २. संवृत्ति° – मातृका।

१५. **धीरोद्धतः —**

**चण्डो विकत्थनो दृप्तो बली धीरोद्धतो मतः ॥**

**यथा —**

**रे रे लङ्केश रामं किमिति मृगयसे तिष्ठ रे [1]निष्ठुरा मे**
**प्रौढप्रायातिकायक्षतजरस[2]झरैः सम्यगाचम्य पूर्वम् ।**

---

**नौका**

धीरोद्धतं लक्षयति— चण्ड इति । चण्डो रौद्रः । दृप्तो दर्पवान् । दर्पश्चातिमदः । बली अन्तःसारवान् । धीरो धैर्यवान् चोद्वेगाचलितत्वलक्षणं स्थैर्यम् । विकत्थन आत्मश्लाघावान् । एवंविधो धीरोद्धत इत्यर्थः । अत्र धैर्यादिसामान्यगुणानां विशेषलक्षणे तूपाधानं तत्रावश्यकत्वसूचनाय ॥

उदाहरति — रे रे इति । 'हीनसम्बोधने तु रे' इत्यमरः । तस्य च— '°असूयासम्मतिकोपतर्जनभर्त्सनेषु' (पा. ८.१.८) इत्यसूयाद्यर्थेषु द्विर्भावः ।

---

**मन्दरः**

इति न्यायमनुसृत्य प्रथयतीत्यर्थः । एतेन परकीयगुणग्राहित्वं कैमुत्यसिद्धमिति भावः । सीताश्लेषाभिलाषिण्यपीति । अतिशीघ्रच्छेद्येऽपी'त्यपि'-शब्दार्थः । 'न्यस्तशस्त्रः कृपावान्' इत्यनेन परदुःखासहिष्णुत्वं व्यज्यते । किन्नरैर्गीयमानः सन् अवनतवदनो भवति इत्यनेन आत्मश्लाघाश्रवणेऽपि लज्जितस्याविकत्थनत्वमर्थात् सिद्धमिति सूच्यते । तस्मात् धीरोदात्तगुणोत्तमो रघूत्तम इति भावः ॥ १६ ॥

अथ धीरोद्धतं लक्षयति—चण्ड इति । चण्डोऽतिकोपशीलः । 'चण्ड स्त्वत्यन्तकोपनः' इत्यमरः (३.१.१२) । विकत्थनः आत्मश्लाघापरः । दृप्तो गर्वितः । बली शारीरबलाढ्यः ॥

---

पाठ. १. निष्टराति° – ख. । २. झरान् – क. भरैः – ख. ।

**नीत्वा प्राणाहुतीनां पदमतिकठिनानिन्द्रजित्प्राणवायून्**
**काण्डास्त्वत्कालखण्डाचलकबलविधौ[1] व्यग्रभावं भजन्ते ॥१७॥**

---

नौका

अत्र—'स्वरितमाम्रेडिते' (पा. ८.२.१०३) इत्यादिना प्राप्तस्य प्लुतस्य 'सर्वः प्लुतः साहसमनिच्छता विभाषा कर्तुमिष्यते' (काशिका ८.२.८६) इति पाक्षिकः प्रतिषेधः। 'शास्त्रत्यागः साहसम्' इति हरदत्तः (पदमं. ८.२.८६)। किमिति मृगयसे। मार्गणा व्यर्थमित्यर्थः। तिष्ठ मत्पुरतः (इति शेषः)। 'रे' तुच्छेति पुनर्नीचसम्बोधनम्। मे मत्सम्बन्धिनः निष्ठुराः कठिनाः काण्डाः बाणाः। 'काण्डोऽस्त्री दण्ड[1]बाणार्ववर्गावसरवारिषु' इत्यमरः (३.३.४३)। त्वत्कालेत्यादि। तव कालखण्डो हृन्मांसपिण्डं स एवाचलः तस्य 'कवलनविधौ' भक्षणकरण इत्यर्थः। त्वत्कालेत्यत्र—'प्रत्ययोत्तरपदयोश्च' (पा. ७.२.९८) इति युष्मदस्त्व[1]दादेशः। सुगममन्यत्। [2]इदं लक्ष्मणवचनम्। तेन तस्यैव धीरोद्धतत्वं विज्ञेयम्। अत्र यथासम्भवं चण्डत्वादिगुणा ऊह्याः ॥ ॥ १७ ॥

---

मन्दरः

उदाहरति—रे रे इति। [3]रावणं प्रति लक्ष्मणवाक्यम्। 'रे' 'रे' इति कोपातिरेकवशाद् द्विरुक्तिः। एतेन चण्डत्वं दर्शितम्। 'नीचसम्बोधने तु रे' इत्यमरः। रामं किमिति मृगयसे? रे तिष्ठ। त्वादृशस्य रामपर्यन्तपर्यटनमनपेक्षितमिति भावः। एतेन दर्पः सूचितः। बालस्य तव मया सह

---

पाठ. १. °हृतौ – मधु° ख.। हुतो – क.।

---

टिप्प. 1. यद्यपि 'युष्मदो मपर्यन्तस्य त्वादेश' इत्येव वक्तुं युक्तम्, तथापि स्पष्टप्रतिपत्त्यर्थं तथावचनमिति विभाव्यम्।

---

१. °बाणश्चवर्गा° – मातृका। २. 'इन्द्रजिद्वधमाकर्ण्य क्रोधमूर्च्छितं युद्धाय राममन्वेषयन्तं रावणं प्रति लक्ष्मणोक्तिरियम् – मधु°। ३. लक्षणवचनम् – मातृका।

१६. धीरललितः —

स धीरललितो नेता
निश्चिन्तो भोगलम्पटः ॥

---

नौका

धीरललितमाह—स धीरललित इति। निश्चिन्तः अनुजसुतसचिवादिविनिपा(ति)तयोगक्षेमतया चिन्तारहितः। अत एव—भोगलम्पटो भोगासक्तः ॥

---

मन्दरः

योद्धुं कुतः शक्तिरित्याशङ्क्याह—निष्ठुरा इति। निष्ठुराः तीक्ष्णाः, मे काण्डाः बाणाः। 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः (३. ३. ४३)। पूर्वं प्रथमम्। प्रौढप्रायः प्रौढतुल्यः। 'प्रायस्त्वनशने मृत्यौ तुल्यबाहुल्ययोरपि' इति विश्वः (९४.९)। योऽतिकायः[1] तस्य क्षतजरसस्य रक्तोदकस्य झरैः। 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इत्यमरः (२.६.६४)। 'शृङ्गारमुख्यमधुरादिसुवर्णरेतोनिर्यासरागगरलद्रवपारदेषु। आस्वादनध्वनिसुधाम्बुरसाख्यधातुष्विष्टो रसः' इति रत्नमाला (प. ११३९)। सम्यक् यथेच्छम्। आचम्य। एतत् स्नानस्याप्युपलक्षणम्। त्वत्सम्बन्धिनः कालखण्डाचलस्य अचलसदृशमांसविशेषस्य कबलविधौ भोजने। 'कालखण्डयकृती तु समे इमे' इत्यमरः (२.६.६६)। व्यग्रभावं त्वरितत्वम्। प्राणाहुत्याकलनानन्तरमभ्यवहारं प्रति त्वरा समुचितैवेति भावः। एतेन विकत्थनत्वं ज्ञापितम्। अत्र बाणेष्वाचमनादिलौकिकवृत्तान्तसमारोपात् समासोक्तिः। 'विशेषणानां तौल्येन यत्र प्रस्तुतवर्तिनाम्। अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते (प्रतापरुद्रीये ७.२०) इति लक्षणात् ॥ १७ ॥

धीरललितं लक्षयति—स इति। नेता नायकः ॥

---

१. '[अतिकायस्य असुरविशेषस्य क्षतजानि रक्तान्येव रसझरा मकरन्दप्रवाहाः तैः' इति—मधु°।

**यथा —**

राज्याभिषेकसमनन्तरकालमेव
रामेण सादरसमर्पित[1]राज्यलक्ष्मीः ।
शत्रुघ्नलक्ष्मणमुखैरुपचर्यमाणः
साम्राज्यभोगनिरतो भरतो बभूव ॥ १८ ॥

**१७. धीरशान्तः —**

**धीरशान्तः [2]शान्तिधैर्य -**
**दीप्रो विप्रो निगद्यते ॥**

---

नौका

उदाहरति—(राज्येति)। कालमेवेति। 'कालाध्वनोरत्यन्तसंयोगे' (पा. २.३.५) [1]इति द्वितीया। रामेणेति कर्तरि तृतीया। अत्र शत्रुघ्नादीनां राज्यधुरन्धरत्वेन निश्चिन्तो भरतो भवतीति भरतस्य धीरललितत्वम् ॥ १८ ॥

धीरोदात्तादिषु तुरीयं लक्षयति—धीरशान्त इति। शान्तिः शमः, धैर्यं विवेचकत्वं, क्लेशसहिष्णुत्वं वा आभ्यां (दीप्रः) प्रकाशमानो विप्रो ब्राह्मणः, धीरशान्त इत्यर्थः। 'सामान्यगुणयुक्तस्तु धीरशान्तो द्विजादिकः' (द. रू. २.४) इति केचित्। अत्र आदिपदेन वणिक् (सचिवौ) विवक्षिताविति [1]स्वामी (प्र.रु.व्या. १३) ॥

---

मन्दरः

उदाहरति—राज्येति। 'राज्याभिषेकसमनन्तरकालमेव' राज्याभिषेकाव्यवहितोत्तरक्षण एवेत्यर्थः। शिष्टं स्पष्टम् ॥ १८ ॥

---

पाठ. १. °राजलक्ष्मीः – क. ख.। २. शान्तधैर्यदीप्तो – ख.।

---

टिप्प. 1. प्रतापरुद्रीयव्याख्याता कुमारस्वामिसोमपीथी धीरशान्तलक्षणावसरे व्याचख्यावित्यर्थः।

---

१. चेति – मातृका।

यथा—

> गङ्गादीनां नदीनाममलिनपुलिने हंससंसेव्यमाने
> स्नाताः पूताः प्रशान्ताः शुभलसितभसितन्यस्तशस्तत्रिपुण्ड्राः ।
> सन्तः सन्तोषवन्तो महितमहितहृद्रामनामाभिरामं
> जापं जापं दुरापं निलयमकलयन् भासुरा [1]भूसुरेन्द्राः ॥१९॥

---

नौका

उदाहरति—गङ्गादीनामिति । स्नाताः अत एव पूताः । महितं पूज्यम् । अहितहृत्[1] रावणादिशत्रुहरम् । कर्तरि क्विप् । [2]अहिताः कामक्रोधाद्यन्तःशत्रवो वा । अभिरामं मनोहरं रामनाम जापं जापं जप्त्वा जप्त्वा । [3]'आभीक्ष्ण्ये'—(पा. ३.४.२२) इति णमुल् । 'नित्यवीप्सयोः' (पा.८.१.४) इति द्विर्भावः । दुःखेनाप्यते प्राप्यते इति दुरापः । (तम्) अप्राप्यमपि निलयं वैकुण्ठादिस्थानं मुक्तिं वा । भुवि सुष्ठु शोभनं [4]राजन्त इति भूसुराः भूदेवाः । 'अन्येभ्योऽपि दृश्यते' (वा. ३.२.१०१) इति सूत्रे पठितम् इति [5]डप्रत्ययः । [6]'द्विजाग्रजन्म-भूदेवबाडवाः' इत्यमरः । तेषामि[7]न्द्राः श्रेष्ठाः । ब्राह्मणोत्तमा इत्यर्थः । [8]अकलयन् प्रापुरित्यर्थः । शिष्टं स्पष्टम् । अत्र (प्र)शान्ता इति शान्तिरुक्ता । स्नानादिसहिष्णुत्वाद् धैर्यमुक्तम् ॥ १९ ॥

---

मन्दरः

अथ धीरशान्तं लक्षयति—धीरशान्त इति ॥

उदाहरति—गङ्गादीनामिति । महितं पूजितम् । अहितान् कामक्रोधादीनन्तःशत्रून् हरतीति तथोक्तम् । जापं जापं जप्त्वा जप्त्वा ॥ १९ ॥

---

पाठ. भूसुरास्ते – ख. ।

---

१. अहितत्वात् रावणादिशल्यहरं – मातृका । २. अवहिताः – मातृका । ३. अभीक्षणमेत्येति णमुल् – मातृका । ४. राजत इति – मातृका । ५. तप्रत्ययः – मातृका । ६. आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाचकाः – मातृका । ७. °मिन्द्रः श्रेष्ठः – मातृका । ८. कलयं – मातृका ।

**अत्र शब्दालङ्काराणां संसृष्टिः ॥१९-१॥**

**एते नायकाः सर्वरससाधारणाः ॥**

१८. **शृङ्गारनायकाः --**

**[1]अनुकूलो दक्षिणः शठो [2]धृष्ट इति चत्वारः [3]शृङ्गाररस-नायकाः ॥**

---

नौका

अत्र अलङ्कारान् विविनक्ति --- अत्रेति। सन्तः सन्तोषेति जापं जापमिति च व्यञ्जनद्वयावृत्त्या छेकानुप्रासः। 'महितमहिते'ति स्वरव्यञ्जनाद्य-शेषावृत्त्या यमकम्। इतरत्र सर्वत्र [1]एकद्वयादिवर्णावृत्त्या वृत्त्यनुप्रासः। एतेषां च शब्दालङ्काराणां परस्परनिरपेक्षत्वात् संसृष्टिरिति भावः ॥१९-१॥

उदाहृताश्च नायकाः सर्वे च साधारणा [2]इत्याह—एत इति ॥

अथ शृङ्गाररसनायकान् चतुर्धा विभजते – अनुकूल इति ॥

---

मन्दरः

अत्रालङ्कारान् विवृणोति — अत्रेति। 'सन्तः सन्तो' 'जापं जापं'-इति व्यञ्जनद्वयावृत्त्या छेकानुप्रासः। 'महितमहित' इत्यत्र स्वरव्यञ्जनसमु-दायावृत्त्या यमकम्। सर्वत्र वृत्त्यनुप्रासश्चेति त्रयाणां संसृष्टिः ॥१९-१॥

एत इति। धीरोदात्तादयश्चत्वारो नायकाः सर्वरससाधारणाः। अनु-कूलादयस्तु शृङ्गारमात्रविषयाः ॥

---

पाठ. १. 'अनुकूलो दक्षिणश्च शठो धृष्ट इति स्मृतः' – मन्दरः। २. धूर्तः – मधु॰। ३. 'शृङ्गारनायकाः' इत्येव – मधु॰ क. ख.।

---

१. एकद्व्यापिवर्णवृत्त्या – मातृका। २. इति वाह – मातृका।

१९. अनुकूलः —

एकायत्तोऽनुकूलः स्यात् ।

यथा —

धम्मिल्लं दरफुल्लहल्लकदलैरुल्लास्य भालस्थले
कस्तूर्या[1] तिलकं कपोलकुचयोर्निर्माय पत्राङ्कुरान् ।
उत्सङ्गे विनिवेश्य भूषणगणैः सीतां स्वयं भूषितां
रामः क्रीडति कामकार्मुकलतामौर्वीविपञ्चीरवैः ॥ २० ॥

---

नौका

तत्रानुकूलं लक्षयति—एकायत्त इति । नायिकान्तरेषु सत्स्वपि एकस्या-(मेव) आयत्तो निघ्न एकायत्तः । 'अधीनो निघ्न आयत्तः' इत्यमरः (३.१.१६) । एकस्यामेव विशेषानुरक्तः अनुकूलो नायक इत्यर्थः । एक[1]जानिरेवानुकूलो यथा रामा[2]दिरिति केचित् ॥

उदाहरति–धम्मिल्लमिति । धम्मिल्लं केशपाशम् । 'कबरी[1]केशपाशौ च धम्मिल्लः संयताः कचाः' इत्यमरः (२.६.७७) । दरफुल्लैः ईषद्विकसितैः । 'ईषदर्थे दराव्ययम्' इति विश्वः (१०.२१) । हल्लकदलैः रक्तकल्हारपत्रैः ।

---

मन्दरः

अनुकूलं लक्षयति—एकेति ॥

उदाहरति–धम्मिल्लमिति । दरफुल्लानाम् ईषद्विकसितानां हल्लकानां दलैः धम्मिल्लं केशपाशम् उल्लास्यालङ्कृत्य । 'कपोलकुचयोः' कपोलयोः कुचयो-श्चेत्यर्थः । 'स्वयं' स्वहस्तेनेत्यर्थः । कामकार्मुकलतामौर्व्येव विपञ्ची तस्या रवैः । अत्र स्वयं भूषितायाः सीतायाः स्वोत्सङ्गोपवेशनेनावसरान्वेषिणि शम्बरद्वेषिणि धनुर्लतामास्फाल्य सन्तर्जयति सति चुम्बनालिङ्गनाद्यासक्तोऽभूदिति भावः । अत्र आद्यपादे वृत्त्यनुप्रासः । चतुर्थपादे रूपकम् ॥ २० ॥

---

पाठ. १. कस्तीरीतिलकं – मन्दरः ।

---

टिप्प. 1. °केशवेशोऽथ – अमरकोशपाठः ।

---

१. °जानिरिवानु – मातृका । २. ° दिरिचि चेचिव ' – मातृका ।

२०. दक्षिणः --

तुल्योऽनेकत्र दक्षिणः ॥

यथा --

विद्याप्रौढविलासिनीभिरनिशं कण्ठे गृहीतः स्वयं
भूदेव्या सततावलम्बितभुजो राज्यश्रिया रञ्जितः ।
कान्तैः कीर्तिवधूजनैः परिवृतः सत्कान्तिसीमन्तिनी -
रत्नैः श्लिष्टतनुर्विदेहतनयामङ्के[१] विधत्ते विभुः ॥२१॥

नौका

'हल्लकं रक्तसन्ध्यकम्' इत्यमरः (१.९.३७)। कामकार्मुकलताया मन्मथधनुर्वल्ल्या मौर्वीतुल्या या विपञ्ची वीणा तस्या रवैः गानैः करणैः। [१]क्रीडतीत्यर्थः। एतेन अस्य सीतायामेवानुरागो भोगाङ्गनापेक्षयेत्येकायत्तत्वमिति बोध्यम् ॥ २० ॥

दक्षिणनायकमाह -- तुल्य इति। अनेकत्र अनेक[२]नायिकासु तुल्यः अवैषम्यवर्तीत्यर्थः ॥

उदाहरति - विद्येति। स्वयं गृहीतः स्वयमाश्लिष्टः। सीमन्तिनीरत्नैः सीमन्तं केशवीथी। 'सीमन्तमस्त्रियां मस्तके[३]शवीथ्यामुदाहृतम्' इति शब्दार्णवे। [४]तदासामस्तीति सीमन्तिन्यः स्त्रियः तासु रत्नैः श्रेष्ठैः। 'रत्नं श्रेष्ठे मणावपि' इति विश्वः (७०. १३)। विभुः श्रीरामः। अत्र विद्येत्यादिस्त्रीलिङ्गमहिम्ना अनेक[५]नायिकाप्रतीतेः तासु च श्रीरामस्य अवैषम्यप्रतीतेश्च

---

पाठ. १. च धत्ते - मधु° क.

---

१. क्रीड इत्यर्थः - मातृका। २. °नायिकायां - मातृका। ३. °केकविद्या° - मातृका। ४. तथा सीमास्तीति सीमन्तेऽस्य - मातृका। ५. °नायिकायाः प्रतीतेः - मातृका।

२१. शठः --

नायिकामात्रविज्ञातविप्रियः शठ उच्यते ॥

यथा—

गूढं त्वया नायक गोपिता या
मृगेक्षणाऽसीन् मुकुरे [1]त्वदीये ।

---

नौका

तुल्य (त्वं) बोध्यम् । अत एव स्त्रीलिङ्गमहिम्ना विद्यादीनां प्रतीयमानलौकिक-नायिकाभेदाध्यवसायेन विद्याद्यनुरागेऽप्यस्य न शृङ्गारनायकत्वभङ्ग इति बोध्यम् ॥२१॥

शठं लक्षयति --- नायिकामात्रेति । मात्रपदेन इतरव्यवच्छेदः (बोध्यते) ॥

[१]अथ काचिन्नायिका स्वनायकदर्पणप्रतिफलिते स्वात्मन्येव नायिकान्तर-भ्रान्त्या नायकस्य शठत्वं प्रकटयन्त्युपालभत इत्युदाहरति–गूढं त्वयेति ।

---

मन्दरः

अथ दक्षिणं लक्षयति --- तुल्य इति । अनेकत्र अनेकनायिकासु तुल्यः समस्नेहानुवर्ती दक्षिणनायकः ॥

उदाहरति --- विदेति । निगदव्याख्यातोऽयं श्लोकः । अत्र विद्यादिषु प्रौढाङ्गनात्वाद्यारोपात् रूपकालङ्कारः ।

आरोपविषयस्य स्यादतिरोहितरूपिणः ।

उपरञ्जकमारोप्यमाणं तद् रूपकं मतम् (प्र. रु. ७. ९) ॥

इति लक्षणम् ॥ शठं लक्षयति -- नायिकेति ॥२१॥

---

पाठ. 1. तदीये – मन्दर ।

---

१. अत्र – मातृका ।

दृष्टा मया साऽद्य हि मत्समाना
शाठ्यं तव ज्ञात[1]मभूतपूर्वम् ॥ २२ ॥

२२. धृष्टः --

[2]व्यक्तापराधो निर्भीको धृष्ट इत्यभिधीयते ॥

---

**नौका**

मुकुरे दर्पणे या मृगेक्षणा त्वया गोपिता आसीदित्यन्वयः । एतेन [1]प्रतिफलित-स्वात्मन्येव नायिकान्तरभ्रान्तिरिति भ्रान्तिमदलङ्कारो व्यज्यते । मया दृष्टा सा *मत्समाना हीति काकुः । मत्सदृशा न भवतीत्यर्थः । [2]'हि विस्मये विषादे च' इति रत्नमाला । शाठ्यं [3]नायिकान्तरगोपनरूपगूढापकारित्वं ज्ञातं विदितम् । आसीदित्यनुकृष्यते । अत्र नायिकामात्रविदित[4]नायिका-न्तरगोपनप्रतीतेरस्य शठत्वम् । नायिका त्वधीरा मुग्धा उन्नेया ॥ २२ ॥

धृष्टं लक्षयति — व्यक्तापराध इति ॥

---

**मन्दरः**

उदाहरति — गूढमिति । अद्य हि अद्यैव । अत्र आदर्शदृष्टे स्वस्मिन्नेव नायिकान्तरभ्रान्तिरभूदिति भ्रान्तिमदलङ्कारः ॥ २२ ॥

धृष्टं लक्षयति — व्यक्तेति ॥

---

पाठ. १. °मजातपूर्वम् – ख. । २. व्यक्तापराधनिर्भीको – ख. ।

---

टिप्प. * मत्सरा नेति – मातृका ।

---

१. प्रतिफलितस्यात्मन्येव – मातृका । २. हीति – मातृका । ३. नायि-कान्तरगोपनरूपगूढोपकारित्वं – मातृका । ४. नायकान्तरं – मातृका ।

यथा —

वीरश्रियो वपुषि ते परिभोगचिह्नं
संलक्ष्यते क्षममिदं न हि संवरीतुम् ।
सर्वं मया हि विदितं चरितं त्वदीयं
तत् किं प्रतारयसि मां विनयैरलीकैः ॥२३॥

---

नौका

उदाहरति—वीरश्रिय इति । ते वपुषि [1]वीरश्रियो वीरलक्ष्मीनायिकयाः इदं सम्भोगचिह्नं संवरीतुं गोप्तुम् । 'वृञ् वरणे' (धा.पा.१२९९) । [2]तुमुनि-- 'वृतो वा' (पा.७.२.३८) इति दीर्घः । न क्षमं न समर्थम् । हीति प्रसिद्धौ । तत् तस्मात् अलीकैः असत्यैः । 'अलीकं त्वप्रियेऽनृते' इत्यमरः (३.३.१२) । विनयैः चाटुकारैः किं किमर्थं [3]प्रतारयसि । प्रतारणसाध्यं न किमपीत्यर्थः । अत्र वीरश्रिय इति स्त्रीलिङ्गमहिम्ना नायिकान्तर[4]प्रतीतितत्सम्भोग(चिह्न)-प्रदर्शनाभ्यां धृष्टत्वम् । नायिका [5]त्वियमन्यासम्भोगचिह्नैरु(पो)पेतत्वात् खण्डिता । 'अधीरा परुषैर्वाक्यैः खेदयेद् वल्लभं रुषा' इति लक्षणादधीराऽपि ॥२३॥

---

मन्दरः

उदाहरति — वीरश्रिय इति । वीरश्रियो वीरलक्ष्म्याः नायिकायाश्चेति प्रतीयते । परिभोगचिह्नं परशस्त्रप्रहारव्रणं नखक्षतादिकं च । संवरणं गोपनम् । अलीकैः असत्यैः । अत्र वीरश्रीनायिकयोरभेदाभिसन्धिः ॥२३॥

---

१. वीरस्त्रियो – मातृका । २. तुमुनेऽप्येतावेति दीर्घः – मातृका । ३ प्रतारयसे – मातृका । ४. °प्रतीतेः – मातृका । ५. त्वेयमनूसम्भोग° – मातृका ।

२३. नायकसहकारिणः --

एतेषां नायिकानुकूलने क्रमात् पीठमर्दविटचेटविदूषकाः [1]सहकारिणः ॥

२४. पीठमर्दादीनां लक्षणानि --

किञ्चिदूनः पीठमर्दः [2]कलासु कुशलो विटः ।
सन्धानकुशलश्चेटो हास्यप्रायो विदूषकः ॥

---

**नौका**

अथ शृङ्गारनायकस्य नायिकासम्बन्ध(मपेक्षमाणस्य) तदनुकूलने सहायानाह—एतेषामित्यादिना । एतेषां शृङ्गार[1]नायकानाम् ॥

क्रमेणैषां लक्षणान्यभिधत्ते — किञ्चिदित्यादिना । प्रधानेतिवृत्त[2]नायकाद् ईषन्न्यूनगुणः प्रासङ्गिकेतिवृत्तनायकः [3]'किञ्चिदून' शब्देन विवक्षितः । तदुक्तम् —

"पताकानायकस्त्वन्यः पीठमर्दो विचक्षणः ।
तस्यैवा[5]नुचरो भक्तः किञ्चिदूनश्च तद्गुणैः' (दश. २.८)

---

**मन्दरः**

एवं शृङ्गारनायकान् निरूप्य तत्सहायान् निरूपयति — एतेषामिति । नायिकानामनुकूलने, प्रणयकलहादिना व्यवधाने सति पुनः संयोजन इत्यर्थः ॥

किञ्चिदिति । प्रधानेतिवृत्तनायकादीषन्न्यूनगुणः प्रासङ्गिकेतिवृत्तनायकः 'किञ्चिदून'शब्देन विवक्षितः ॥

---

पाठ. १. सहायकारिणः – क. । २. 'एकविद्यो विटः स्मृतः' नौका ।

---

१. °नायिकानाम् – मातृका । २. नायिकावृषन्यूनगुण – मातृका । ३. किञ्चिन्न्यून–मातृका । ४. प्रधान°–मातृका । ५. °नुचरा भक्ता–मातृका ।

२५. पीठमर्दः --

[1]तत्राद्यो यथा —

श्रीराम भूप तव चापगुणस्वनात्मा
कोऽप्यद्भुतो जयति संयति पीठमर्दः ।
यः श्रोत्रभूमिगत एव नयत्यरीणां
राज्यश्रियस्तव चिराय वशंवदत्वम् ॥ २४ ॥

---

नौका

(इति) । स च सुग्रीवमकरन्दादिः । नायकोपयोगिविद्यानां (विद्यासु) एकविद्याभिज्ञो विटः, कलहंसादिः । वाक्याङ्गवेषविकारादिना हास्यकारी विदूषक इति ज्ञेयम् ॥

पीठमर्दमुदाहरति — तत्राद्य इति । तत्र तेषु मध्ये । आद्यः पीठमर्दः ॥

श्रीरामेति । चापगुणस्य धनुर्ज्यायाः सम्बन्धी यः । 'गुणस्त्वा-वृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इत्यमरः । स्वनात्मा ध्वन्यात्मकः । टङ्कार[1]स्वरूप इति यावत् । कोऽप्यनिर्वाच्यः । [2]पीठमर्दः, संयति [3]युद्धे ।

---

मन्दरः

तदुक्तम् — 'तस्यैवानुचरो भक्तः किञ्चिदूनस्तु तद्गुणैः' (दश. २.८) इति । स च सुग्रीवमकरन्दादिः । कलासु नायिकोपयोगिगीतादिषु । वाक्याङ्गवेषविकारादिना हास्यकारी विदूषकः ॥

---

पाठ. १. 'तत्र' न पठ्यते – मधु ख ।

---

१. °स्वरूपमिति – मातृका । २. पीठमर्दने – मातृका । ३. युद्धेन मदाय स्त्रियः – मातृका ।

२६. विटादयः –

[1]इतरेषां स्पष्टमुदाहरणम् ॥

अथाष्टविधाः शृङ्गारनायिका निरूप्यन्ते —

---

नौका

समुदायः, स्त्रियः संयत्' इत्यमरः (२.८.१०७)। जयति सर्वोत्कर्षेण वर्तते। तत्र हेतुं वक्ति --- य इत्यादिना। राज्यश्रियो राज्यलक्ष्मीः वशंवदत्वमधीनत्वं नयति प्रापयतीत्यर्थः, नयतिरत्र द्विकर्मकः। अत्र धनुष्टङ्कारस्य पीठमर्दता ज्ञेया ॥ २४ ॥

अथ प्रसङ्गसङ्गत्या नायिकानिरूपणं प्रतिजानीते–अथेति ॥

---

मन्दरः

पीठमर्दमुदाहरति — श्रीरामेति। कोऽपि विलक्षणः अत एवाद्भुतः। वैलक्षण्याद्भुतत्वे दर्शयति—य इति। श्रोत्रभूमिं श्रोत्रप्रदेशम्, अर्थादरीणाम् गतः। एवेत्यवधारणे। न किञ्चिदपि वक्तीति सूचितम्। लोके तावत् पीठमर्दो नायिकासमीपे सङ्घटनोचितं मधुररचनं किमपि वचनं समुपदिश्य तदा संयोजयति। अस्याचरणं त्वन्यथेति बोध्यम्। अत्र प्रकृते चापगुणस्वने आरोप्यमाणस्य पीठमर्दत्वस्य प्रकृतराज्यलक्ष्मीरूपनायिकावशंवदत्वप्रापणरूपकार्योपयोगित्वात् परिणामालङ्कारः। 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' (अलङ्काररत्नाकरे २८) इति लक्षणात् ॥ २४ ॥

विटादीनामनुदाहरणेऽप्युदाहृतप्रायत्वमित्याशयेनाह – इतरेषामिति। तल्लक्षणादेव तत्स्वरूपं सुबोधमिति भावः ॥

---

पाठ. १. इतरेषां तु – क. ख.।

२७. शृङ्गारनायिकाः --

स्वाधीनपतिका ह्येका तथा वासकसज्जिका ।
विरहोत्कण्ठिता चैव विप्रलब्धा च खण्डिता ॥

कलहान्तरिता चैव तथा प्रोषितभर्तृका ।
तथाभिसारिका चेति नायिकास्त्वष्टधा [1]स्मृताः ॥

२८. स्वाधीनपतिका —

स्वाधीनपतिका सा स्याद् या [2]पत्या नित्यलालिता ॥

---

**नौका**

तानेवाष्टप्रकारानुद्दिशति — स्वाधीनेत्यादिना ॥

अथ सम्भावितनायकसामान्यगुणोपयोगिनी नायिकेति सामान्यलक्षणं सिद्धवत्कृत्य यथोद्देशं स्वाधीनपतिकादीनां लक्षणमाह–स्वाधीनपतिकेति । अधि उपरि इनः स्वामी यस्या[1]सावधीनः आयत्तः । 'अधीनो निघ्न आयत्तः' इत्यमरः (३.१.१६)। स्वस्मिन् अधीनः स्वाधीनः। यद्वा स्वस्मिन् (अधि) अधिकृतः स्वाधीन इति वा विगृह्य 'सप्तमी शौण्डैः' (पा. २.१.४०) इति समासः। '[2]अषडक्षा°' (पा. ५.४.७) इत्यादिना अध्युत्तर[3]पदान्नित्यः

---

**मन्दरः**

अथ — 'सम्भावितनायकसामान्यगुणोपयोगिनी नायिकेति' सामान्यलक्षणं सिद्धवत्कृत्य तद्विशेषाः कतिचिल्लक्षणोदाहरणाभ्यां निरूप्यन्ते — अथेति ॥

---

पाठ. १. मताः – मधु. क। २. नित्यं पतिलालिता – क ।

---

१. यस्याः सावधीनः – मातृका। २. अतुडक्षेत्यादिना – मातृका।
३. °पदात्ख इति खः प्रत्ययः – मातृका ।

[1]दोलायामधिरोप्य मन्द[2]वलनैरान्दोलयन्नादरात्
केलीकाननमञ्जुवञ्जुललताकुञ्जेषु [3]सञ्चारयन् ।
स्वेदाम्भो घनसारसाररजसां क्षोदेन शान्तिं नयन्
रामो लालयते विदेहतनयामुत्सङ्गसंसङ्गिनीम् ।। २८ ।।

---

**नौका**

खप्रत्ययः । [1]सुरतसुखास्वादलोभेनासन्नत्वात् स्वाधीनः आयत्तः पतिः यस्याः सा तथोक्ता इत्यवयवार्थमाह स्वामी[1] ॥

उदाहरति — दोलायामिति । [2]दोलायां खेलनसाधनपर्यङ्के मन्दवलनैः ईषच्चलनैः आन्दोलयन् चालयन् । अनेन आसन्नायत्त[3]वल्लभात्वप्रतीतेरियं स्वाधीनपतिका, नायकस्त्वनुकूल इति विज्ञेयम् ॥ २९ ॥

---

**मन्दरः**

स्वाधीनपतिकां लक्षयति—स्वाधीनेति । स्वस्मिन् अधीनः सुरतसुखास्वादलोभेनायत्तः पतिः यस्याः सा तथोक्ता ॥

उदाहरति – दोलायामिति । अधिरोप्य सपरिरम्भोद्धरणेनोपवेश्य । मन्दवलनैरतिभीरुत्वादीषच्चलनैः । आन्दोलयन् धृत्वैव चालयन् । केलीकानने क्रीडोद्याने मञ्जुवञ्जुला रम्यबकुलाः तत्सम्बन्धिषु लताकुञ्जेषु । अत्र लताग्रहणमतिसान्द्रताद्योतनार्थम् । 'अथ केसरे बकुलो वञ्जुलः' इत्यमरः

---

पाठ. १. डोलाया° – नौका, मन्दर. क । २. °चलनैः – ख । ३. सञ्चालयन् क ।

---

टिप्प. 1. प्रतापरुद्रीयव्याख्याता कुमारस्वामी सोमपीथी स्वाधीनपतिकालक्षण-(१.४१) व्याख्यावसरे उक्तवानित्यर्थः ।

---

१. सु....डनु....दलाभेवासन्नत्वात् – मातृका । २. डोलायाः – मातृका ।
३. °वल्लभप्रतीते – मातृका ।

२९. वासकसज्जिका --

केलीगृहं तथाऽऽत्मानमलङ्कृत्य स्मरातुरा ।

प्रतीक्षते या दयितं सा स्याद् वासकसज्जिका ॥

तथा —

केलीसद्मनि सज्जिते स्थितवती स्वाङ्गं मुहुर्भूषितं
पश्यन्ती मुकुरे भविष्यति रते सङ्कल्पयन्ती क्रमम् ।

---

नौका

वासकसज्जिकामाह — केलीगृहमिति । [1]त [1]एव 'वास एव वासके वासवेश्मनि भोगोपकरणैः सज्जा [2]सन्नद्धा, सैव वासकसज्जिकेति शब्दार्थमाहुः । केचित्तु 'स्त्रीणां वारस्तु वासकः' इति पक्षमाश्रित्य वासके वारदिवसे सज्जयति सज्जं करोति हर्षेण केलीगृहादिकमिति वासकसज्जिकाशब्दं निराहुः ॥

---

मन्दरः

(२.४.६९) । लालयते क्रीडति । अत्र स्वभावोक्तिरर्थालङ्कारः; वृत्त्यनुप्रास-च्छेकानुप्रासौ शब्दालङ्कारौ चेति तेषां संसृष्टिः ॥ २९ ॥

अथ वासकसज्जिकां लक्षयति -- केलीगृहमिति । वासके वासवेश्मनि सम्भोगोपकरणैः सज्जा सन्नद्धा सैव वासकसज्जिका । 'स्त्रीणां वारस्तु वासकः' इति पक्षे वासके वारदिवसे सज्जयति सज्जीकरोति हर्षेण केलीगृहादिकमिति वासकसज्जिका ॥

---

टिप्प. 1. प्रतापरुद्रीयव्याख्याकृतः कुमारस्वामिसोमपीथिन एवेत्यर्थः । 2. साहित्य-दर्पणकारादय इत्यर्थः ।

---

१. अत एव – मातृका । २. सन्ना – मातृका ।

पृच्छन्ती दिवसावसानसमयस्यासन्नभावं मुहु -
र्बाला मे भवतः प्रतीक्षणपरा मा राम जाड्यं कृथाः ॥२६॥

३०. विरहोत्कण्ठिता --

विरहेण कृतोत्कण्ठा विरहोत्कण्ठिता मता ॥

---

नौका

तत्र प्रथमपक्षावलम्बनेनोदाहरति – केलीसद्मनी ति । सज्जिते सम्भोगोपकरणैः सन्नद्धे । अलङ्कृत इति यावत् । [1]हे राम ! जाड्यम् आलस्यं मा कृथाः, मा कुरु । 'डुकृञ् करणे' (धा. पा. १४७३) 'न माङ्योगे' (पा.६.४.७४) इति निषेधाद् अडागमप्रतिषेधः । अत्र केलीसद्मनीत्यादिना गृहालङ्करणमात्मालङ्करणं च दर्शितम् । सङ्कल्पयन्तीत्यनेन स्मरा[2]तुरत्वम् । स्वाङ्गविभूषितत्वादिभिरियं वासकसज्जिका । अत एवोदात्ताऽपि । 'उदात्ता केश[3]वासोऽङ्गमाल्य[4]भूषासु सादरा । शय्याभवनसंस्कार[5]परिबर्हसमेधिना'[1] इति लक्षणात् ॥ २६ ॥

विरहोत्कण्ठितामाह –– विरहेणेति । विरहेण ' चिरयत्यव्यलीके तु' (द. रू. २.२९) इति [6]धनिकोक्तरीत्या –– अनपराधप्रियवियोगजन्यवियोगेन ॥

---

मन्दरः

उदाहरति ––– केलीसद्मनीति । श्रीरामं प्रति सीतासखीवचनम् । सज्जिते सम्भोगोपकरणैः सज्जीकृते । मुहुः पश्यन्ती । क्रमं चातुर्यविशेषं सङ्कल्पयन्ती समालोचयन्ती । पृच्छन्ती, सखीरिति शेषः । 'मे बाला' इति समुदाचारोक्तिः । जाड्यम् आलस्यम् ॥२६॥

---

टिप्प. 1. पद्यमिदं रत्नापणे (प्र. रु. १.४४) समुद्धृतम् ॥

---

१. पराम – मातृका । २. °तुरत्वस्याङ्ग° – मातृका । ३. वासाङ्ग° – मातृका । ४. °भूषानुसाधना – मातृका । ५. °परिबर्हासमाहिता – मातृका । ६. धनिकोक्ति° – मातृका ।

यथा —

हस्तन्यस्तमुखाम्बुजाऽनवरतं द्वारे विधत्ते स्थितिं
त्वन्मार्गे चलितं सखीजनमपि त्वामेव सा मन्यते ।
एकां प्रेषितवत्यपि प्रियसखीमन्यां पुनः प्रेषय -
त्याहारादिपराङ्मुखी रघुपते ! त्वय्येव सा वर्तते ॥२७॥

यथा वा —

कन्दर्पो विरहानले मम [1]सखि ! क्षिप्त्वा चकोराङ्गना -
चञ्चूखण्डितचारुचन्द्रकिरणश्रीखण्डकाण्ड[2]च्छटाः ।

---

नौका

एनामुदाहरति — हस्तन्यस्तेति । अनवरतं सर्वदा । अत्र हस्तन्यस्ते-त्यादिभिः अस्या विरहोत्कण्ठितत्वं सूचितम् ॥२७॥

उदाहरणान्तरमाह — कन्दर्प इति । मम [1]मत्सम्बन्धिनि विरहाग्नौ । [2]चञ्चूः त्रौटिः । 'स्त्री त्रोटौ चञ्चुरेरण्डे ना' इति रत्नमाला (प. २८९) ।

---

मन्दरः

अथ विरहोत्कण्ठितां लक्षयति -- विरहेणेति । कृता उत्कण्ठा — ' सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते । तत्प्राप्तीच्छां ससङ्कल्पां तामुत्कण्ठां विदुर्बुधाः ' इत्युक्तलक्षणेच्छाविशेषो यस्या सा तथोक्ता ॥

उदाहरति---हस्तेति । सा सीता त्वय्येव वर्तते, तद्वर्तनं त्वन्मात्रानुबद्धमिति भावः । अत्र स्वभावोक्तिरलङ्कारः ॥२७॥

---

पाठ. १. सखीं - मधु क. ख. । २. °च्छदाम् - मधु क. ख.

---

१. मत्सम्बन्धिनी - मातृका । २. चञ्चोः त्रोटि । स्त्री स्त्री त्रो ना च चुरण्डेनेति रत्नमाला - मातृका ।

चञ्चन्नूतनचूतरेणुविकिरैश्चैत्रानिलैः साम्प्रतं
हन्तोद्दीपयति प्रियो रघुपतिर्नायाति का मे गतिः ॥२८॥

३१. विप्रलब्धा —

प्रियेण वञ्चिता ज्ञेया विप्रलब्धा स्मरातुरा ॥

---

नौका

काण्ड[1]च्छटाः काण्डसमूहान्। चैत्रानिलैः चैत्रमासवायुभिः। वसन्तमारुतैरिति यावत्। उद्दीपयति प्रज्वालयति। हन्तेति खेदे। 'हन्त हर्षे विषादे च' [2]इति रत्नमाला (प. २६७३)। लोके हि काष्ठानि वह्नौ निक्षिप्य मुखादिमारुतैः प्रज्वालयन्ति तद्वदिति भावः। 'नायाति का मे गतिः' इत्यनेन विरहवेदनासहिष्णुताप्रतीतेरियं विरहोत्कण्ठिता ॥२८॥

[3]विप्रलब्धां लक्षयति — प्रियेणेति। 'क्वचित्सम्भोगसङ्केतस्थलमुपे-(ते)' त्यादिः[1] ॥

---

मन्दरः

रागे त्वलब्धविषये वेदना महती च या। संशोषणी च गात्राणां तामुत्कण्ठां विदुर्बुधाः। इति पक्षमनुसृत्य उदाहरणान्तरमाह — कन्दर्प इति। 'हे मम सखि' इत्यार्तिवशात् सम्बोधनम्। त्वं वा सत्वरं गत्वा समानयेत्याकूतम्। चैत्रानिलैर्मलयमारुतैः। उद्दीपयति प्रज्वालयति। इतः परं किं करिष्यति वा (न जाने) इति भावः। हन्तेति खेदे। 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः (३. ३. २४४)। 'का गतिः' इति वेदनातिशयोक्तिः। अत्र विरहे अनलत्वारोपस्य चन्द्रकिरणेषु चन्दनेन्धनत्वारोपं प्रति हेतुत्वात् परम्परितरूपकालङ्कारः ॥२८॥

---

1. 'प्रियेणे'ति कारिकायाः स्पष्टप्रतिपत्तये शेषं पूरयति – क्वचिदिति। तथा च – क्वचित्सम्भोगसङ्केतस्थलमुपेता सती (तदनागमनात्) प्रियेण वञ्चितेति वाक्यार्थः फलति।

---

१. °चटाः – मातृका। २. इत्यमरः – मातृका। ३. विप्रलब्धायथा – मातृका।

यथा —

> श्वसितमृदितमेतत् सद्म सङ्केतितं मे
> शिशिरयति हि चन्द्रो न त्वहो रामचन्द्रः ।
> अजनि रजनिकालः साम्प्रतं यातयामः
> स्वभवनमयि ! सख्यः ! सत्वरं यात यामः ॥२९॥

---

**नौका**

उदाहरति — श्वसितेति । श्वसितेन विरहजन्यफूत्कारमारुतेन मृदितं [1]मृष्टं सङ्केतितं सङ्केतवत् कलितम् । तारकादित्वात् इतच् । सद्म गृहं चन्द्रः शिशिरयति शिशिर करोति । 'शिशिर'शब्दात् — 'तत्करोति' (ग.सू. २०४) इति णिजन्तात् लट् । ननु रामचन्द्रोऽपि समेत्य शिशिरयत्येव (किं) [2]प्रतिक्षिप्येत्याशङ्क्य — रजनी[3]कालस्तु प्रभातप्राय (एव त) दागमनप्रत्याशा नास्तीत्याशयेनाह — [4]अजनीति । [5]याताः गताः यामाः [6]यस्यासौ यातयामः, प्रभातप्राय इत्यर्थः । ततः किमत आह — स्वभवनमिति । 'अयि' इति सम्बोधने । हे सख्यो यूयं यात [7]गच्छत वयं यामः गच्छाम इत्यर्थः । अत्र सङ्केतं निवेद्य नायकस्या(ना)गमनेन वञ्चिता सती कामार्ते(र्ती)यं विप्रलब्धा ॥२९॥

---

**मन्दरः**

अत्र विप्रलब्धां लक्षयति — प्रियेणेति । वञ्चिता अनागमनेन प्रतारिता ॥

उदाहरति — श्वसितेति । श्वसितैः वेदनावशात् सन्ततप्रसरदुष्णनिश्वासैः मृदित परिभ्रमणात् परितस्तापितमित्यर्थः । चन्द्रः शिशिरयति हि जालमार्गप्रविष्टैः करैः शीतलयति खलु । विभावर्याः प्रभातप्रायत्वादिति भावः ।

---

१. माप्तं – मातृका । २. प्रतिपक्षस्ये° – मातृका । ३. कालस्वभात° – मातृका । ४. आजनीति – मातृका । ५. यातां – मातृका । ६. यस्या ना – मातृका । ७. गच्छथ – मातृका ।

'अहो' इति खेदे ॥२९-१॥

३२. खण्डिता —

क्वचिन्नीतक्षपे कान्ते खण्डितेर्ष्याकषायिता ॥

तथा ममैव व्यायोगे (नरकासुर. प्रस्ता. श्लो. ७)

नीतक्षपः क्वचिदधःकृतजीवनायाः
रागान्वितस्तुहिनबाष्पमुचो नलिन्याः ।

---

नौका

'अहो इति खेदे'। 'अहो उताहो इत्येते विचारप्रश्नयोरपि' (ना. रत्न. २६२२) इति कोशादिति भावः ॥२९-१॥

खण्डितामाह — क्वचिदिति । अन्यत्र क्षपां रात्रिं [1]यापयित्वा प्रिये आगते [2]सति ईर्ष्यया कषायिता कलुषीकृता, खण्डितेत्यर्थः । 'कषायिता' इत्यत्र 'तत्करोति' (ग.सू. २०४) इति णिजन्तात् 'कषाय'शब्दात् 'क्त'प्रत्यये 'निष्ठायां [3]सेटि' (पा. ६.४.५२) इति णिलोपः ॥

---

मन्वरः

रामचन्द्रस्तु न शिशिरयति । आगमनानन्देनेति भावः ॥२९॥

'अहो' इति विषादे । 'अहो धिगर्थ आश्चर्ये विषादकरुणार्थयोः' इति रत्नमाला (प. २६२०) । याता गता यामा यस्य स तथोक्तः । सत्वरं यात गच्छत, स्वभवनं प्रति यामो गच्छामः । 'याता' इत्यनेन — अद्याप्यागमनाभिलाषः किंचिदस्तीति सूच्यते । अत्रानुप्रासयमकयोः संसृष्टिः ॥२९-१॥

अथ खण्डितां लक्षयति — क्वचिदिति । क्वचिन्नायिकान्तरसन्निधौ ॥

---

१. यापइत्वा – मातृका । २. सती – मातृका । ३. सेदीति – मातृका ।

लीनश्रियो विगलितालिगिरो विवस्वान्
पुष्णाति पादपतनेन पुनः प्रहर्षम् ॥३०॥

---

नौका

स्वकृतप्रबन्धान्तरश्लोकमुदाहरति — नीतक्षप इति। क्वचित् स्थलान्तरे नायिकान्तरसन्निधान इति च नीतक्षपः ग(मि)तरात्रिः। रागान्वितः रक्तवर्णोऽनुरक्तश्च। विवस्वान् सूर्यः। अधःकृतजीवनायाः अधःकृतम् अधोदेशकृतं जीवनं जलं यया सा तथोक्ता। 'सलिलेऽपि च जीवनम्' इति रत्नमाला। अन्यत्र अधः कृतं तुच्छीकृतं जीवनं प्राणधारणं यया सा तस्याः। तुहिनमेव बाष्पो नेत्रसलिलम्। 'बाष्पो नेत्रजलोष्मणोः' [2]इति रत्नमाला (प. ६७९)। तं मुञ्चतीति तस्याः। 'मुच्लृ मोक्षणे' (धा. पा. १४३१) क्विप्। विगलिता(लि)गिरः उपरतभृङ्गध्वनेः। अन्यत्र उपरतसखीवचनायाः। एवंविधाया नलिन्याः पादपतनेन किरणप्रसारेण पादयोः पतनेन च हर्षं पुष्णाति वर्धयति। यथा कश्चित् कामी[3] नायिकान्तरासक्त्या अन्यत्र रात्रिं यापयित्वा, कस्याश्चिन्नायिकायाः समीपं गत्वा सम्भोगचिह्नैः कुपितायाः पादयोः पतति, तद्वदिति भावः। 'नीतक्षपः' 'अधःकृता' इत्यादिनायकनायिकाविशेषणपर्यालोचनया नलिन्याः [4]खण्डितात्वं (प्रतीयते), नायकस्तु [5]धृष्ट इति ज्ञेयम्। अत्र विशेषणसाम्यादप्रस्तुतनायिकाकामुकवृत्तान्तप्रतीतेः समासोक्तिरलङ्कारः॥ ३०॥

---

मन्दरः

उदाहरति—नीतक्षप इति। विवस्वान् सूर्यः धृष्टनायकश्च। क्वचित् मेरोरुत्तरभागे, नायिकान्तरसन्निधौ च। नीतक्षपो यापितरात्रिः, अत एव—अधःकृतं जीवनं जलं यस्याः तस्याः। अन्यत्र अधःकृतं व्यर्थीकृतं जीवनं प्राणधारणं यस्याः तस्याः। रागान्वित आरुण्ययुक्तः, अन्यत्रानुरागयुवतः। तुहिनं हिममेव बाष्पं मुञ्चतीति तस्याः। अन्यत्र तुहिनबिन्दुसदृशाश्रुकणान्

---

१. नायकान्तर° – मातृका। २. इत्यमरः – मातृका। ३. नायिकां तदासक्त्या – मातृका। ४. खण्डितं – मातृका। ५. दृष्टे – मातृका।

३३. कलहान्तरिता —

**निरस्य दयितं कोपात् पश्चात्तापमुपागता ।**
**कलहान्तरिता [1]नाम [2]कलाविद्भिरुदाहृता ॥**

---

**नौका**

कलहान्तरितामाह—निरस्येति । दयितम् —

'सत्यरागार्जवरतिरुपकुर्वन् प्रियं वदन् ।
भजते [1]यः स्वयं प्रीतः प्रियः स भवति स्त्रियाः[1] ॥

इत्युक्तलक्षणं प्रियमित्यर्थः । कलहे सति सुखेनान्तरिता कलहान्तरिता ॥

---

**मन्दरः**

मुञ्चतीति तस्याः । किञ्च लीना पद्मसङ्कोचात् तिरोहिता श्रीः यस्यां तस्याः । अन्यत्र विलीनशोभायाः । अत एव विगलिताः अलिगिरो यस्याः तस्याः। अन्यत्रविगलिता आलिगिरः सखीसंलापा यस्याः तस्याः । नलिन्याः पद्मिन्या नायिकायाश्च पादपतनेन किरणप्रसारेण पादयोः पतनेन च पुनः प्रहर्षं विकासम् आनन्दं च पुष्णाति । अत्र प्रस्तुतविशेषणसाम्यादप्रस्तुतनायकवृत्तान्तप्रतीतेः समासोक्तिरलङ्कारः ॥ ३० ॥

अथ कलहान्तरितां लक्षयति—निरस्येति । दयितं प्रणामादिना प्रसादनपरं प्रियम् । कलहे सति सुखेनान्तरिता ॥

---

पाठ. १. सा स्यात् – मधु । २. कलादिभिः – मधु कलावद्भिः – ख. ।

---

टिप्प. 1. पद्यमिदं रत्नापणे समुद्धृतं कुत्रत्यमिति तु न ज्ञायते ।

---

१. यस्य यं – मातृका ।

यथा —

> प्राणाः पञ्च विरिञ्चिना मम कृता बाणाश्च तन्मारणाः
> पञ्चैवात्मभुवस्तथापि न भयं तेभ्यो [1]ममाशङ्कितम् ।
> षष्ठं प्राणमयं न राघवमयं यत् प्राग् विना संस्थिता
> कोपादद्य विधूय तं स्मरशरग्राहैर्न [2]गृह्ये कथम् ॥ ३१ ॥

---

नौका

उदाहरति — प्राणाः पञ्चेति । विरिञ्चिना ब्रह्मणा । 'विरिञ्चिः कमलासनः' इत्यमरः (१.१.१७) । तन्मारणाः तेषां प्राणानां नाशकाः । आत्मनो देहात् भवतीति आत्मभुवो मदनस्य । 'मकरध्वज आत्मभूः' इत्यमरः (१.१.२६) । तेभ्यो मन्मथबाणेभ्यः । भयाभावे हेतुमाह — षष्ठमिति । यद् यस्मात् राघवमयं [1]राघवस्वरूपम् । स्वरूपार्थे मयट् । षष्ठं प्राणं[2]षष्ठप्राणसमं रामं विना [3]प्राङ् न संस्थिता । प्राणमित्यत्र 'पृथग्विना-' (पा. २.३.३२) इत्यादिना द्वितीया । [4]अद्य इदानीं तु रामं (विधूय) स्मरशरग्राहैः मन्मथबाणमकरैः कथं केन हेतुना [5]न गृह्ये, गृह्य एवेत्यर्थः । ग्रहेः कर्मणि लट्, यक्, 'ग्रहिज्या—' (पा. ६.१.१६) इति सम्प्रसारणम् । 'न गृह्ये कथम्' इत्यनेन तापप्रतीतेरियं कलहान्तरिता ॥ ३१ ॥

---

मन्दरः

उदाहरति — प्राणाः इति । तेषां प्राणानां मारणाः उपहर्तारः । यद् यस्मात् प्राक् राघवमयं षष्ठं प्राणं विना न संस्थिता, तस्मात् तेभ्यो भयं नाशङ्कितम् । पञ्चबाणस्य पञ्चभिर्बाणैः पञ्चानां प्राणानामपहरणेऽपि राघवरूपप्राणसन्निधानमहिम्ना न भीतिरभूदिति भावः । कोपात् तं विधूय अद्य स्मरशरा

---

पाठ. १. मया – मधु । २. गृह्यै – मधु ।

---

१. राघवस्य रूपं – मातृका । २. षष्ठं प्राण° – मातृका । ३. प्राज्ञ सं° – मातृका । ४. आद्ये – मातृका । ५. 'स गृह्यतेत्यर्थः' इत्येव – मातृका ।

३४. प्रोषितभर्तृका —

देशान्तरगते कान्ते खिन्ना प्रोषितभर्तृका ॥

यथा —

रामे गच्छत्यसुरविजयं कर्तुकामे वनान्तं
भूनन्दिन्या दिनशशिकलापाण्डुरः कान्तिपूरः ।

---

नौका

प्रोषितभर्तृकामाह – देशान्तरेति । कान्त इति । 'कथाभिः कमनीयाभिः काम्यैर्भोगैश्च सर्वदा । उपचारैश्च रमयेद् यः स कान्त इतीरितः[1] (प्र.रु. १.९२ रत्नापणटीका) इत्युक्तलक्षण (इत्यर्थः) ॥

उदाहरति — राम इति । कर्तुं कामो यस्य तस्मिन् । 'तुं काममनसोरपि' इति मकारलोपः । [1]भूनन्दिन्याः कान्तिपूरः कान्तिप्रवाहः । कान्तिमण्डल इति यावत् । भसितपटली भस्म[2]समूहः सैव भूषणं तस्या आटोपः

---

मन्दरः

एव ग्राहास्तैः कथं न गृह्ये ? गृहीता कथं न भवेयम् ? तदधीना भविष्यामीति भावः । अत्र राघवे आरोप्यमाणस्य प्राणत्वस्य भयाभावोपयोगित्वात् परिणामालङ्कारः । स्मरशरग्राहैरिति रूपकमिति तयोः संसृष्टिः ॥ ३१ ॥

अथ प्रोषितभर्तृकां लक्षयति – देशान्तरेति । कान्ते – '[1]कथाभिः कमनीयाभिः काम्यैर्भोगैश्च सर्वदा । उपचारैश्च रमयेद् यः स कान्त इतीरितः' (प्र.रु. १.९२ र.टी.) ॥ इत्युक्तलक्षण इत्यर्थः ॥

---

टिप्प. पद्यमिदं 'रत्नापणे' नायकप्रकरणे समुद्धतम् ।

---

१. भूनन्दनायाः – मातृका । २. °समूहैः – मातृका ।

कन्दर्पाग्नेर्दधति वपुषि स्पष्टमङ्गारभङ्गी-
मङ्गीचक्रे भसितपटली[1]रूषणाटोपमुद्राम् ॥ ३२ ॥

[2]कन्दर्पाग्नेरिति पञ्चमी ।　[3]अङ्गुराः खरादयः ॥ ३२-१॥

३५. अभिसारिका —

अनुरक्ता स्वयं [4]याति कान्तं या साऽभिसारिका ॥

---

नौका

आर्भाटः तेन मुद्रां [1]चिह्नम् । मुद्रा व्याजलाञ्छने इत्यमरः ? भसित-रूपतामिति यावत् । अङ्गीचक्रे [2]अङ्गीचकारेत्यर्थः । कस्मिन् सतीत्या-काङ्क्षायामाह — (वपुषि) सापत्रपे [3]शरीरे कन्दर्पाग्नेरङ्गारभङ्गीम्[4] अङ्गाररीतिं [5]दधति,दधाने सतीत्यर्थः । श्रीरामविरहेण सीतादेहे पाण्डुता जातेति भावः । विरहपाण्डिमदर्शनादिना अत्र [6]सेयं प्रोषितभर्तृका ॥ ३२ ॥

अभिसारिकामाह—अनुरक्तेति । कान्तं [7]पूर्वोक्तरूपम् । अत्राभिसरणं द्विविधम्---कान्तकर्मकं कान्तकर्तृकं चेति । अत एवोक्तं च—'कामार्ताऽभि-

---

मन्दरः

उदाहरति — राम इति । गच्छति सति, न तु गते । कन्दर्पाग्नेर्म-दनानिलात् । अङ्गारभङ्गीं दधति दधाने भसितपटल्या भस्मपुञ्जस्य रूषणाटोप आच्छादनातिशयः तस्य मुद्रां चिह्नम् ॥ ३२ ॥

---

पाठ. १. °भूषणाटोप° – मधु ख. नौका । २. वाक्यमिदं न पठ्यते – मधु क. ख. । ३. वाक्यमिदं न पठ्यते – मधु । ४. कान्तं, याति या – मन्दर. ख. ।

---

१. चिह्नां – मातृका । २. अङ्गीचकारेति अयमर्थः – मातृका । ३. करीरे – मातृका । ४. °भङ्गीः – मातृका । ५. विदधति – मातृका । ६. चेयं –मातृका । ७. पूर्वोक्तस्य रूपं – मातृका ।

यथा —

रावणावरजा तत्र राघवं मदनातुरा ।
[1]प्रतिपेदे निदाघार्ता व्यालीव मलयद्रुमम्[2] ॥ ३३ ॥
(रघु १२.३२)

यथा वा —
[3]घोटीतीक्ष्णखुरक्षतक्षितिरजःस्फारान्धकारावृते
संयद्रात्रिमुखे कृपाणलतिकादूतीकृतालम्बना ।

---

नौका

सरेत् कान्तं[1] सारयेत् वाऽभिसारिका' (द. रू. २.२७)। [2]सारयेदिति। दूतीमुखेनेति शेषः। एतद्ग्रन्थकर्तुस्तु कान्तकर्मकाभिसारणमेवाभिप्रेतम्। स्वयं यातीत्युक्तत्वादिति बोध्यम् ॥

ग्रन्थान्तरश्लोकमुदाहरति— रावणेति। रावणस्यावरजा स्वसा शूर्पणखा व्यालीव सर्पाङ्गनेव ॥ ३३ ॥

---

मन्दरः

अभिसारिकां लक्षयति— अनुरक्तेति। 'स्मरार्ताऽभिसरेत् कान्तं सारयेद् वाऽभिसारिका' (द.रू. २.२७) इति द्विविधमभिसरणम्। सारयेदिति। दूत्यादिमुखेनेति शेषः ॥

तत्राद्यपक्षावलम्बनेनोदाहरति— रावणेति। रावणस्यावरजा स्वसा। अत्रोपमालङ्कारः ॥ ३३ ॥

---

पाठ. १. अभिपेदे – ख.　२. पद्यमेतन्न पठ्यते – क.।　३. घोटाघोर° – मधु. क.

---

१. सारयेद् या – मातृका।　२. सारणादिति – मातृका।

शुण्डालद्युतिडम्बराम्बरधरा शूरैकभोगोन्मुखी
शत्रुश्रीरभिसारिका रघुपतेरङ्गं [1]समालिङ्गति ॥३४॥

---

**नौका**

स्वयमुदाहरति — घोटीति। कृपाणलतिका खड्गलता सैव दूती तया [1]कृतालम्बना सती शुण्डालद्युतिडम्बराम्बरधरा शुण्डाः [2]करिकराः ता एषां सन्तीति शुण्डालाः गजाः। 'प्राणिस्थादातो लजन्यतरस्याम्' (पा.५.२.९६) इति लच्। 'शुण्डा [3]करिकरे मध्ये नलिन्यां वारयोषिति' इति रत्नमाला (पं. ३८८)। तेषां द्युतिः कान्तिः। डम्बं [4]कापट्यं राति गृह्णातीति डम्बरं कपटमिति यावत्। शुण्डालद्युतिरिति डम्बरं कपटं यस्य तत् शुण्डालद्युति-डम्बरं तच्च तदम्बरं अवगुण्ठनपटः तस्य, धरतीति धरा। पचाद्यच्। गज-कान्तिव्याजनीलावगुण्ठनपटेत्यर्थः। यथा हि अन्धकारावृते प्रदोषे दूती-मालम्ब्य नीला[5]वगुण्ठनपटावृता कामिनी [6]कान्तमभिसरति तद्वत्। शत्रुश्री-रित्युक्त्या शत्रुश्रियोऽभिसारिकात्वं [7]स्पष्टमेव। अत्र सावयवरूपकालङ्कारः। शत्रुश्रियामभिसारिकात्वं निरूप्य तदुचितावयव[8]रूपणादिति ॥३४॥

---

**मन्दरः**

उदाहरणान्तरमाह — घोटीति। शुण्डालानां द्युतिडम्बरः कान्त्याडम्बर एव अम्बरम् अवगुण्ठनपटं धरतीति तथोक्ता। शत्रुश्रीरेव अभिसारिका। अत्र रूपकालङ्कारः ॥३४॥

---

पाठ.　१. समालिङ्गते – क.।

---

१. वृता अवलम्बना – मातृका। २. करिवराः – मातृका। ३. करि-कटे – मातृका। ४. कपटं – मातृका। ५. °वकुण्ठन° – मातृका। ६. कान्ति-मभिसरतीति – मातृका। ७. नुष्टमेव – मातृका। ८. रूपणेति – मातृका।

निरुक्तनायिकानां वैविध्यम् —

[1]एताश्च मुग्धामध्याप्रगल्भाभेदेन त्रिविधा भवन्ति । [2]तासां स्वरूपं रसतरङ्गे [3]निरूपयिष्यामः । ताः पुनः पद्मिन्यादिभेदेन [4]चतुर्विधाः । [5]तासां लक्षणं कामशास्त्रे प्रसिद्धमिति नेह प्रपञ्च्यते ॥३४-१॥

---

नौका

इत्थं स्वाधीनपतिकाद्यवस्थाष्टकमुक्त्वा तदाश्रयीभूतानामवान्तरभेदेन बहुविधानामपि नायिकानां प्रथमं सङ्क्षेपेण त्रैविध्यमाह — एताश्चेति । ननु मुग्धादिभेदेन नायिकात्रैविध्यकथनमयुक्तम् । पद्मिनी, चित्रिणी, शङ्खिनी, हस्तिनी, चेति प्रकारान्तरेण चातुर्विध्यश्रवणादित्याशङ्क्य पद्मिन्यादीनां जातिवाचित्वं, न तु मुग्धादिवदवस्थावाचित्वं, पद्मिन्यादिजातीनामेव मुग्धा-(त्वा) द्यवस्थावत्त्वेन त्रैविध्यम्, पद्मिन्यादीनां लक्षणं तु कामतन्त्रसिद्ध (मिति) तत्रैव द्रष्टव्यम्, विस्तरभयान्नेहोच्यत इत्याशयेनाह — ताः पुनरिति[1] । आदिना चित्रिण्यादिसङ्ग्रहः । अत्रायं प्राचीनकृतो नायिकासङ्ग्रहः — '[1]स्वाऽन्या साधारणा [2]च स्वा मुग्धा मध्या प्रगल्भिका । आद्यैकधा त्रिधा[3]ऽन्ये द्वे धीराधीरोभयात्मना । ज्येष्ठाकनिष्ठाभेदेन ते एव द्विविधे पुनः । अन्या कन्या परोढा च वेश्या त्वेकेति [4]षोडश । [5]स्वाधीनपतिकाद्यष्टावस्थाभिस्ताः

---

मन्दरः

एवं नायिकाः सामान्यतोऽष्टविधा निरूप्य तासामेव प्रत्येकं त्रैविध्येन चतुर्विंशतिसङ्ख्या भवतीत्याह — एताश्चेति । मुग्धा स्वाधीनपतिका मध्या

---

पाठ. १. ताश्च – मधु । २. तासां च – ख. । ३. वक्ष्यामः – सन्दर ।
४. बहुधा भवन्ति – मधु । ५. आसां – मधु ।

---

१. °रित्यादिना । चित्रिण्या – मातृका । २. चान्या – मातृका । ३. न्ये च – मातृका । ४. केचन – मातृका । ५. वशा स्वाधीनपतिकात्वाष्टा-भिस्ता – मातृका ।

अथेदानीं[1]मुक्तगुणविशिष्टस्य नायकस्य कथा[2]शरीरनिर्वर्तकं काव्यं लिलक्षयिषुरादौ तत्सामग्रीं दर्शयति —

---

नौका

समन्विताः। प्रत्येकमष्ठधा मुख्या मध्या हीनेति तास्त्रिधा। इत्येवं नायिकावस्थाः [1]समुद्राष्टाग्नि(३८४)सम्मिताः। विरहोत्कण्ठिता चैव विप्रलब्धाऽभिसारिका। इत्यवस्थात्रयं प्राहुः केचित् कन्यापरोढयोः। [2]चतुः-पञ्चाशदधिकत्रिशती तु तदा भवेत्'। (प्र.रु.र.टी. १.६०) (इति) ॥३९॥

तदेवं प्रासङ्गिकं नायिकानायकस्वरूपं निरूप्य —'लक्षणीयस्य काव्यस्योत्पत्तिरेव न सम्भवति कारणाभावात्'दित्याशङ्कावारकं तत्कारणप्रतिपादकमुत्तर-श्लोकमवतारयति — अथेदानीमिति। उक्तगुणा महाकुलीनत्वादयः। नायक-स्वरूपं प्रागुक्तमेव। [3]तस्य कथैव शरीरं, तन्निर्वर्तकं तन्निष्पादकम्। काव्य-मिति। कवयति वर्णयतीति कविः कवयिता। '[4]कवृ वर्णने' इति धातोरौणादिक इकारप्रत्ययः। तस्य कर्म काव्यम्। ब्राह्मणादित्वात् ष्यञ्। तथा(च) रसादिवर्णनात्मकसन्दर्भविशेषः काव्यमित्यर्थः। तदुक्तं काव्य-

---

मन्दरः

स्वाधीनपतिका प्रौढा स्वाधीनपतिकेत्येवंप्रकारेणावस्थात्रययुक्ताश्चतुर्विंशतिसङ्ख्याका भवन्तीति भावः। ताः पुनरिति। ताः पुनः स्वाधीनपतिकाद्यष्टविधनायिका एव। पद्मिन्यादीति। पद्मिन्यादयो जातिभेदाः, नावस्थाभेदा इति भावः। तासामिति। नेह प्रपञ्च्यत इति। तत्स्वरूपस्य बहु वक्तव्यत्वाद् अन्यत्रा-न्यैरुक्तत्वाच्च नोच्यत इत्यर्थः ॥३९॥

---

पाठ १. °मुक्तलक्षणविशिष्टस्य – क. ख.। २. °शरीरवर्णनात्मकं – मधु।

---

१. 'समुद्राग्नि' इत्येव – मातृका। २. 'चतुः' न पठ्यते – मातृका। ३. वक्तृ(क)थैव – मातृका। ४. कव वर्णने – मातृका।

३६. काव्यसामग्री —

बीजं हि तस्याः कवितालतायाः
प्राञ्चो वदन्ति प्रतिभाविशेषम् ।
सत्काव्यशास्त्राद्यवबोधनादि
जलावसेकादिकमीरयन्ति[1] ॥३८॥

*प्राञ्च इति । 'नाञ्चेः पूजायाम्' (पा. ६.४.३०) इत्युपधा'न'कारस्य लोपप्रतिषेधः* । प्रतिभेति । 'आतश्चोपसर्गे'

---

नौका

प्रकाशे (१.२) — 'काव्यं लोकोत्तर[1]वर्णनात्मकं कविकर्म' इति । तेन कविकृतपरदारगमनादिकर्मणोऽपि काव्यत्वमिति (निरस्तमिति) बोध्यम् । लिलक्षयिषुः लक्षयितुमिच्छुः । लक्षयतेः सन्नन्तादुप्रत्ययः ॥

(बीजमिति) ॥३९॥

---

मन्दरः

एवं नायकस्वरूपं निरूप्य काव्यस्वरूपनिरूपणं चिकीर्षुः सम्प्रति तदुत्पत्तिहेतुं प्रतिपादयति — अथेति । उत्कैर्गुणैर्महाकुलीनत्वादिभिर्विशिष्टस्य । कथैव शरीरं तस्य निर्वर्तकं निष्पादकम् ॥

बीजमिति । स्वयं व्याकृतम् ॥३९॥

---

पाठ. १अवशिष्टो द्वितीयः तृतीयचतुर्थपञ्चमाश्च नोपलभ्यन्ते – क. । ** एतच्चिह्नान्तर्गतो ग्रन्थः न पठ्यते – मधु ।

---

टिप्प. 1. °वर्णनानिपुणकविकर्म – काव्यप्रकाशपाठः

(पा. ३.३.१०६) [1]इत्यङ्। 'अकर्तरि च कारके संज्ञायाम्' (पा. ३.३.१९) इति करणार्थता। [2]प्रतिभान्त्यनयेति प्रतिभा—

'स्मृति[3]र्व्यतीतविषया मतिरागामिगोचरा।
बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकाल्यगोचरा॥

"प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः॥"

(काव्यकौतुके)

---

नौका

श्लोकं स्वयमेव व्याचष्टे — 'प्राञ्च' इत्यादिना। [1]प्रकर्षेण अञ्च्यन्ते पूज्यन्त इत्यभिप्रायेणाह —— नाञ्चेरिति। प्रतिभान्तीति। स्फुरन्तीत्यर्थः। शब्दार्थगुणादय इति शेषः। ननु स्मृतिबुद्ध्याद्यपरपर्यायप्रतिभायाः सर्वसाधारण्यात् सर्वेषामपि कवितोदयः स्यादित्याशङ्क्य स्मृत्यादिविलक्षणा प्रतिभेतिप्रतिपादकं प्राचीनश्लोकं वदन् प्रतिभाशब्दार्थमाह —— स्मृतिर्व्यतीतेत्यादिना। प्राचीनजननं प्राग्जन्म। 'शक्तिः कवित्व[2]बीजरूपः संस्कारविशेषः'। (का. प्र. १.३) इति काव्यप्रकाशकृत्। तथा च न सर्वेषामेतादृशी प्रतिभा,

---

मन्दरः

प्राञ्च इति। प्रकर्षेणाञ्च्यन्ते पूज्यन्त इति प्राञ्चः। प्रतिभेति। 'आतश्चोपसर्गे' (पा. ३.३.१०६) इत्यङ्। 'अकर्तरि च कारके संज्ञायाम्' (पा. ३.३.१९)। 'उपसर्गे उपपदे सति आदन्तात् धातोः कर्तृभिन्नकारकवाचकः सन् 'अङ्' भवति संज्ञा चेत् प्रकृतिप्रत्ययसमुदायः' इति

---

पाठ. १. इति कः – मधु। २. तथा च प्रति° – मधु। ३. व्यंतीत°। – मधु. मन्दर. ख.।

---

१. प्रकर्षेणोच्यन्ते – मातृका। २. °बीजरूपसंस्कार इत्येव – मातृका।

इत्युक्तलक्षणा [1]प्राचीनजननकृतसुकृतविशेष[2]समुत्पादिता शक्तिः। यां विना कवितैव न प्रसरेत्। [3]प्रसृताऽप्युपहसनीया स्यात्। तस्या [4]विशेष [5]उद्बोधः। तं कवितालतायाः बीजं [6]प्रधानकारणं प्राञ्चः [7]प्राहुः ॥३८-१॥

---

**नौका**

किन्तु केषाञ्चिदेव सुकृतिनामिति न सर्वेषां कवितोदय इति भावः। [1]वामनेनाप्युक्तम्—'कवित्वबीजं प्रतिभानम्' (काव्या. सू. १.३.१६) इति। ननु प्रतिभैव नास्ति, प्रमाणाभावात्, अत आह—यां विनेति। तथा [2]कार्यलिङ्गकानुमानमेव [3]तत्सिद्धौ मानमिति भावः। प्रयोगश्च—'सर्व-[4]काव्यक्रिया कारणविशेषजन्या [5]कार्यत्वात्, घटवत्' इति। यदि प्रतिभा न स्यात् न तर्हि काव्यमेव न स्यादिति। [6]कुतश्च? ननु विनापि शक्तिं काव्यमुत्पद्यत एवेत्याशङ्क्य उत्पन्नमपि लोकोत्तरत्वाद्युक्तलक्षणाभावादाभासरूपमित्याशयेनाह—प्रसृतापीति। तस्याः प्रतिभायाः। तदुद्बोधः प्रतिभोद्बोधः। उद्बोधः फलोन्मुख्यम्। तम् उद्बोधम् ॥३८-१॥

---

**मन्दरः**

करणार्थता। प्रतिभान्त्यनयेति भानं प्रति करणत्वात्। कारकाणि तु—'कर्ता च कर्म करणं सम्प्रदानं तथैव च। अपादानाधि[7]करणे' इत्याहुः कार-

---

पाठ. १. प्राग्जन्मकृत°–मधु। २. प्रतिपादिता–ख.। ३. प्रसृतैवोपहसनीया–मधु, प्रसृता वा उप°–ख., प्रसृतावाऽपहस°–मन्दर। ४. विशेषम् उद्बोधम्–मधु.। ५. तदुद्बोधः–नौका। ६. प्रधानं कारणमाहुः प्राञ्चः–ख.। ७. आहुः–मधु.।

---

१. वामनाद्युक्तम्–मातृका। २. काव्य°–मातृका। ३. तत्सम्बधदे–मातृका। ४. कार्य°–मातृका। ५. काव्यत्वात्–मातृका। ६. कर्तुश्च–मातृका। ७. करणमित्याहुः–मातृका।

[1]सत्काव्यानि रामायणादीनि। [2]शास्त्राणि काणादपाणिनीयादीनि। [3]आदिशब्देन गजतुरगखड्गादिशास्त्राणां परिग्रहः। तेषामवबोधनं सम्यगर्थपरिच्छित्तिः। द्वितीयेनादिशब्देन [4]काव्यविच्छिक्षया [5]काव्यकरणविचारयोर्निरन्तरपरिशीलनं [6]विवक्ष्यते। अनवरतमभ्यसतामेव[7] कवीनां काव्येषु [8]पाकोदयदर्शनात्। एतत्सर्वं

---

### नौका

[1]रामायणादीनीत्यादिना महाभारतादेः परिग्रहः। तथा च रामायणादेः महाकाव्य(ल)क्ष्यपरिज्ञानं[2] भारतादेः पूर्ववृत्तादिज्ञानं भवतीति भावः। काणादन्यायशास्त्रात् पदार्थनिर्णयः, पाणिनीयाद् व्याकरणाच्छब्दशुद्धिरिति तयोरुपयोगः। 'पाणिनीयादी'त्यादिना मीमांसादेर्ग्रहः। [3]'आदिशब्देन' [4]शास्त्रादीत्यादिशब्देन। परिग्रह इति। गजादिवर्णने तल्लक्षणज्ञानार्थं गजादिशास्त्राणामुपयोगादिति भावः। तेषां काव्यादीनाम्। द्वितीयेनादिशब्देनेति। अव[5]बोधनादीत्यत्र आदि(शब्दे)नेत्यर्थः। काव्यकरणविचारयोः

---

### मन्दरः

काणि षट्' इति। प्राचीनेति। 'शक्तिः कवित्वबीजभूतः संस्कारविशेषः' (उ. १ श्लो. ३) इति काव्यप्रकाशकृतः। एतेन 'प्रतिभा'शब्दो व्याकृतः। प्रसृता वेति। अत्र 'यां विने'त्यनुवर्तते। उद्बोधः। स्फूर्त्युन्मुखत्वम् ॥३९-१॥

---

पाठ. १. 'काव्यानि' इत्येव – मन्दर। २. वाक्यमिदं न पठ्यते – मधु.। ३. अत्रादिपदेन–मधु.। ४. काव्यशिक्षया इत्येव – मधु.। ५. काव्य–व्याकरणयोः – मधु. ६. वक्ष्यते – मधु.। ७. 'एव' न पठ्यते – मधु.। ८. पाकोदयात् इत्येव – मधु.।

---

१. रामायणादेरित्या° – मातृका। २. °ज्ञानमित्यनन्तरं 'भारतादिभिः पूर्ववृत्तादिज्ञानम्' इत्यधिकम् – मातृका। ३. अपिशब्देन – मातृका। ४. शास्त्रादित्यादिना – मातृका। ५. °बोधनादित्यत्र – मातृका।

तस्या जलावसेकादिकं प्राहुः । [1]अत्रादिशब्देन दोहदादिपरिग्रहः । यथा हि क्षितिपाथःपवनादीनां कारणत्वेऽप्यङ्कुरोत्पत्तावन्तरङ्गत्वात् प्राधान्यं बीजस्य, [3]एवं प्रतिभाशक्तेरपि [4]कवितोदयेऽन्तरङ्गत्वाद् व्युत्पत्तिमान्द्याविर्भूतदोषनिराकरणप्रभविष्णुत्वाच्च प्राधान्यमिति भावः ॥ ३८-२ ॥

---

नौका

काव्यकरणं च विचारश्च तयोः, निरन्तरपरिशीलनं मुहुरभ्यासः । परिशीलनस्य प्रयोजनमाह—अनवरतमिति । पाको नाम तत्तद्रसास्वादोचितशब्दनिष्पत्तिः । [1]स चाभ्याससाध्य इति [2]सफलोऽभ्यास इति भावः । पदानां विनिमयासहिष्णुत्वं [3]पाकः । तदेव मैत्री शय्येति चाख्यायत इति केचित् । तस्याः कवितालतायाः । अत्रादिशब्देनेति । 'सेकादिक'मित्यत्र 'आदि'शब्देन (इत्यर्थः) । एवं सामान्यतः श्लोकं व्याख्याय प्रतिभाया मुख्यकारणत्वं सदृष्टान्तं द्रढयति —यथा हीत्यादिना । पाथो जलम् । 'कबन्धमुदकं पाथः' इत्यमरः । 'कारणत्वेऽपि' कारणत्वे सत्यपि । [4]अन्तरङ्गत्वात् प्राधान्यं मुख्यं कारणत्वं प्रतिभाशक्तेः । व्युत्पत्तीति । व्युत्पत्तिसङ्ग्रह इत्यर्थः । 'प्राधान्य'मित्यस्य

---

मन्दरः

यथेति । अन्तरङ्गत्वात् मुख्यत्वात् ॥३८-२॥

---

पाठ. १. तत्रादि° – ख. । 'अत्र' न पठ्यते – मधु । २. '°प्यन्तरङ्गत्वात्' इत्येव – मधु । ३. एवं हि – मधु । ४. कवितालतोदये – मधु. ।

---

१. न चा° – मातृका । २. न फलाभ्यास – मातृका । ३. पावकः – मातृका । ४. अन्तरङ्ग – मातृका ।

३७. काव्यसामान्यलक्षणम् —

**अधुना काव्यसामान्यलक्षणमाह –**

**सगुणालङ्कृती काव्यं पदार्थौ दोषवर्जितौ ॥**

---

**नौका**

व्युत्पत्त्याद्यपेक्षयेत्यादिः । तथा च [1]अव्युत्पत्तिदोषं प्रतिभेयं तिरोधातुमीष्टे, न तु प्रतिभादोषं व्युत्पत्तिरिति प्रतिभायाः प्राधान्यं युक्तमिति भावः[1] ॥३९-२॥

एवं काव्योत्पादकारणमुपवर्ण्य शिष्यावधानायाह—अधुनेति ॥

सगुणेति । तथा च 'गुणालङ्कारसहितौ दोषवर्जितौ पदार्थौ काव्यम्' इति सामान्यलक्षणमित्यर्थः । तत्र 'पदं काव्य'मित्युक्ते नदीघोषात्मकपदेऽतिव्याप्तिः। 'अ(र्थः काव्यम्)'इत्युक्ते घटादौ, द्वयोरुपादानेऽपि श्रुतिकटुत्वादिदोषयुक्ते कार्तार्थ्यमित्यादा[2]वतिव्याप्तिरतो दोषवर्जिताविति । तथापि माधुर्यादिगुणरहितेऽतिव्याप्तिरतो गुण[3]सहिताविति । एवमपि घटमानयेत्यादावतिव्याप्तेरलङ्कार[4]सहिताविति ॥

---

**मन्दरः**

एवं कविताकारणादिकमुक्त्वा सम्प्रति काव्यसामान्यलक्षणमाह—सगुणालङ्कृती इति । काव्यमिति लक्ष्यनिर्देशः । अत्र गुणालङ्कारादियुक्तस्य शब्दार्थयुगलस्यैव काव्यत्वप्रतिपादनात्, पदार्थाविति द्वन्द्वनिर्देशाच्च कमनीयः शब्द एव, अर्थ एव वा काव्यमिति पक्षद्वयं निरस्तमिति बोध्यम् ॥

---

टिप्प. 1. यथाह ध्वनिकारः – "अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः । यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते" ॥इति॥ (ध्वन्या. तृ.)

---

१. तथा च न ह्यव्युत्पत्तिरोषं प्रतिभेदं प्रतिभादोषं व्युत्पत्तिस्तिरोधातुमीष्ट इति प्रतिभायाः – मातृका । २. °वतिमात्रे दोषवर्जितादिति – मातृका । ३–४. °सहितादिति – मातृका ।

गुणादीनां लक्षणानि [1]तत्तत्तरङ्गेषु वक्ष्यामः। पदशब्देनात्र पदसन्दर्भात्मकं वाक्यं लक्ष्यते। तत्रैव काव्यलक्षणसम्भवात्। पदं [2]च विभ[3]क्त्यन्तं [4]वेद्यम्। 'सुप्तिङन्तं पदम्' (पा.१.४.१४) इति लक्षणस्य प्रत्येकसमुदायपक्षयोरव्याप्त्यसम्भवदोषग्रस्तत्वात्॥

---

नौका

नन्विदं लक्षणमसम्भवि। 'गौरश्व' इत्यादिपदेष्वसम्भवात्, अत आह—[1]पदशब्देनेति। 'अत्र' सगुणेत्यादिलक्षणवाक्ये। पदशब्दस्य वाक्यपरतायां प्रयोजनमाह—तत्रैवेति। पदसन्दर्भात्मकवाक्य एवेत्यर्थः। सम्भवादिति। तथा च 'गौरश्व' इत्यादिपदाना[2]मुक्तकाव्यत्वं नेति तत्र तल्लक्षणाभावेऽपि नासम्भव इति भावः। पदलक्षणमाह—पदं चेति। विभक्त्यन्तं सुप्तिङन्यतरविभक्त्यन्तम्। वैयाकरणोक्तं पदलक्षणं दूषयति—सुप्तिङन्तमिति। तत्र हेतुमाह—प्रत्येकेत्यादिना। अयमाशयः—'सुबन्तत्वस्य पदसामान्यलक्षणत्वे तिङन्तेऽतिव्याप्तिः। तिङन्तत्वस्य लक्षणत्वे सुबन्तेऽतिव्याप्तिः। सुबन्तत्वे सति तिङन्तत्वमिति [3]समुदायस्य लक्षणत्वेऽसम्भवान्नेदं युक्तम्'इति॥

---

मन्दरः

ननु गुणादीनामबोधे तद्घटितलक्ष्यपरिज्ञानं कथमित्यत्राह--गुणादीनामिति। निर्गुणयोरनलङ्कारयोः सदोषयोश्च अतिव्याप्तिवारणाय विशेषणवैशिष्ट्यम्। नन्विदं लक्षणमसम्भवाक्रान्तमित्याशङ्क्य पदशब्दस्य विवक्षितार्थमाह–पदशब्देनेति। सुप्तिङन्तान्यतरपरत्वे तु गुणालङ्कारादिवैशिष्ट्यासम्भवात्। वाक्यपरत्वे युक्तिमाह-तत्रैवेति। वाक्य एवेत्यर्थः। पदं लक्षयति-पदमिति। सुप्तिङन्यतरविभक्त्यन्तत्वं पदसामान्यलक्षणम्। वैयाकरणाभिमतलक्षणमाक्षिपति-

---

पाठ. १. इतरतरङ्गेषु – ख., उत्तरतरङ्गेषु – मधु.। २. न पठ्यते – मन्दर.। ख.। ३. °क्त्यन्तमिति – मधु.। ४. वेदितव्यम् – ख.।

---

१. रदशब्दे°–मातृका। २. °मुक्तकाव्यत्वात् तत्र तल्लक्षणभावेऽपि–मातृका। ३. संयुदायस्य – मातृका।

पदत्रैविध्यम् —

**पदं विभजते —**

**वाचकं लक्षकं चैव व्यञ्जकं चेति तत् त्रिधा ॥**

३८.　वाचकशब्दनिर्वचनम् —

**आद्यं लक्षयति —**

**साक्षात् सङ्केतितार्थस्य बोधकं तेषु वाचकम् ॥**

---

नौका

ननु उक्तं पदं कतिविधमित्यपेक्षायां तद्विभागपरमुत्तरमवतारयति–पदमिति। काव्यलक्षणघटकं पदमित्यर्थः। तत्त्रिधेति। तत् लक्षणलक्षितं पदम्। [१]नन्वन्यशास्त्रादौ व्यञ्जनशब्दव्यवहाराभावात् कथं त्रैविध्यमिति चेत् ,न। व्यङ्ग्यार्थप्रति[२]पादनैकप्रवणे काव्यशास्त्रे व्यञ्जकशब्दस्यावश्यकत्वात्। अत एवोक्तं सरस्वतीतीर्थैः[1]— व्यङ्ग्यस्यैवार्थस्य प्रतिपादके काव्ये व्यञ्जकशब्दोऽवश्यम्भावीति त्रैविध्यमुचितमिति ॥

साक्षादिति। साक्षात् अव्यवधानेन। मुख्यवृत्त्येति यावत्। तेन लक्षणादिव्यावृत्तिः। बोधकं बोधजनकम्। तेषु पदेषु। वाचकमिति

---

मन्दरः

सुप्तिङन्तमिति। अयं भावः – 'सुबतं पदम्'इत्युक्ते तिङन्तेऽतिव्याप्तिः। तिङन्तं पदमित्युक्ते सुबन्तेऽतिव्याप्तिः। सुबन्तत्वे सति तिङन्तत्वं पदमित्युक्ते असम्भव' इति ॥

पदविभागमाह–पदमिति। 'तत्' पदमित्यर्थः। त्रिधेति। विभागादेव त्रैविध्ये सिद्धे त्रिधेत्यनेन व्यङ्ग्यजीवितकत्वात् काव्यस्य व्यञ्जकस्याप्यत्रावश्यकत्वमिति ज्ञाप्यते ॥

---

टिप्प. 1. मल्लिनाथसूरितनयैरेतैः नरहर्याख्यया पूर्वाश्रमप्रसिद्धैः स्वकृत 'काव्यप्रकाश'व्याख्यायां बालचित्तानुरञ्जन्यामित्यर्थः।

---

१. नन्वर्थ° – मातृका। २. °पादकैक° – मातृका।

[1]सङ्केतितो गृहीतसम्बन्ध इत्यर्थः ॥

---

**नौका**

लक्ष्यनिर्देशः । तथा च साक्षादर्थप्रतिपादकशब्दत्वमित्येकं लक्षणम् । सङ्केतितार्थप्रतिपादकशब्दत्वं चापरं लक्षणं वाचकस्येति लक्षणद्वये तात्पर्यम् । अन्यथा 'सङ्केत' 'साक्षा'त्पदयोरेकेनैव [1]लक्षकव्युदासे अन्यतरवैयर्थ्यात् । न च अन्विताभिधानवादे लक्ष्यार्थेऽपि सङ्केत इष्यत इति तद्व्युदासाय 'साक्षा'त्पदमिति वाच्यम् । तत्पक्षेऽपि तावतैव [2]लक्षकव्यावृत्तिसम्भवे सङ्केतितपदवैयर्थ्यादिति लक्षणद्वयपक्षमेव रोचयन्ते तद्विदः । तत्र लक्षणद्वये 'शब्द'पदेन चेष्टा व्यावर्त्यते ॥

---

**मन्दरः**

वाचकं लक्षयति — साक्षादिति । साक्षात् अव्यवधानेन सङ्केतितो योऽर्थः तस्य बोधकं बोधजनकम् । अत्र साक्षात्त्वं पदार्थान्तरप्रतीत्यद्वारकत्वम् । लक्षणाया मुख्यार्थबाधादिरूपसङ्केतसापेक्षत्वाल्लक्षकेऽतिव्याप्तिवारणाय साक्षादिति । 'मुख्यार्थबाधादित्रितयसमयसापेक्षा लक्षणा' इति काव्यप्रकाशकारोक्त्या (२.१२) तस्य व्यवधानेन लक्ष्यार्थबोधकत्वान्न साक्षात्त्वम् । 'यस्य शब्दस्य यत्र अव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः' (का. प्र. २.७) इति मम्मटपादाः । 'यः साक्षात्सङ्केतितोऽर्थः तं यः प्रतिपादयति, स वाचकस्तस्येत्यर्थः' इति वरदराजाचार्याः । तस्माद् अव्यवधानेन सङ्केतितस्यार्थस्य बोधकं वाचकमिति निष्कर्षः । एतेन 'साक्षादर्थप्रतिपादकशब्दत्वमित्येकं लक्षणं, सङ्केतितार्थप्रतिपादकशब्दत्वं चापरं लक्षणं वाचकस्येति लक्षणद्वये तात्पर्यमिति लक्षणद्वयपक्षमेव रोचयन्ते तद्विदः' इति च सम्प्रदायापरिज्ञानासम्भावितार्थोपपादनावश्यकार्थाप्रतिपादनायतनं कस्यचिद् व्याख्यानमपास्तम् ॥

---

पाठ. १. वाक्यमिदं न पठ्यते – मधु. ।

---

१. लक्षणव्युदासे – मातृका । २. लक्षणव्यावृत्ति° – मातृका ।

शब्दार्थसम्बन्धविचारः — .

ननु कोऽयं शब्दार्थयोः सम्बन्धः ? न तावत् तादात्म्यम्, विलक्षणतया प्रतीतेः। नापि कार्यकारणभावः, शब्दस्य नित्यत्वे गगनकार्यत्वे च स्वार्थेन सह कार्यकारणभावाभावात्। नापि देशकालाविनाभावः, भिन्नदेशकालत्वात्। नापि संयोगः,

---

**नौका**

'सङ्केतित' [1]शब्दार्थमाह — गृहीतेति ॥

ननु—'सङ्केतितार्थस्य' इत्ययुक्तम्। शब्दार्थयोः सङ्केतस्यैव [2]दुर्निरूपत्वादित्याशयेन शङ्कते - नन्वित्यादिना। तत्र सम्भावितान् सम्बन्धान् दूषयति—न तावदित्यादिना। तादात्म्यमभेदः। 'शब्दार्थयोः सम्बन्धः' इत्यनुकृष्यते। एवमुत्तरत्रापि। 'न तावत्' सम्बन्धो नैव भवतीत्यर्थः। 'यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः (३.३.२४६)। तत्र हेतुमाह — विलक्षणतयेति। वैलक्षण्यं च द्रव्यत्वगुणत्वादिरूपविरुद्धधर्मवत्त्वम्। [3]तथा सति विरुद्धयोरपि तादात्म्यं स्यादिति भावः। ननु तन्तुपटयोरिव कार्यकारणभावसम्बन्धः किं न स्यात्? अतस्तं दूषयति — नापि कार्येति।

---

**मन्दरः**

सङ्केतितशब्दार्थं विवेक्तुं सङ्केतितशब्दार्थमाह — सङ्केतित इति। सङ्केतोऽस्य गृहीतः सङ्केतितः। अत एव गृहीतः सम्बन्धो यस्य स इत्याशयेन 'गृहीतसम्बन्ध इत्यर्थः' इत्युक्तम् ॥

शब्दार्थयोः निश्चितदार्ढ्यापादनाय कतिचित् सम्बन्धाभासान् प्रतिपाद्य निराकरोति—'ननु'इत्यादिना 'तस्मान्न शब्दार्थयोः सम्बन्धः' इत्यन्तेन। अयं सङ्केतपदवाच्यः शब्दार्थयोः सम्बन्धः कः किमभिधान इत्यर्थः। 'शब्दार्थयोः'

---

१. °शब्दार्थमगृहीतेति – मातृका। २. दुर्निरूप्यत्वा° – मातृका। ३. यदि विरुद्धयो° – मातृका।

शब्दस्य [1]द्रव्यत्वे गुणत्वे वा स्वार्थेन गुणेन द्रव्येण वा तदयोगात् । नापि अर्थस्मृतिजननशक्तिरेव सम्बन्धः, अगृहीतस्य [2]तस्य कार्या[3]नुपयोगात्, [4]अन्यथा अव्युत्पन्नस्यापि शब्दार्थप्रतीतिप्रसङ्गात् । ग्रहणापेक्षायां स्वजन्यार्थस्मृत्यैव स्वानुमानादन्योन्याश्रय-

---

**नौका**

शब्दस्य नित्यत्वमिति मीमांसकमते कार्यत्वमेवासिद्धम् । गगनजन्यत्वमिति वैशेषिकादिमते तु अर्थजन्यत्वं दूरापास्तमित्याशयेन तत्र हेतुमाह–शब्दस्येति । 'स्वार्थेन सह' स्वस्य शब्दस्य अर्थेन घटादिना सहेत्यर्थः । ननु यद्देशे यत्काले च शब्दः, तत्रार्थ इति देशकालसामानाधिकरण्यरूपा[1]विनाभावसम्बन्धः स्यात् , अतस्तं दूषयति — नापि देशेति । 'काश्यां मणिकर्णिके' त्यादिशब्दाना[2]मत्रत्यत्वात् [3]काश्यादीनां देशान्तरवृत्तित्वात् देशाविनाभावो न घटते । 'त्रेतायां रघुनायकः' इत्यादिशब्दानामिदानीन्तनत्वात् रघुनायकादीनां कालान्तरभावित्वात्

---

**मन्दरः**

'सम्बन्धः' इति पदद्वयमग्रे 'न तावद्'इत्यादिवाक्येष्वनुवर्तते । ननु शब्दार्थयोर्मिलितत्वश्रवणादभेदोऽस्त्वित्याशङ्क्य निराचष्टे — न तावदिति । तादात्म्यम् अभेदः । 'न तावत्' नैव 'भवति'इति शेषः । तत्र हेतुं दर्शयति — विलक्षणतयेति । अयं भावः — 'शब्दस्य' वर्णात्मकतया, अर्थस्य द्रव्यादिरूपतया च वैलक्षण्यादभेदो न सिद्ध्यतीति । ननु शब्दप्रयोगस्यार्थज्ञानपूर्वकत्वात् कार्यकारणभावो भवत्वित्याशङ्क्य परिहरति — नापीति । तत्र कारणमाह — शब्दस्येति । 'शब्दस्य नित्यत्वम्'इति मीमांसकाः ।

---

पाठ. १. गुणत्वे द्रव्यत्वे वा – मधु । २. न पठ्यते – ख. । ३. °नुपयोगित्वात् – मधु. । ४. न पठ्यते – नौका. ।

---

१. °विनाभाव° – मातृका । २. °मव्युत्पत्त्यात् – मातृका । ३. काव्यादीनां – मातृका ।

प्रसङ्गात्। न च पूर्वपूर्वस्मृत्या [1]तदनुमानादुत्तरोत्तरस्मृतिजन्म, अनवस्था-प्रसङ्गात्। किञ्च यत्र सम्बन्धिदर्शनात् सम्बन्ध्यन्तरस्मृतिस्तत्र

---

नौका

न काला[1]विनाभावोऽपि इत्याशयेनाह — भिन्नदेशेति। संयोगस्यापि शब्दार्थ-सम्बन्धत्वं न घटते। मीमांसकमतरीत्या शब्दस्य द्रव्यत्वे स्वार्थेन रूपादि-[2]गुणेन, शब्दस्य गुणत्वाङ्गीकारेऽपि स्वार्थे(न) घटादिद्रव्येण संयोगायोगादित्या-शयेन संयोगपक्षं निराचष्टे – नापि संयोग इत्यादिना। नन्वर्थस्मारकशक्तिरेव सम्बन्धोऽस्त्वित्याशङ्क्य निराकरोति — नाप्यर्थेति। तत्र किं [3]स्वरूप-सत्यास्तस्या उपयोगः, उत ज्ञाताया वेति विकल्पं मनसि निधाय आद्यं निराकरोति — अगृहीतस्येति। तस्य शक्तिरूपसम्बन्धस्य कार्यानुपयोगात्

---

मन्दरः

'गगनजन्यत्वम्' इति नैयायिकाः। अयं भावः — कार्यमात्रस्यानित्यत्वनियमेन नित्यस्य शब्दस्य कार्यत्वासम्भावाद् गगनजन्यस्य तस्य गगनकार्यत्वेनान्य-कार्यत्वायोगाच्च मतद्वयेऽपि शब्दार्थयोः कार्यकारणभावसद्भावसम्भावना शशविषाणास्तित्वकल्पनाकल्पेति। ननु यस्मिन् देशे काले च शब्दः श्रूयते, तस्मिन्नेवार्थोऽपीति देशकालाविनाभावो भवत्वित्याशङ्क्य सोऽपि न सिध्यतीत्याह — नापीति। तत्र हेतुमाह — भिन्नेति। अयं भावः – 'लङ्कायां रावणोऽभवत्' इति रावणशब्दस्यैतद्देशे वर्तमानकाले च श्रूयमाणत्वाद् रावणरूपद्रव्यस्य लङ्कादेशे भूतकाले च भूतत्वाच्च तयो-(शब्दार्थयोः) र्देशकाला-विनाभावोऽपि न सम्भवतीति। ननु 'वागर्थाविव सम्पृक्तौ' (रघु. १. १) इत्यभियुक्तोक्तेः संयोगोऽस्त्वित्याशङ्क्य सोऽप्ययुक्त इत्याह — नापि संयोग इति। तत्र हेतुं दर्शयति --- शब्दस्येति। शब्दो द्रव्यमिति मीमांसकाः। गुण इति नैयायिकाः। द्रव्यत्वपक्षे स्वार्थेन गुणेन, गुणत्वपक्षे स्वार्थेन द्रव्येण

---

पाठ. १. 'तदनुमानात्' न पठ्यते – ख.।

---

१. °विनाभावोऽपि पार्थिवत्वलोहलेख्यत्वादिवद् व्यभिचारा-(?) दित्या° – मातृका। २. °गुणशब्दस्य – मातृका। ३. स्वरूपनित्या – मातृका।

**सादृश्यविरोधादिरेव सम्बन्धो नियतः। स च प्रकृते नास्ति। तस्मान्न शब्दार्थयोः सम्बन्ध इति ॥**

---

### नौका

अर्थस्मृतिरूपकार्याजनकत्वाद्। अज्ञातस्यापि कार्यजनकत्वेऽतिप्रसङ्गमाह — अव्युत्पन्नस्यापीति। अज्ञातसङ्केतस्यापीत्यर्थः। प्रसङ्गादिति। स्वरूपसत्याः शक्तेः सत्त्वादिति भावः। द्वितीयं दूषयति — ग्रहणापेक्षायामिति। स्वजन्येति। शक्तिजन्येत्यर्थः। स्वानुमानात् स्वस्याः शक्तेः अनुमानात् अनुमितेः। अन्योन्याश्रयेति। तथा च शक्तिज्ञाने अर्थस्मृतिः, तया च 'कायण कारणानुमान' विधया शक्तिज्ञानमित्यन्योन्याश्रयः स्यादिति भावः।

---

### मन्दरः

वा तदयोगात्। अयं भावः — शब्दस्य द्रव्यत्वमिति मते द्रव्यभूतस्य रूपशब्दस्य गुणभूतस्य शुक्लादिरूपतदर्थस्य च, गुणत्वमिति मते च गुणभूतस्य घटशब्दस्य द्रव्यभूतस्य घटरूपतदर्थस्य च 'गुणगुणिनोः समवायः' इति समवायसम्बन्धावश्यम्भावात् संयोगो न सिद्ध्यतीति। ननु शब्दोच्चारणादर्थ-स्मृतेरनुभूयमानत्वादर्थस्मृतिजननशक्तिरस्त्वित्याशङ्क्य साऽप्युक्तैवेत्याह — नापीति। अर्थस्मृतिजननशक्तिरपि सम्बन्धो नैव, न भवत्येवेत्यर्थः। अयमगृहीतः कार्योपयुक्तो वा गृहीतो वेति द्वेधा विकल्पं हृदि निधाय विकल्पद्वयपरिहाररूपेण तत्र हेतुमुपपादयति—अगृहीतस्येति। अज्ञातस्येत्यर्थः। वैपरीत्ये अनुभववैरुद्ध्यं दर्शयति — अन्यथेति। अगृहीतस्य कार्योप-योगित्वोक्ताविसर्थः। अव्युत्पन्नस्य शक्तिग्रहणजन्यसंस्काररहितस्यापि। ग्रहणापेक्षायामिति। अगृहीतत्वपक्षस्यानुपयुक्तत्वाद् गृहीतत्वपक्षाकाङ्क्षाया-मित्यर्थः। स्वजन्यया 'अर्थस्मृतिजननशक्तिज्ञान'जन्यया अर्थस्मृत्या स्वस्य विशिष्टशक्तिज्ञानस्यानुमानादन्योन्याश्रयप्रसङ्गः, तस्मात्। अयं भावः — सिषाधयिषितस्य सन्दिग्धदशापन्नस्य विशिष्टशक्तिसम्बन्धस्य यद् ज्ञानं तस्य तज्जन्ययैवार्थस्मृत्या निर्वहणे सति — 'अहमर्थस्मृतिमान् अर्थस्मृतिजननशक्ति-ज्ञानात्', 'अहमर्थस्मृतिजननशक्तिज्ञानवान् अर्थस्मृतेः' इत्युभयथाप्यनुमान-प्रसङ्गादर्थस्मृतिं प्रति विशिष्टशक्तिज्ञानं, विशिष्टशक्तिज्ञानं प्रत्यर्थस्मृतिश्च

### नौका

अन्योन्याश्रयपरिहाराय शङ्कते — न च पूर्वेति। तथा च पूर्वपूर्वार्थस्मरणेन शक्तिज्ञानादुत्तरोत्तरार्थस्मरणसम्भवान्न [1]परस्पराश्रय इति शङ्कितुरभिप्रायः। एवं चेदनवस्था स्यादित्याह — अनवस्थेति। 'मूलक्षयकरीं प्राहुरनवस्थामदूषणम्' इतीष्टापत्तेरयुक्तत्वात्, ए(त)त्परिहाराय पूर्वोक्तपक्षावलम्बने अन्योन्याश्रय इत्युभयतः [2]पाशा रज्जुरिति भावः। ननु सादृश्यादिरेव सम्बन्धोऽस्त्वित्या-शङ्क्यासम्भवेन दूषयति — किञ्च यत्रेत्यादिना। यादृशस्थले चित्रलिखित-गजादिरूपसम्बन्धिदर्शनात् [3]सम्बन्ध्यन्तरतत्तद्गजादिः स्मर्यते तत्र सादृश्यं सम्बन्धः। गजादिदर्शनात् तद्विरोधिनः केसरिणः स्मरणं यत्र जातं, तत्र विरोधः सम्बन्धो वाच्यः। प्रकृते तु शब्दार्थयोः सादृश्यादेरसम्भवात् सोऽपि न सन्बन्ध इति भावः। 'विरोधादिः' इत्यादिना स्वस्वाभिभावादेः सङ्ग्रहः। इयता प्रबन्धेन सम्बन्धं दूषयित्वा उपसंहरति — तस्मादिति॥

---

### मन्दरः

साधनमित्यन्योन्याश्रयप्रसङ्गः, तस्माद् गृहीतत्वपक्षोऽप्यननुरूप इति। नन्वर्थस्मृतिजननशक्तिर्गृहीतैव अर्थस्मृतिं जनयतीति — अत्र पूर्वस्मृत्या विशिष्ट-शक्तिज्ञानविवक्षित्वान्नान्योन्याश्रय इत्युपपत्तिकल्पनमत्यक्तम् इत्याशयेनाह— न चेति। 'तदनुमानात्' विशिष्टशक्तिज्ञानानुमानादित्यर्थः। अयं भावः — शब्दश्रवणानन्तरं सङ्गतिग्रहणकालीनपदार्थस्मृत्यनुमिताद् विशिष्टशक्तिज्ञानात् पुनः पदार्थस्मृतावभ्युपगतपूर्वस्मृत्या शक्तिज्ञानानुमानादन्योन्याश्रयपरिहारः स्यादित्युक्तिरप्ययुक्तेति। तत्र हेतुमाह — अनवस्थेति। अयमाशयः — 'अन्योन्याश्रये परिहृतेऽपि पूर्वस्मृत्या विशिष्टशक्तिज्ञानानुमानाङ्गीकारे पूर्वस्मृतेः कारणत्वेन शक्तिज्ञानमपेक्षितम्। तस्य पुनः पूर्वस्मृतिरपेक्षा, तस्याः पुनः शक्तिज्ञानमिति पूर्व[4]पूर्वाकाङ्क्षाया अविश्रान्तेरनवस्थाख्यदोषापत्तेः पूर्वस्मृत्यनु-मितेन विशिष्टशक्तिज्ञानेनोत्तरस्मृतिर्भवतीत्यसाम्प्रतम्' इति। पदार्थानामनेकत्वात्

---

१. परस्पराश्रयितुं – मातृका। २. °पार्श्वा – मातृका। ३. सम्बन्ध्य-न्तसत्त्वेगजादिः – मातृका। ४. °पूर्वमाकङ्क्षाया – मातृका।

शक्तिव्यवस्थापनम् --

अत्रोच्यते —

अस्तु शक्तिरेव सम्बन्धः । स च [1]सङ्गतिग्रहणकाल एव गृह्यते । [2]तज्जनितसंस्कारः [3]शब्ददर्शनसमुद्बुद्धः [4]सत्तामात्रेणार्थ-

---

### नौका

सम्बन्धं साधयिष्यन् [1]पूर्ववादिनोऽवधानाय प्रतिजानीते–अत्रोच्यत इति। न हि प्रतिज्ञामात्रेणार्थसिद्धिरिति सम्बन्धमाह — अस्तु शक्तिरेवेति। (स च) शक्तिरूपसम्बन्धश्च। सङ्गतीति। पदव्युत्पत्तिज्ञानसमय इत्यर्थः। नन्वस्तु शक्तिः सम्बन्धः, [2]तद्ग्रहोऽप्यस्तु; तावताऽर्थस्मृतिः कथम्? अत आह— तज्जनितेति। शक्तिग्रहणजनितेत्यर्थः। शक्तिज्ञानजन्यसंस्कारो[3]ऽर्थस्मृतिं

---

### मन्दरः

पूर्वपूर्वेति द्विरुक्तिः। ज्ञाताज्ञातविकल्पासहत्वादर्थस्मृतिजननशक्तिरपि नैव सम्बन्ध इति पूर्वेण सम्बन्धः। सादृश्यादेरत्रानवकाश एवेत्याह — 'किञ्च'इति। सम्बन्धिदर्शनात् गवयादिदर्शनात् सम्बन्ध्यन्तरस्मृतिर्गवादिस्मृतिः गजादिदर्शनात सिंहादिस्मृतिश्च 'भवति' (इति शेषः), तत्र सादृश्यं विरोधश्च सम्बन्धः। भटादिदर्शनाद् राजादिस्मृतेः 'स्वस्वामिभावादिः' आदिशब्दार्थः। स च प्रकृते शब्दार्थस्थले नास्ति। तस्मादिति। सम्बन्धस्य दुर्निरूपत्वाच्छब्दार्थयोः सम्बन्ध एव नास्तीति पूर्वः पक्षः॥

अथ निश्चितसम्बन्धनिर्वहणाय प्रतिजानीते— अत्रोच्यत इति। विवक्षितः सम्बन्धः कः? इत्यत्राह—अस्तु शक्तिरेवेति। अभिधापरपर्याया सङ्केतपदवाच्या च शक्तिः सम्बन्धो भवतु। अत्र अस्त्वित्यनेन विशिष्टशक्तिवन्नात्र दोषगन्ध

---

पाठ. १. सङ्केतकाल एव – मधु. ख.। २. तज्जनितः – मधु. ख.। ३. शब्देन समुद्बुद्धः–मधु। ४. तन्मात्रेण–नौका।

---

१. पूर्ववाचिनो – मातृका। २. तद्ग्रहाद्यस्तु – मातृका। ३. अर्थः स्मृतिं – मातृका।

**स्मृतिं जनयति। न त्वर्थप्रतियोगिकसम्बन्धविशिष्टशब्दज्ञानमर्थस्मृतिहेतुरभ्युपगम्यते। तथा सति सम्बन्धस्यापि [1]कारणकोटि-**

---

नौका

जनयतीत्यन्वयः। तथा च नार्थ[1]स्मृतेरनुपपत्तिरिति भावः। ननु (उद्) बुद्धस्यैव संस्कारस्य स्मारकत्वं वाच्यम्। अन्यथा सर्वदा स्मृतिः स्यात्? नास्ति चात्रोद्बोधक इत्यत आह — शब्ददर्शनेति। तथा च शब्दज्ञानस्योद्बोधकस्य सत्त्वात् [2]नोद्बोधकाभाव इति भावः। उद्बोधः फलौन्मुख्यम्। तन्मात्रेण उद्बोधमात्रेण। नन्वर्थसम्बन्धिशक्तिज्ञानादेवार्थस्मृतिनिर्वाहे किमन्तर्गडुना संस्कारेणेत्यत आह — [3]न त्वर्थेति। [4]'न तु' इति 'अभ्युपगम्यत' इत्येतेनान्वितम्। अर्थप्रतियोगिकेति। अर्थनिरूपितेत्यर्थः। अनभ्युपगमे हेतुमाह — [5]तथा सतीति। सम्बन्धस्यापीति। अर्थ[6]प्रतियोगिक-

---

मन्दरः

इति सूचितम्। अस्तु शक्तिः सम्बन्धः, तस्याप्यगृहीतस्य गृहीतस्य वोपयोगः इत्याशङ्कायां गृहीतस्यैवोपयोगः इत्याशयेन ग्रहणसमयमाह—स चेति। सङ्गतिग्रहणकाले 'अस्य पदस्यायमर्थोऽनुरूप' इति सन्दर्भज्ञानसमय एव। यदा सङ्गतिर्गृह्यते, तदैव अस्मिन् पदे इदमर्थाभिधायिनी शक्तिरस्तीति गृह्यत इत्यर्थः। सम्बन्धाभिमानेन 'स' इति निर्देशः। अस्त्वेकदा शक्तिग्रहस्ततः कथं समयान्तरेऽर्थस्मृतिरित्यत आह—तदिति। तेन सङ्केतग्रहणकालीनशक्तिग्रहेण जनितः संस्कारः शब्ददर्शनेन समुद्बुद्धः संस्फूर्तः। अत्र दर्शनं श्रवणस्याप्युपलक्षणम्। सतो भावः सत्ता विद्यमानत्वम्, तन्मात्रेण। स्वसत्तयैवेत्यर्थः। संस्कारवशादर्थस्फूर्तिर्भवतीति सर्वानुभवः। ननु शक्तिरूपसम्बन्धविशिष्टशब्दज्ञानादेवार्थस्मृतौ किं पृथग्भूतेन संस्कारेणेत्याशङ्क्य तत्सत्तां विना

---

पाठ. १. विशेषण° – मधु.।

---

१. °स्मृतीत्यनु° – मातृका। २. °भावादनुद्बोधक (?) इति भाव. –मातृका। ३. सत्वर्थेति – मातृका। ४. अत्वि° – मातृका। ५. तदा – मातृका। ६. °प्रतियोगिके – मातृका।

[1]निवेशेन सम्बन्धान्तराभ्युपगमप्रसङ्गात् । अर्थस्यापि [1]सम्बन्धविशेषणतया प्रथममवगतत्वेन पुनस्तदवगमाय शब्दवैयर्थ्यप्रसङ्गाच्च ॥

---

नौका

सम्बन्धस्यापि कारणकोटिनिवेशेन स्मृतिकारणकोटिनिवेशेन । सम्बन्धान्तरेति। अर्थप्रतियोगिकसम्बन्धस्य शब्देन वैशिष्ट्यार्थं सम्बन्धा[1]न्तरमभ्युपगन्तव्यम्; तस्यापि सम्बन्धार्थं सम्बन्धान्तरमित्यनवस्था स्यादिति भावः । दूषणान्तरमाह–किञ्चेति । अर्थस्य–'अर्थप्रतियोगिकसम्बन्धेत्यत्रेत्यादिः[1] । अवगतत्वेनेति । विशिष्टज्ञानस्य विशेषज्ञानजन्यत्वनियमेन सम्बन्धविशेषणार्थस्य[2] ज्ञानं प्रथममावश्यकमिति भावः । अस्तु को दोषस्तत्राह — पुनरिति तदवगमाय तस्या[2]प्यर्थस्य ज्ञानाय । वैयर्थ्यप्रसङ्गादिति । विशेषणज्ञानविधया 'अर्थ'ज्ञानस्य जातत्वादिति भावः ॥

---

मन्दरः

नार्थस्मृतिरित्याशयेनाह— न त्विति । अर्थः प्रतियोगी आधेयो यस्य सोऽर्थप्रतियोगिकः । अर्थात् शब्दानुयोगिकश्चेति लभ्यते । तादृशो यः सम्बन्धः शक्तिरूपसम्बन्धः तद्विशिष्टो यः शब्दः, तस्य ज्ञानं कर्तृ अर्थस्मृतेर्हेतुरिति नाभ्युपगम्यते नाङ्गीक्रियते । तत्र हेतुं दर्शयति—तथेति । सम्बन्धस्य शक्तिरूपसम्बन्धस्यापि कारणकोटौ निवेशेन । कारणपरम्परान्तःपातित्वात् सम्बन्धरूपं विहाय कारणरूपतापन्नत्वेनेति यावत् । सम्बन्धान्तरस्यापि अभ्युपगमप्रसङ्गात् । निर्व्यूढस्य शक्तिरूपसम्बन्धस्य अन्यथात्वेन शब्दार्थयोः

---

पाठ. १. सम्बन्धे – मधु. ।

---

टिप्प. 1. तथा च – 'अर्थप्रतियोगिकसम्बन्ध' – इत्येतद्घटकस्य अर्थस्येत्यर्थ. ।
2. सम्बन्धे अर्थप्रतियोगिकसम्बन्धे विशेषणं विशेषणतया भासमानो योऽर्थः तस्येत्यर्थः ।

---

१. °न्तरोऽभ्युपगन्तव्यः – मातृका । २. तस्यानर्थस्य – मातृका ।

सादृश्यादिसम्बन्धखण्डनम् --

यत्तूक्तम् — 'अन्यत्र सादृश्यादिरेव सम्बन्ध' इति। तत्र वक्तव्यं किं [1]शब्दार्थयोरपि सादृश्यादिना [2]भाव्यमिति विवक्षितम्, उत शब्दार्थवदन्यत्रापि तन्मा भूदिति, किं वा तदभावात्प्रकृतेऽपि स्मृत्यभाव इति? नाद्यः, शब्दार्थयोस्तदसम्भवात्। न

---

नौका

'किञ्च यत्र' इत्यादिना दूषणमुक्तं दूषयितुमनुभाषते–यत्तूक्तमित्यादिना। तं पक्षं त्रिधा विकल्पयति — किं शब्दार्थयोरिति। तत्राद्यं विकल्पमसम्भवेन निराकरोति — नाद्य इति। तदसम्भवात् सादृश्यादेरसम्भवात्। द्वितीयविकल्पं दूषयति — न द्वितीय इति। अन्वयव्यतिरेकेति। सादृश्यस्येत्यादिः। तथा च — 'सादृश्यसत्त्वे सम्बन्ध्यन्तरस्मृतिः, तदभावे स्मृत्यभावः' इति सादृश्यस्यान्वयव्यतिरेकयोः सत्त्वात् चित्रलिखितादिष्विति तस्य

---

मन्दरः

सम्बन्धान्तराङ्गीकारप्रसक्तेरित्यर्थः। अनिष्टान्तरमप्यस्तीत्याह—अर्थस्येति। सम्बन्धविशेषणतया कारणकोटौ प्रथमोपात्तत्वात् सम्बन्धविशेषणत्वेन; प्रथमं शाब्दज्ञानात् पूर्वम्, अवगतत्वेन 'विशिष्टज्ञानं विशेषणज्ञानजन्यम्' इति नियमादादावेव ज्ञातत्वेन पुनस्तस्यार्थस्यावगमाय ज्ञानाय शब्दस्य वैयर्थ्यप्रसङ्गाच्च। शब्दप्रसक्तिं विनैव अर्थज्ञानस्य जातत्वात् शब्दस्य वैयर्थ्यप्रसङ्ग इति भावः। ततः 'संस्कारः सत्तामात्रेणार्थस्मृतिं जनयति' इति साम्प्रतमिति बोध्यमिति भावः॥

एवं शक्तिसम्बन्धं निर्वाह्य सादृश्यादिसम्बन्धकोटिं सिंहावलोकनन्यायेन विमृश्य तत्र त्रेधा विकल्प्य तृतीयं द्वेधा विकल्प्य क्रमेण परिहरति — यत्तूक्तमित्यादिना स्ववचनव्याघातादित्यन्तेन। उतेति वितर्के। शब्दार्थवत् शब्दार्थयोरिव। अन्यत्र गोगवयादिस्थलेष्वपि। तत् सादृश्यम्। उतेत्यादिविकल्पद्वयेऽपि

---

पाठ. १. 'शब्दार्थयोः' इत्येव – मधु.। २. 'भाव्यम्' इत्येव – मधु. ख.।

द्वितीयः, अन्वयव्यतिरेकसिद्धत्वात् । [1]तृतीयेऽपि शक्तिसम्बन्धमङ्गीकृत्य स्मृत्यभाव [2]आपाद्यते [3]वा, उत सम्बन्ध एव [4]नास्तीति [5]वा ? न द्वितीयः, कार्यगम्यत्वाच्छक्तिलक्षणसम्बन्धस्य । [6]नाद्यः, 'माता मे वन्ध्या' इतिवत् स्मृतिजननशक्तिरस्ति स्मृति[7]र्नास्तीति स्ववचनव्याघातात् ।

---

नौका

सम्बन्धता [1]स्वीकार्येति । किञ्च शब्दार्थयोः सादृश्यस्य सम्बन्धत्वाभावेनान्यत्रापि तदनङ्गी[2]कारेऽन्यजनकत्वाभावतः तन्त्वादेः पटजनकत्वमपि न स्यादिति भावः । तृतीयं विकल्पं दूषयितुं विकल्पयति — तृतीये त्वित्यादिना । कार्यगम्यत्वात् अर्थस्मृतिलक्षण[3]कार्यानुमेयत्वात् । इयता प्रबन्धेन साधितं शब्दार्थयोः शक्तिसम्बन्धं निगमयति — तस्मादिति ॥

---

मन्दरः

विवक्षितमिति पदस्यान्वयपूर्वकं काक्वनुसन्धानेन प्रश्नः समुन्नेयः । तत्राद्यं परिहरति–नाद्य इति । तत्र निमित्तं दर्शयति–शब्दार्थयोरिति । द्वितीयं निराकरोति–न द्वितीय इति । तत्र हेतुं प्रतिपादयति–अन्वयेति । 'सादृश्यसम्बन्धसद्भावात् व्यक्त्यन्तरस्मृतिः' इत्यन्वयेन 'तदभावात् स्मृत्यभाव' इति व्यतिरेकेण च सिद्धत्वात् अन्यत्रापि तन्मा भूदिति नोपपद्यत इति ज्ञेयम् । तृतीयेऽपीति । तदभावादित्यत्र तस्य शक्तिसम्बन्धाभावात् सामर्थ्याभावादित्येकोऽर्थः । तस्यैवाभावादित्यन्योऽर्थः ।

---

पाठ. १. तृतीये तु – नौका, 'तृतीये' इत्येव – ख. । २. आपद्यते – मधु. ख. : ३. न पठ्यते – मधु. ख. । ४. 'इति' न पठ्यते – मधु. । ५. न पठ्यते– ख. । ६. नाद्यः इत्यारभ्य °व्याघातात् इत्यन्तो ग्रन्थः 'न द्वितीयः' इत्यतः पूर्वं पठ्यते – मधु. । ७. नास्तीति व्याघातात् इत्येव – मधु. ।

---

१. अकार्ये किं – मातृका । २. °कारेषूपजनक – मातृका । ३. °काव्या°– मातृका ।

उपसंहारः —

तस्मा[1]च्छक्तिः सम्बन्ध [2]इति सर्वमनवद्यम् ॥

[3]वाच्यभेदमुखेन वाचकभेदं विवक्षन् वाच्यभेदमाह —

शक्तिग्रहे मतभेदः

जातिर्गुणः क्रिया द्रव्यं साङ्केत्यं जातिरेव वा ॥

---

नौका

सङ्केतितार्थावधारणमन्तरेण तत्तद्वाचकस्वरूपानवधारणात् तस्मिन् निर्णतव्ये मतभेदेन सङ्केतार्थो नानेति प्रतिपादनपरत्वेनोत्तरश्लोकः प्रवृत्त इत्याशयेनोत्तरमवतारयति—वाच्यभेदेनेति । 'साङ्केत्यं' सङ्केत[1]विषयीकृतमित्यर्थः । सङ्केतो नाम शब्दार्थयोः सम्बन्धावधारणम् । जातिरेव वेति । इदमुपलक्षणम् । जात्यालिङ्गितव्यक्तावन्यापोहे [2]वा कैश्चित् सङ्केताङ्गीकारात् । स्फुटीकरिष्यति चेदमुपरिष्टात् ॥

---

मन्दरः

द्वितीयं परिहरति — न द्वितीय इति । तत्र हेतुमुपपादयति — कार्येति । अर्थस्मृतिरूपकार्यानुमेयत्वात् । आद्यं निराकरोति — नाद्य इति । तत्र हेतुं दर्शयति—मातेति । स्वोत्पत्तेर्वन्ध्यात्वदूरीकरणात् 'माता मे वन्ध्या' इति वचनवत् व्याहतमिति भावः । निगमयति — तस्मादिति । 'अनवद्यम्' अदुष्टमित्यर्थः ॥

---

पाठ. १. शक्तिरेव – मधु. । २. 'इत्यनवद्यम्' इत्येव – मन्दर. ख. । ३. वाच्यमुखेन – मधु. ख., वाच्यभेदेन – नौका ।

---

१. °विषयः । कृतमित्यर्थः – मातृका । २. वाक्यैश्चेत् – मातृका ।

तत्र तावत् सत्येव – 'अस्य शब्दस्यायमर्थ' इति समयग्रहे 'शब्दादर्थविशेषप्रतीतिरन्यथा[1] न' इत्यन्वयव्यतिरेकाभ्यां सङ्केत[2]ग्रह-सहकृत एव शब्दोऽर्थं [3]बोधयतीति [4]सर्वसम्प्रतिपन्नम्। सङ्केत-ग्रहश्च जातिगुणक्रियाद्रव्येषु [5]जातावेव जात्यालिङ्गितव्यक्तौ वा अन्यापोहे [6]वा मतभेदेन भवति ॥

---

नौका

श्लोकं विवरिष्यन् सिद्धान्तस्थितिमाह—तत्र तावदित्यादिना सम्प्रतिपन्न-मित्यन्तेन। तत्र सङ्केतार्थविषये। तावच्छब्दो वाक्यालङ्कारे। समयग्रहे सङ्केतग्रहे। [1]अन्यथा सङ्केतग्रहबाधे। अस्तु सर्वसम्प्रतिपत्तिः ततः किमत आह—सङ्केतग्रहश्चेति। [2]जातिगुणेत्यादि वैयाकरणमतेन। मीमां-सकमतेनाह–जातावेवेति। [3]नैयायिकमतेनाह–जात्यालिङ्गितेति। अन्यापोह इति। सौगतसिद्धान्ते(नेत्यर्थः) ॥

---

मन्दरः

एवं वाचकं निरूप्य तद्भेदनिरूपणे कर्तव्ये वाच्यभेदावगतिमन्तरेण तद्भेदस्य दुर्ग्रहत्वात् प्रथमं वाच्यभेदनिरूपणायावसर इत्याशयेनाह–वाच्येति। जातिरिति। साङ्केत्यं सङ्केतार्हमिति सामान्ये नपुंसकलिङ्गनिर्देशः। जाति-गुणक्रियाद्रव्यभेदेन चतुर्विधः सङ्केतविषयः इत्यर्थः।'जातिरेव वा'इति पक्षान्तरम् ॥

साङ्केत्यमित्यनेन सूचितं सङ्केतावश्यकत्वं द्रढयति — तत्र तावदिति। 'तत्र तावत्' तथा सतीत्यर्थः। समयग्रहे सङ्केतग्रहे। सङ्केतग्रहसहकृतः

---

पाठ. १. अन्यथा तु–मधु.। २. ग्रह न पठ्यते – मधु. ख.। ३. बोध-तीति – ख.। ४. सर्वं प्रतिपन्नम् – मधु.। ५. जातावेव वा – मधु. ख.। ६. वेति – मधु.।

---

१. अन्यदा – मातृका। २. जातिगुणत्वादि – मातृका। ३. वैयाकरण° – मातृका।

व्यक्तिशक्तिवादिमतखण्डनम् —

ननु व्यक्तीनामर्थक्रियाकारित्वात् तत्रैव सङ्केतः किं न स्यादिति [1]चेत्, [2]तत्र पृच्छामः। किं सर्वासु व्यक्तिषु, [3]उतैकदेशे ? नाद्यः। आनन्त्यात्। नेतरः, इतरव्यक्तौ

---

**नौका**

एवं बहून् मतानुपश्रुत्य समा(सेन, अथ व्यासेनोपक्रमते। तत्र तावत् प्रथमं) व्यक्तिशक्तिवादी प्रत्यवतिष्ठते—नन्विति। आनयनादिरूपं यत् प्रयोजनं तद्रूपं कार्यमित्यर्थः। तत्रैव व्यक्तावेव। इदं न [1]समीचीन( मिति मनसिकृत्य विकल्प्य दूषयिष्यन् ) परिपृच्छति — तत्रेति। [2]व्यक्तिशक्तिपक्ष इत्यर्थः। व्यक्तिष्विति। सङ्केतग्रह इत्यनुकृष्यते। तत्राद्यं दूषयति — नाद्य इति। आनन्त्यात्। [3]व्यक्तीनामानन्त्यात्। तथा च व्यक्त्यानन्त्यात् शक्त्यानन्त्यं स्यादिति भावः।

---

**मन्दरः**

सङ्केतग्रहसहकारविशिष्टः। एतेन सङ्केतग्रहविलम्बाद् बोधविलम्ब इति ज्ञापितम्। यथा चक्षुरादीनां स्वस्वविषयबोधसामर्थ्यलक्षणशक्तौ सत्यामपि सन्निकर्षादिविलम्बात् तद्विलम्बः, तथा शब्दस्यापि सङ्केतग्रहव्यवधानाद् बोधव्यवधानमिति भावः। सङ्केतग्रहश्चेति। 'च'स्त्वर्थः। मतभेदेनेति। वैयाकरणमीमांसकनैयायिकसौगतमतानां भेदेन(इत्यर्थः).॥

नन्वित्यादिना चेदित्यन्तेन व्यक्तिशक्तिपक्षमुपन्यस्य 'पर्यायत्वप्रसङ्गः' इत्यन्तेन परिहरति—अर्थक्रियाकारित्वाद् आनयनादिक्रियाकारित्वात्। आन-

---

पाठ. १. चेन्मैवम्–मधु.। २. तत्रैव सङ्केत इत्यत्र–ख.। ३. °देशे वा – मधु.ख.।

---

१. समीचीन° – दादिसंपलिछति – मातृका। २. व्यक्तिशब्द° – मातृका।
३. व्यक्त्यानन्त्या – मातृका।

**गोव्यवहारदर्शनेन व्यभिचारात्। किञ्च व्यक्तिसङ्केतपक्षे 'गौः शुक्लश्चलो डित्थः' इत्यर्थभेदाभावेन पर्यायत्वप्रसङ्गः ॥**

---

### नौका

द्वितीयं निराचष्टे — नेतर इति। इतरव्यक्तौ असङ्केतितव्यक्तौ। व्यभिचारादिति। सङ्केतितार्थ[1]व्यतिरिक्तेऽपि गोव्यवहारे व्यभिचारः, एकस्यां व्यक्तौ सङ्केताङ्गीकारे असङ्केतिते गवि गोव्यवहारो न स्यात्, स्याद् यदि असङ्केतितत्वाविशेषेण अश्वादावपि स्यादिति व्यभिचार इत्यर्थः। व्यक्तेः सङ्केतितार्थत्वे दूषणान्तरमाह — किञ्च व्यक्तीति। डित्थ इति। अत्रेति शेषः। अर्थभेदाभावेनेति। सर्वत्र व्यक्तावेव शक्तिस्वीकारादिति भावः। पर्यायत्वप्रसङ्ग इति। न चेष्टापत्तिः। तथा सति सर्वत्र व्यक्तिः व्यक्तिरित्येव व्यवहारः स्यात्, न तु जातिगुणादीनाम्। [2]जातिर्गुण इत्यादि विभक्तव्यवहारः (न) स्यादिति व्यक्तिशक्तिरयुक्तेति भावः॥

---

### मन्दरः

यनादिकार्योपयुक्तत्वादिति यावत्। अयं भावः — 'गामानय, सर्पोऽयम्, निवर्तस्व'इत्यादि वाक्येषु उत्तमवृद्धेनोदीरितेषु मध्यमवृद्धस्य गवानयनादिकं पश्यन् बालो व्यवहारविषयीभूतायां व्यक्तावेव शक्तिं गृह्णाति, न तु जात्यादावतद्विषय इति तत्रैव सङ्केतः समुचित इति। एवं चेत् तर्हि पृच्छाम इत्यालङ्कारिकः पृच्छति — किमिति। तत्राद्यं परिहरति — नाद्य इति। तत्र हेतुं प्रतिपादयति — आनन्त्यादिति। आनन्त्यं व्यक्तिबाहुल्यम्। अयं भावः — सर्वाश्च व्यक्तयः सर्वाकारेण अर्थश्चेद् एकैकस्यां व्यक्तौ शब्दप्रयोगासम्भवेन सर्वासु व्यक्तिषु प्रत्येकं शक्तिग्रहे वाच्ये सत्यानन्त्यात् तदसम्भवेन व्यक्तीनामुपस्थित्यसम्भवेन च व्यक्तिग्रहासम्भवात् सामान्यप्रत्यासत्तौ च मानाभावाच्च सर्वास्विति विकल्पो नावकल्पत इति। द्वितीयं परिहरति — नेतर इति। तत्र हेतुं दर्शयति — इतरव्यक्ताविति। असङ्केतितव्यक्तावित्यर्थः।

---

१. °व्यतिरिक्तेनापि – मातृका। २. जातिगुण इत्यादिविभक्ते व्यव° – मातृका।

नैयायिकमतम् --

या तु [1]व्यक्तिः स्वसमानव्यक्त्यन्तरबाहुल्यरहिता, यथा आकाशव्यक्तिः, सा तादृशी व्यक्तिरेव शब्दार्थोऽस्तु, आनन्त्यव्यभिचारदोषाभावात् । इतरास्तु व्यक्तयो जात्यालिङ्गिता एव शब्दार्थः ।

नौका

नैयायिकमतमाह — [1]या तु स्वसमानेत्यादिना प्राहुरित्यन्तेन । या व्यक्तिः । तादृशी व्यक्त्यन्तररहिता सती । व्यक्तिरेव, न तु जातिरि'त्येव'-कारार्थः । ननु व्यक्तेः शब्दार्थत्वे आनन्त्यादिदोष उक्त एवेत्यत आह — आनन्त्येत्यादि । व्यक्तेराकाशादेरेकत्वादिति भावः । किं [2]सर्वत्रेत्थम् ? नेत्याह—[3]इतरास्त्विवति । समानव्यक्त्यन्तररहितास्त्वित्यर्थः । जात्या[4]लिङ्गिता जातिविशिष्टा एव । ननु प्रत्येकमेव जातिव्यक्त्योः शक्तिरास्ताम्, किं मिलितयोरित्यत आह — केवलजातेरिति । अर्थक्रियाशून्यतया अर्थक्रिया-कारित्वशून्यतया । व्यभि[5]चारादीत्यादिशब्देन पूर्वोक्तपर्यायत्वप्रसङ्गसङ्ग्रहः ।

मन्दरः

अयमाशयः — यद्येवं तर्हि शक्तिग्रहस्य कारणत्वसिद्धिः, शक्तिग्रहविषयस्यापि शाब्दबोधविषयत्वसम्भवाद् गोपदादिकाद(प्य)श्वादिभानप्रसङ्गश्चेति । दोषा-न्तरमाह — किञ्चेति । अयं भावः — जातिगुणक्रियाद्रव्यत्वेन विषयविभागा-भावात् पाणिहस्तादिवत् पर्यायता चेति । तस्मात् व्यक्तिसङ्केतपक्षोऽनुपपन्न इत्याकूतम् ॥

नैयायिकाः समादधते — या त्विति । केवलजातेरिति । अर्थक्रियाभि-रानयनादिभिः शून्यतया । केवलव्यक्तेरिति । आनन्त्येति । पर्यायत्व-'मादि'शब्दार्थः । 'मिलितयोः' जात्यालिङ्गितव्यक्तेरित्यर्थः । 'प्रवृत्तिनिमित्तत्वं' शब्दप्रवृत्तिनिमित्तत्वमित्यर्थः । उपपद्यते उपपन्नं भवति । जातेरनुगतत्व-सम्पादकत्वात् व्यक्तेः पुरुषप्रवृत्तियोग्यत्वाच्च आनन्त्यादिदोषगन्धाभावादिति

पाठ. १. न पठयते – नौका ।

१. या तस्य समानेत्यादिना – मातृका । २. सर्वतेत्थं – मातृका । ३. इत-रेस्त्विवति – मातृका । ४. °लिङ्गितात् जातिविशिष्ट एव – मातृका । ५. °चारा-दित्यादि° – मातृका ।

केवलजातेरर्थक्रियाशून्यतया पुरुषप्रवृत्तियोग्यत्वाभावात् [1]केवलव्यक्ते-रानन्त्यव्यभिचारादिदोषग्रस्तत्वाच्च[2] प्रत्येकमसङ्केतार्हत्वेऽपि मिलितयोः प्रवृत्तिनिमित्तत्वमुपपद्यते। उक्तविधया विशिष्टस्यैव शब्दार्थत्वे [3]प्रामाणिके गौरवमपि न दोषमावहति। [4]ततो जात्या-[5]लिङ्गिता व्यक्तिः शब्दार्थ इति नैयायिकाः प्राहुः॥

---

**नौका**

प्रवृत्तिनिमित्तत्वं गवादिशब्दप्रवृत्तिनिमित्तत्वम्। उपपद्यत इति। व्यक्तीनां पुरुषप्रवृत्तियोग्यत्वात् जात्या सर्वासां क्रोडीकारेणैक्यसम्भवेनानन्त्याद्यभावाच्चेति भावः। ननु जातिविशिष्टस्य शक्यत्वे गौरवं स्यादित्यत आह—उक्तविधयेति। प्रामाणिके अनुभवसिद्धे। न दोषमिति। प्रामाणिकत्वादिति भावः। उपसंहरति—अत इति॥

सौगतमतमाह — बाह्याः पुनरिति। क्षणिकत्वादिति। यत् सत् तत् क्षणिकमिति व्याप्तेरिति भावः। ननु व्यक्तीनां सङ्केतानर्हत्वेऽपि जातौ

---

**मन्दरः**

भावः। ननु विशेषणे विशेष्ये वा शक्त्या भाव्यम्, विशिष्टे तु गौरवं भवेदित्याशङ्क्याह—उक्तविधयेति। विशिष्टस्यैव जात्यालिङ्गितव्यक्तेरेवेत्यर्थः। न विशेषणस्य, न विशेष्यस्य वेत्यवधारणार्थः। शब्दार्थत्वे सति। प्रामाणिके प्रमाणसिद्धे। अप्रमाणिके लाघवस्याप्यनुचितत्वादिति भावः। नैयायिकमतमुपसंहरति — तत इति। एतदग्रे 'यदप्युक्तं नैयायिकैः' इत्यादिनानूद्य निराकरिष्यति॥

मतान्तरमाह — बाह्या इति। बाह्याः पुनः बौद्धास्तु। सर्वस्य समस्तवस्तुजातस्य क्षणिकत्वात् नश्वरत्वात्। कल्प्यमानस्येति। 'जातिः

---

पाठ. १. केवलेति न पठ्यते – ख.। २. 'च' न पठ्यते – मधु। ३. प्रामाणिकं – मधु.। ४. तदा – ख.। ५. °लिङ्गितव्यक्तिः – मधु.।

सौगतमतम् --

बाह्याः पुनः क्षणिकत्वात् सर्वस्य, सामान्यस्यापि कल्प्यमानस्य तथात्वेन '[1]अन्यापोहः शब्दसङ्केतनिकेतनम्' इत्याहुः ॥

वैयाकरणमतम् -

शाब्दिकास्तु जात्यादिचतुष्टयमपि यथायथं प्रवृत्तिनिमित्तमा-[2]चक्षते । उक्तं च भाष्यकारैः — 'गौः शुक्लश्चलो डित्थः इति

---

नौका

सङ्केतः किं न स्यादत आह – सामान्यस्यापीति । 'अपि'श्चार्थे । अन्यस्य व्यक्तिभिन्नस्य तुच्छत्वेन असत्त्वेन । तथा च व्यक्तेर्जातेर्वा न शब्दार्थतेति भावः । तर्हि कस्य शब्दार्थतेत्यत आह—तस्यापोह इति । अपरभेद इत्यर्थः । [1]शब्दसङ्केतनिकेतनं शब्दशक्तिस्थानम् ॥

वैयाकरणमतमुपन्यस्यति --- शाब्दिकास्त्वति । जा[2]त्यादीत्यादिना गुणक्रियाद्रव्याणि गृह्यन्ते । प्रवृत्तीति । शब्दस्येत्यादिः । शाब्दिकमते भाष्यकृत्संवादमाह — उक्तं चेति । नन्वास्तां नाम जात्यादीनां प्रवृत्ति-निमित्तता; जात्यादिवाचकाः के, किं वा जात्यादिकम् , इत्यपेक्षायां

---

मन्दरः

कल्पिते'ति तन्मतसमयः । तथात्वेन क्षणिकत्वेन । अन्यापोहः इतरव्यावृत्तिः । शब्दसङ्केतनिकेतनं शब्दशक्त्याश्रयः । शब्दार्थ इति यावत् । एतदपि 'यदुक्तं बाह्यै'रित्यादिनानूद्य परिहरिष्यति ॥

---

पाठ. १. अन्यापोहं सङ्केतनिकेतनमाहुः – मधु., अन्यस्य तुच्छत्वेन तस्यापोहः – नौका । २. सूचुः – मधु. ।

---

१. शब्दसङ्केतनं – मातृका । २. °त्यादित्यादिना – मातृका ।

[1]'चतुष्टयी शब्दानां प्रवृत्तिः'इति। तत्र गवादयः शब्दा जातिवाचकाः। जातिर्नाम भिन्ने[2]ष्वनुगतबुद्ध्यालम्बनभूतस्त[3]त्प्रमाणको वस्तुनः प्राणदो धर्मः। उक्तं हि वाक्यपदीये — 'गौः स्वरूपेण न गौर्नाप्यगौः[4], गोत्वाभिसम्बन्धाद् गौः'इति। शुक्लादयः

---

**नौका**

तन्मतेनैव तदेतद् विशदयति — 'तत्र गवादय' इत्यादिना। तत्र शाब्दिकमते। जातिस्वरूपमाह — जातिर्नामेति। भिन्नेषु विलक्षणेषु गवादिपिण्डेषु। तत्प्र[1]माणकः अनुगतबुद्धिप्र[2]माणकः। वस्तुनः पदार्थस्य प्राणप्रद इव प्राणप्रदः। जातिं विना वस्तुनः स्वरूपमेव न सिद्ध्यतीत्यर्थः। धर्मो नैसर्गिको धर्मः। जातेः प्राणप्रदत्वे सम्मतिमाह — उक्तं होति। स्वरूपेण पिण्डमात्रेण (न) गौः गौरिति व्यवहर्तुं न शक्यते। अतिप्रसङ्गात्। नाप्यगौरिति। व्यवहर्तुं न शक्यते, अगोव्यावृत्तत्वात्। अतो गोत्वजातियोगादेव पदार्थस्वरूपलाभ इत्यर्थः। 'अगौः'इत्यत्र[3] टच्[1] न सम्भवति, 'नञस्तत्पुरुषात्' (पा. ९.४.७१) इति निषेधात्। गुण[4]वाचकानाह-शुक्लादय

---

**मन्दरः**

वैयाकरणमतमाह — शाब्दिकास्त्विवति। 'यथायथं जातिगुणक्रियाद्रव्यभेदेनेत्यर्थः। एतन्मतस्य बहुसम्मतत्वात भाष्यकृतसम्मतिमाह — उक्तं चेति। गौरिति। चतुष्टयी चतुर्विधा। तत्रेति। चतुर्विधेषु शब्देषु (इत्यर्थः)। 'गवादिशब्दाः' अश्वादि'रादि'शब्दार्थः। जातिस्वरूपं

---

पाठ. १. चतुष्टयी हि – मन्दर। २. भिन्नेष्वर्थेषु – अनुगत° – मधु. ख.। ३. °'त्प्राणदो धर्मः' इत्येव – मधु.। ४. किन्तु – गोत्वा° – मन्दर।

---

टिप्प. 1. 'गोरतद्धितलुकि' (पा. ५.४.९२) इत्यनेन विहितसमासान्त इत्यर्थः।

---

१–२. °माणकं – मातृका। ३. °त्यत्र वचनं न सम्भवति – मातृका। ४. वाचकानां शुक्ला – मातृका।

शब्दा गुणवाचकाः। गुणो नाम लब्धसत्ताकस्य विशेषाधायको रूपादिधर्मः। पाकादयः शब्दाः क्रियावाचकाः। क्रिया नाम पूर्वापरीभूतावयवो धर्मः। डित्थादयः शब्दा द्रव्यवाचकाः। द्रव्यं

---

नौका

इति। गुणस्वरूपमाह -- [1]गुणो नामेति। लब्ध[2]सत्ताकस्य उत्पन्नस्य। विशेषाधायक इति। यतो हि शुक्लादिकमन्तरेण वस्तुनो विशेष एव न सिद्ध्येदित्यर्थः। एतेन उत्पन्नस्य वस्तुनः पश्चात् गुणेन विशेष इति जाति-गुणयोः महान् भेद इति सूचितम्। क्रियावाचकानाह -- पाकादय इति।

---

मन्दरः

निरूपयति — जातिर्नामेति। भिन्नेषु अन्योन्यविलक्षणेषु व्यक्तिविशेषेषु। (अनुगतेति)। अनुगतबुद्धेरनुगतत्वबुद्धेः। तत्प्रमाणकोऽनुगतत्वबुद्धि-प्रमाणकः। वस्तुनः व्यक्तिरूपपदार्थस्य प्राणप्रदः प्राणप्रदतुल्यत्वात् स्वरूप-लाभहेतुरित्यर्थः। तत्र 'हरि'सम्मतिमाह — उक्तं हीति। गौरिति। स्वरूपेण व्यक्त्यात्मना स्वलक्षणेन न गौः। गोत्वजात्यनाक्रान्तत्वात् सर्वस्यापि गोव्यवहारप्रसङ्गाच्चेति भावः। नाप्यगौः। महिषत्वादिजात्यन्तरानालिङ्गित-त्वादिति भावः। किन्तु गोत्वाभिसम्बन्धादेव गौरिति। तस्य तत्प्राणप्रदत्वा-दिति भावः। एवं जातिं निरूप्य गुणं निरूपयति — शुक्लादय इति। नीलपीतादय 'आदि'शब्दार्थः। गुण इति। लब्धा सत्ता सद्भावो येन तस्य। विशेषाधायको वैलक्षण्यसम्पादकः। यतो जात्या लब्धसत्ताकं वस्तु शुक्लादिना व्यावर्त्यते, ततो विशेषाधायकत्वं रूपस्येति भावः। क्रियास्वरूपं निरूपयति— पाकादय इति। गमनादय 'आदि'शब्दार्थः। क्रियेति। पूर्वापरीभूताः पौर्वापर्येण वर्तमानाः अवयवाः स्वावयवकलपाः चुल्लिसम्मार्जनाद्यवश्रयणान्ताः

---

१. गुणानामिति – मातृका। २. °सप्ताकस्य – मातृका।

नाम वक्त्रा यदृच्छया डित्था[1]दिषूपाधित्वेन निवेशितं डित्थादि-शब्दानामन्त्यवर्णबुद्धिनिर्ग्राह्यं संहृत[2]क्रमं स्वरूपम् ।

नन्वानन्त्यव्यभिचारभिया व्यक्तिसङ्केतं विहाय जात्यादौ सङ्केतः स्वीकृतः । तत्र जातेरनुवृत्तत्वेऽपि गुणक्रिया-

---

नौका

क्रियास्वरूपमाह -- क्रिया नामेति । पूर्वापरीभूतः अधिश्रयणाद्यवयवो यः [1]तत्स्वरूपधर्मः । द्रव्यवाचकानाह -- डित्थादय इति । द्रव्यस्वरूपमाह — द्रव्यं नामेति । अन्त्यवर्णेत्यादि । अन्त्यवर्णबुद्ध्या निरन्तरं ग्राह्यं पूर्वपूर्ववर्णबुद्ध्या त्वीषद् ग्राह्यम् । अन्त्यबुद्धावीषत्परावबोधनात् संहृतक्रमं स्फोटस्यैकत्वाद्वा संहृतक्रमं स्वरूपं, स्फोटरूपं द्रव्यमित्यर्थः ॥

ननु गवादिशब्दानां जातिवाचकत्वमास्तां नाम, जातेरेकत्वेनानुगतत्वात् । शुक्लादिशब्दानां तु गुणवाचकत्वं न सङ्गच्छते शुक्लादिगुणानां

---

मन्दरः

यस्य स तथोक्तः । द्रव्यस्वरूपं निरूपयति -- डित्थादय इति । देवदत्त-यज्ञदत्तचैत्रमैत्रादय 'आदि'शब्दार्थः । द्रव्यमिति । वक्त्रा व्यवहर्त्रा यदृच्छया निर्बन्धनतया । डित्थादिषु, अर्थेष्विति शेषः । उपाधित्वेन शक्तिग्रहोपाधित्वेन निवेशितं प्रयुक्तं डित्थादिशब्दानामन्त्यवर्णबुद्ध्या निर्ग्राह्यम् । पूर्वपूर्ववर्णैरस्फुटग्राह्यमिति भावः । तत्र अभिव्यञ्जकवर्णानां क्रमवत्त्वेऽपि न स्वयं क्रमवदित्याह -- संहृतक्रममिति । संहृत उपसंहृतः । अविद्यमान इति यावत । क्रमो यस्य तत । स्वरूपं डित्थादिस्वरूपम् ॥

---

पाठ. १. दिष्वर्थेषूपा° – मधु. ख. । २. °क्रमस्वरूपम् – मधु. ख.

---

१. तत्त्वरूप° – मातृका ।

[1]यदृच्छाशब्दानामनुवृत्तत्वाभावात् स दोषस्तदवस्थ इति चेन्मैवम्। गुणादीनामप्येकैकत्वाङ्गीकारात्। शुक्तिस्फटिकादिषु शुक्लगुणस्य भेदेन प्रतीति[2]स्तु भ्रान्तिरेव। दृश्यते हि बहुतरङ्गेषु प्रतिबिम्बि-

---

**नौका**

प्रतिव्यक्तिभिन्नत्वेन अननुगत(त)या आनन्त्यादिदोषानिस्तरणादित्याशयेन शङ्कते — नन्विति। [1]जातेरिति। एकत्वेनेति शेषः। यदृच्छाशब्दानामिति। यदृच्छा द्रव्यम्। अनुवृत्तत्वाभावादिति। प्रतिव्यक्तिभिन्नतया ऐक्याभावादिति भावः। स दोष आनन्त्यादिदोषः। स्यादेतदेवं गुणादीनां भिन्नत्वे, तदेव नेति समाधत्ते — मैवमिति। अङ्गीकारादिति। तथा चाहुः — 'कर्मैकं जातिरप्येका [2]जगत्येकः स्थितो गुणः' इति। ननु स्फटिकादिषु

---

**मन्वरः**

ननु जातेरेकत्वादनुगतत्वेऽपि गुणादीनामनेकत्वेनानुगतत्वाभावात् 'घटस्य शुक्लः' 'पटस्य शुक्लः' 'गुडस्य पाकः' 'तण्डुलानां पाकः' 'डित्थस्य यदृच्छा' 'डवित्थस्य यदृच्छा' इत्यानन्त्यादिदोषापरिहार इत्याशयेन शङ्कते — नन्वित्यादिना चेदित्यन्तेन। 'अनुवृत्तत्वाभावात्', शुक्लादीनां व्यक्तिभिन्नत्वेनानुगतत्वाभावादित्यर्थः। स पूर्वोक्तो दोष आनन्त्यादिः। सा अवस्था यस्य स तथोक्तः। व्यक्तिसङ्केतपक्ष इवास्मिन् मतेऽप्यानन्त्यादिदोषोऽपरि[3]हार्य इति भावः। परिहरति — मैवमिति। गुणादीनामपीति। अयं भावः — 'गुणक्रियायदृच्छाधाराणां भेदाद् गुणादीनां भेद इव लक्ष्यते। वस्तुतो न न भेदस्तेषामैकरूप्यमेव स्वभावो, भेदस्त्वौपाधिक' इति। अत्र 'अपि' शब्देन जातेरिव गुणादीनामप्येकत्वमिति ज्ञाप्यते। तत्र गुणस्यैकत्वं

---

पाठ. १. यदृच्छाना° – इत्येव – नौका। २. 'तु' न पठ्यते – मधु. ख.

---

१. जातात् – मातृका। २. जगत्वेकस्थितो – मातृका। ३. °हारः – मातृका।

तस्य रवेरेकस्यापि तत्तदाश्रयभेदेन भेदाध्यारोपः । [1]तदेवं जात्यादि-चतुष्टयमपि यथायथं प्रवृत्तिनिमित्तमिति स्थितम् ॥

मीमांसकमतम् (ग्रन्थकर्तुरभिप्रेतम्) —

अन्ये पुनरुक्तपक्षेष्वपरितुष्यन्तः सर्वत्रापि जातिरेव प्रवृत्तिनिमित्तमिति मन्यन्ते । अपरितोषश्चेत्थम् —

---

**नौका**

प्रतीयमानस्य शुक्लादिभेदस्यापलपितुमशक्यतया कथमेकत्वं शुक्लादीनामित्यत आह — शुक्तिस्फटिकादिष्विति । भ्रान्तिरेवेति । तथा च भेदप्रतीतिर्भ्रमतया न प्रमाणमिति भावः । भेदप्रतीतेर्भ्रमत्वे दृष्टान्तमाह — दृश्यते हीति । इयता प्रबन्धेनोपपादितं शाब्दिकमतमुपसंहरति — तदेवमिति ॥

जातिमात्रशक्तिवादिनां मीमांसकानां मतमाह — अन्ये पुनरिति । इत्थमिति । वक्ष्यमाणरीत्येत्यर्थः ॥

---

**मन्दरः**

दर्शयति — शुक्तीति । भ्रान्तिरेव । वस्तुतः शुक्लगुणस्यैकत्वादिति भावः । तत्र दृष्टान्तमाह — दृश्यते हीति । एवमेव गुडतण्डुलादिपाकक्रियाया डित्थादिनिष्ठस्वरूपस्य चैकत्वमूह्यम् । निगमयति — तस्मादिति । एवम् उक्तप्रकारेण । स्थितं स्थितिः ॥

सम्प्रति स्वाभिमतं मतमाह—अन्ये पुनरिति । पारिशेष्यान्मीमांसकास्त्वित्यर्थः । सर्वत्रापीति । गवादिशब्देष्विव शुक्लादिशब्देष्वपीत्यर्थः ॥

---

पाठ. १. तस्मादेवं – मातृका ।

**वैयाकरणमतनिरासः --**

**न तावज्जात्यादिचतुष्टयं यथायथं [1]प्रवृत्तिनिमित्तम् । वैविध्यापत्तेः । एकस्या एव जातेः प्रवृत्तिनिमित्तत्वे सम्भवति तद्वैविध्याभ्युपगमा[2]योगात् । तथा च गवादिशब्दानां गोत्वादौ सङ्केतः ।**

---

नौका

(न तावदिति) । '[1]वैविध्यापत्तेः' जातिगुणभेदेन [2]वैविध्यापत्तेरित्यर्थः । नन्वगत्या स्वीकार्यं स्यादत आह — एकस्या एवेति । [3]तद्वैविध्येति । तेषां निमित्तानां [4]वैविध्येत्यर्थः । शरीरभेद[5]सिद्धाविति । [6]परिमाणभेदेन

---

मन्दरः

अपरितोषप्रकारं दर्शयति — न तावदिति । तत्र हेतुं प्रतिपादयति — प्रवृत्तिनिमित्तस्येति । वैविध्यं नानात्वं तस्यापत्तेरापादनात् । प्रवृत्तिनिमित्तनानात्वमनुपपन्नमिति भावः । तर्हि तद्वैविध्यापगमोपायः क इत्यत्राह— एकस्या इति । सम्भवति सति । तद्वैविध्याभ्युपगमस्य प्रवृत्तिनिमित्तनानात्वाङ्गीकारस्यायोगोऽसम्भवः, तस्मात् । सर्वत्र जातिरेव प्रवृत्तिनिमित्तं चेत्, तद्वैविध्यमपसरतीति भावः । एवं सर्वत्र जातिरेव प्रवृत्तिनिमित्तमिति प्रतिपाद्य तत्समयोपपादनपूर्वकं निगमयति — तथा चेति । ननु जातिगुणक्रियावाचकेषु तत्तद्बाहुल्यादस्तु जातिः, डित्थादीनामेकैकत्वात् कथं तत्र जातिरित्याशङ्क्य समाधत्ते -- डित्थादीनामिति । अयं भावः — 'परिमाणभेदेन द्रव्यभेदाङ्गीकारादुपचयापचयाभ्यां शरीराणां प्रतिक्षणभिद्यमानतया डित्थत्वादिरपि जातिरेव'इति । 'तत्रापि' द्रव्यादिस्थलेऽपीत्यर्थः ।

---

पाठ. १. प्रवृत्तिनिमित्तस्य वैविध्या° – मन्दर, प्रवृत्तिनिमित्तवैविध्या° – मधु ।
२. °योगाच्च – मधु ।

---

१–२. द्वैविध्या° – मातृका । ३. तद् द्वैवि° – मातृका । ४. द्वैविध्ये° – मातृका । ५. °सिद्धापीति – मातृका । ६. परिमाणेत्यारभ्य सङ्केतानर्हत्वारित्यन्तो भागः द्विरावृत्तो मातृकायाम् ।

शुक्लादीनां शुक्लत्वादौ । [1]पाकादीनां पाकत्वादौ । डित्थादीनां वैशेषिकादिमतेनाहरहः शरीरभेदसिद्धौ तत्रापि डित्थत्वादावेवेति युक्तम् ॥

**सौगतमतनिराकृतिः—**

यदुक्तं बौद्धैः—'सर्वस्य क्षणिकत्वात् सामन्यस्यापि कल्प्यमानस्य तथात्वादन्यापोहः शब्दार्थः' इति । [2]तदसत् ।

---

**नौका**

द्रव्यभेदाङ्गीकारादिति भावः । तत्रापि डित्थादिशब्दस्थलेऽपि । डित्थ[1]त्वादावेवेति । सङ्केत इत्यनुषज्यते । आदिना चैत्रत्वादेः परिग्रहः ॥

सौगतमतमपाकर्तुमनुभाषते — यदुक्तमित्यादिना । अतथात्वात् सङ्केतानर्हत्वात् । मानाभावादिति । 'यत् सदि'त्यादिव्याप्तेर्निर्युक्तिकत्वादिति भावः । [2]प्रत्युत स्थायित्वमेव सिद्धमित्याह — [3]प्रत्यभिज्ञयेति ।

---

**मन्दरः**

डित्थत्वादावेवेति । सङ्केत इत्यनुवर्तते । मम्मटपादैस्तु – यदृच्छाशब्दस्थले बालवृद्धशुकाद्युदीरणभेदाच्छब्दगता बाल्ययौवनाद्यवस्थाभेदसंसिद्धपरिमाणवैलक्षण्यवशाद् द्रव्यभेद इत्यर्थगता च जातिरस्तीति मतभेदेनाङ्गीकृता (का.प्र. २-८)। धर्मसूरिणा त्वर्थगतैवेति वेद्यम् ॥

---

पाठ. १. पच्यादीनां पाचकत्वादौ – ख. पाकादिशब्दानां – मधु. । २. तदयुक्तम् – मधु. ।

---

१. आवापेवेति (आदावेवेति) – मातृका । २. प्रस्तुतस्थायित्व° – मातृका । ३. प्रत्यभिज्ञायेति – मातृका ।

**सर्वस्यापि[1] क्षणिकत्वे मानाभावात् । प्रत्यभिज्ञया स्थायित्वसिद्धेश्च । न चान्यापोहस्य शब्दार्थता । घटप्रतीतौ तदपोहरूपाघटप्रतीतिः । तत्प्रतीतौ तदपोह[2]रूपघटप्रतीतिरिति परस्पराश्रयत्वप्रसङ्गात् ॥**

---

### नौका

'सोऽयं घटः' इत्यादि[1]प्रत्यभिज्ञया । अन्यापोहस्य शब्दार्थतां वारयति — न चेति । तत्र बाधकमाह — घटप्रतीताविति । अभावज्ञानस्य स्वप्रतियोगिज्ञान-जन्यत्वनियमेन घटज्ञानमन्तरेण घटभेदरूपस्य अघटस्य प्रतीतिर्न सम्भवति, घटेतरज्ञानं विना च घटेतरभेदस्वरूपस्य घटस्य ज्ञानं न सम्भवतीत्येतदन्योन्या-श्रयः स्यादित्यखण्डार्थः ॥

---

### मन्दरः

एवं मीमांसकमतं सर्वोत्तरत्वेन प्रतिपाद्य सौगतमतमपाकर्तुमनुवदति — यदुक्तमिति । परिहरति—तदसदिति । असत्त्वे हेतुं प्रतिपादयति—सर्वस्या-पीति । 'मानाभावात्' अनुभवाभावादित्यर्थः । प्रत्युत स्थायित्वं च सिद्ध्यतीत्याह — प्रत्यभिज्ञयेति । 'सोऽय'मित्याकारयेत्यर्थः । अनिष्टान्त-रमाह — घटप्रतीताविति । घटस्य प्रतीतौ ज्ञाने तदपोहस्तद्भेदो रूपं यस्याः सा तथोक्ता । अघटस्य घटेतरस्य प्रतीतिः. अपेक्षितेति शेषः । तत्प्रतीतौ च घटेतरज्ञाने तु तदपोहरूपा घटेतरभेदरूपा घटप्रतीतिरपेक्षितेति । अयं भावः—'इतरभेदस्य शब्दार्थत्वेन घटज्ञाने घटेतरज्ञानस्य घटेतरज्ञाने घटज्ञानस्य च विषयत्वापेक्षावशादन्योन्याश्रयः' इति ॥

---

पाठ. १. अपिर्न पठ्यते – मधु. ख. । २. रूपा घटप्रतीति° – मन्दर ।

---

१. प्रत्यभिज्ञाया – मातृका ।

**नैयायिकमतप्रत्याख्यानम् --**

यदप्युक्तं नैयायिकैः — 'जात्यालिङ्गिता व्यक्तिः शब्दार्थः' इति । तत्र ब्रूमः । सर्वो हि धर्मी [1]प्रातिस्विकेन [2]सामान्येन वा केनचिद्धर्मेण घटितो वेद्यते । गोव्यक्तिश्च न गोशब्दात् प्रातिस्विक-धर्मघटिता प्रतीयते । न हि प्रत्यक्षेणेवान्योन्यविलक्षणज्ञानं शब्दाद्

---

नौका

नैयायिकमतमनुवदते[1] — यदप्युक्तमिति । 'जातिविशिष्टे शक्ति'-वादिनां जात्यंशशक्तेरावश्यकतया तत्रैव [1]शक्तिः, व्यक्तौ न तु विशिष्ट इति तत्पक्षो न युक्त इत्याशयेनाह — तत्र ब्रूम इति । जातिशक्तिं साधयितुं प्रथमं वस्तुस्थितिमाह — सर्वो हीति । अस्तु प्रस्तुते किमायातं तत्राह -- गोव्यक्तिश्चेति । प्रातिस्विकधर्मेणेति । वेद्यत्वे हेतुमाह -- न हीति । हि

---

मन्दरः

नैयायिकमतमपाकर्तुमाह -- यदप्युक्तमिति । अत्र 'अपि'शब्देन एतदपि बाह्यमतवदसमञ्जसमिति सूचितम् । तत्रेति सर्व इति । प्रातिस्विकेन विशेषणेन । वेद्यते ज्ञायते हि । विशिष्टज्ञानं विशेषणज्ञानजन्यमिति नियमाद् विशेषणभूतधर्मघटितः सन्नेव धर्मी ज्ञायत इति सर्वानुभव इति भावः । भवतु, किं तत इत्याशङ्क्य विशेषाकारेणाह — गोव्यक्तिश्चेति । 'च'स्त्वर्थः । इदं व्यक्तिमात्रोपलक्षणम् । गोशब्दात् गोशब्दोच्चारणात् । गोव्यक्तिः प्रातिस्विक-

---

पाठ. १. प्रातिस्विकधर्मेण – नौका । २. केनचिद्धर्मेण सामान्येन वा घटितो – मधु. ।

---

टिप्प. 1. अनुवदतीत्येव युक्तम् । अकर्मकादेव वदेरनुपूर्वादात्मनेपदित्वनियमात् ।

---

१. शक्तिव्यक्तौ – मातृका ।

**भवति । किन्त्वाकृति[1]धर्मिकतयैव । [2]ततश्च 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायेन विशेषणभूता जातिरेव शब्दार्थः ॥**

---

नौका

यस्मात् । 'ने'त्यस्य भवतीत्युत्तरेणान्वयः । आकृतिधर्मकतयैवेति । जातिपुरस्कारेणैवेत्यर्थः । तथा च सति जातौ [1]शक्तिः सिद्धेत्याह — ततश्चेति । अभिधा शब्दशक्तिः ॥

---

मन्दरः

धर्मघटिता नैल्यारुण्यादिविशेषणधर्मसहिता न प्रतीयते । तत्र हेतुमाह — न हीति । अन्योन्यविलक्षणज्ञानं परस्परवैलक्षण्यज्ञानम् । हिर्हेतौ । यथा व्यक्तिदर्शनान्नीलारुणादिवैलक्षण्यज्ञानं भवति, तथा शब्दोच्चारणान्न स्यादित्यर्थः । ततः शब्दात् प्रातिस्विकधर्मघटिता न प्रतीयत इति योज्यम् । तर्हि कथं प्रतीयत इत्यत्राह — किन्त्विति । आकृतिर्जातिधर्मो यस्याः सा तथोक्ता, तस्याः भावस्तत्ता तया, जातिघटिततयैवेत्यर्थः । 'गोव्यक्तिः' 'शब्दात्' 'प्रतीयत' इति पदत्रयमनुवर्तते । गोशब्दोच्चारणात् गोव्यक्तिः गोत्वघटितैव प्रतीयत इत्यर्थः । अस्तु किं ततः इत्यत्राह–ततश्चेति । विशेष्यमिति । 'अभिधा मुख्यार्थाभिधायिनी शक्तिः विशेषणे जातौ क्षीणशक्तिः समाप्तसामर्थ्या सती विशेष्यं न गच्छेत् विशेष्यभूतां व्यक्तिं स्प्रष्टुं न शक्नुयात्' इति तान्त्रिकोक्तप्रक्रियया विशेषणभूता जातिरेव शब्दार्थो, मुख्यार्थ इत्यर्थः । अत्र अवधारणेन 'जात्यालिङ्गितव्यक्तिः शब्दार्थ' इति मतमपास्तमिति बोध्यम् ॥

---

पाठ. १. धर्मकतयैव – नौका. मधु., धर्मत एव – ख. । २. तथा च – मधु. ।

---

१. शक्तिसिद्धेत्याह – मातृका ।

जातेरुपलक्षणत्वनिरासः—

न च जातेरुपलक्षणत्वं शङ्कनीयम्। धर्मिणि [1]धर्मान्तर-व्यावृत्ततया प्रतीते धर्मान्तरं प्रतीयमानमुपलक्षणम्। यथा गृहे

---

**नौका**

[1]'जातिस्तस्या उपलक्षणम्, न तूपलक्षणम्, अतो [2]'न शब्दार्थ' इति न वक्तव्यमित्याशयेनाह — न च जातेरिति। उपलक्षणस्वरूपपर्यालोचनया उपलक्षणत्वं जातेर्न सिद्ध्यतीत्युपलक्षणस्वरूपमाह—धर्मिणीति। धर्मान्तरेत्यादि। धर्मान्तरेण व्यावृत्त(त)येत्यर्थः। यथा [3]गृह इति। गृहत्वेन धर्मेण [4]गृहे

---

**मन्दरः**

ननूपलक्षणभूताया जातेः कथं विशेषणत्वं कथं वा शब्दार्थतेत्याशङ्क्य विशेषणोपलक्षणयोर्व्यावर्तकत्वसाम्येऽपि तस्यामुपलक्षणलक्षणं न लक्ष्यत इत्याह— न चेति। 'जातेः' विशेषणभूताया इति भावः। तर्ह्युपलक्षणं किँल्लक्षण-मित्याशङ्क्य विशेषणोपलक्षणयोर्वैलक्षण्यं लक्षयितुमुपलक्षणं लक्षयति — धर्मिणीति। धर्मिणि धर्मविशिष्टे कस्मिँश्चित् पदार्थे धर्मान्तरेण प्रतीयमानधर्मापेक्षयाऽन्येन धर्मेण व्यावृत्ततया धर्म्यन्तरभिन्नतया प्रतीते ज्ञाते सति प्रतीयमानं धर्मान्तरं व्यावर्तकधर्मादन्यो धर्मः उपलक्षणं भवतीति शेषः। नन्वेतादृग्लक्षण-लक्षितोपलक्षणशब्दार्थः क इत्यत्राह — यथेति। 'काकवद् देवदत्तगृहम्'इत्यत्र गृहे धर्मिभूते देवदत्तगृहे स्वनिष्ठोत्तृणत्वरूपधर्मेण यज्ञदत्तादिगृहभिन्नतया प्रतीते सति काकः प्रतीयमानधर्मतया उपलक्षणमित्यर्थः। एवँल्लक्षणलक्षितमुपलक्षणं लक्षयित्वा जातावुपलक्षणत्वं न लक्ष्यत इत्याशयेनाह — इह त्विति। अत्र 'तु'शब्देन वैलक्षण्यं ज्ञाप्यते। धर्मान्तरेण जात्यपेक्षयाऽन्येन धर्मेण।

---

पाठ. १. धर्मान्तरेण – ख.।

---

१. जाति – स्य विशेषणः – मातृका। २. निशब्दार्थः – मातृका। ३. गृहा-इति – मातृका। ४. गृहप्रतीते – मातृका।

प्रतीते काकः। इह तु न शब्दाद् व्यक्तेर्धर्मान्तरेण [1]पूर्वं व्यावृत्ततया प्रतीतिः। किन्त्वाकृति[2]धर्मिकतयैवेत्या[3]कृतिर्विशेषण-मेव॥

**अन्विताभिधानवादिमतदूषणम् --**

ननु कार्यान्वयो व्यक्तिमात्रस्येति सैव शब्दार्थ इति चेन्, न। आकृतिधर्मिकैव व्यक्तिरन्वयिनीत्याकृतावेवान्वयधीः। [4]न च

---

**नौका**

प्रतीते सति प्रतीयमानः काक उपलक्षणं भवतीत्यर्थः। जातेस्तु नैवं प्रतीति-रित्याह — इह त्विति। आकृतिधर्मिकतयैवेति। अत्र[1] 'इति' शब्दो हेत्वर्थः। विशेषणमेवेति। न तूपलक्षणम्। तल्लक्षणाभावादिति भावः। इत्थं च 'विशेष्यं नाभिधा गच्छे'दित्यादिन्या[2]येन जातेरेव शब्दार्थता युक्तेति भावः॥

---

**मन्दरः**

अयं भावः — शब्दोच्चारणात् जातिं विना केनचिद् व्यावर्तकधर्मेण प्रथमं व्यक्तेः प्रतीतिश्चेज्जातिरुपलक्षणीभवितुमर्हतीति। तर्हि केन धर्मेण व्यक्तिप्रतीतिर्भवती-त्यत्राह —किन्त्विति। 'आकृतिधर्मिकतयैव' जातिघटिततयैवेत्यर्थः। अत्र व्यक्तेः प्रतीतिरप्यनुवर्तते। अस्तु किं फलितमित्याह — इतीति। 'विशेष-णमेव' नोपलक्षणमित्यवधारणार्थः। 'विद्यमानत्वे सति व्यावर्तक'स्य विशेषणस्य अविद्यमानतया व्यावर्तकादुपलक्षणान्महद् वैलक्षण्यमिति भावः। तस्माद् 'विशेषणभूता जातिरेव शब्दार्थ' इति पर्यवसन्नम्॥

---

पाठ. १. न पठ्यते – मधु. ख.। २. °धर्मतयै° – मधु. ख.। ३. आकृति-धर्माविशेषणमेव (आकृतिधर्मविशेषणमेव)– ख.। ४. न चाकृतेर्निर्व्या-पारतया न क्रिया. – मधु. ख.।

---

१. अत इति – मातृका। २. सह येन – मातृका।

निर्व्यापाराया आकृतेर्न क्रियासाधनत्वयोग्यतेति न शब्दार्थतेति वाच्यम्। न हि [1]कारणत्वं व्यापारवत्त्वनियतम्। [2]व्यापारोत्पादे

नौका

ननु 'गामानये'त्यादौ सर्वत्र आनयनाद्यन्वययोग्यता [1]व्यक्तेरेव न तु जातेरतो [2]युक्तं 'व्यक्तिमात्रं शब्दार्थः, न त्वाकृति'रित्यभिप्रायेण शङ्कते-- ननु [3]कार्यान्वय इति। यदि [4]कार्यान्वयमात्रेण [5]व्यक्तेः शब्दार्थता, [6]तदा तुल्यमिदमाकृतावपी[7]त्याकृतिरेव शब्दार्थ इत्यभिप्रायेण समाधत्ते -- आकृति-धर्मिकैवेति। अन्वयिनी कार्या[8]न्वयिनीति। इतिर्हेतौ। अन्वयधीरिति। न हि यस्य कस्यापि पदार्थस्य स्वरूपमात्रेण प्रतीतिः, किन्तु आकृतिपुरस्कारेणैव। तथा सति 'नागृहीत[9]विशेषण'न्यायेन अन्वयधीराकृतावेवेति भावः। व्यापारवत्त्वनियतं व्यापारवत्त्वमात्रम्। तथात्वेऽनिष्टमाह-व्यापारोत्पादन इति।

मन्दरः

ननु 'गौ[10]रनुबन्ध्य' इत्यादौ व्यक्तावेव श्रुतिचोदितानुबन्धनक्रियान्वयदर्शनात् तस्या एव शब्दार्थता समुचितेत्याशयेनाह — नन्विति। 'व्यक्तिमात्रस्य' व्यक्तेरेव, न तु जातेरिति भावः। समाधत्ते — आकृतीति। प्राणप्रदत्वाजातिघटितैवेत्यर्थः। अन्वयधीः क्रियान्वयबुद्धिः। नन्वेवंप्रकारेणाकृतेरानयनादिक्रियासाधनत्वसिद्धौ व्यापाररहितायास्तस्याः कारणत्वासम्भवेन शब्दार्थता न सम्भवतीत्याशङ्क्य कारणलक्षणस्यान्यथात्वादित्याशयेन 'न वाच्य'मिति समाधत्ते — न चेति। 'निर्व्यापारायाः' 'तज्जन्यत्वे सति

पाठ. १. कारकत्वं – मधु. ख.। २. व्यापारोत्पादने – नौका।

१. व्यक्तिरेव – मातृका। २. गता – मातृका। ३. विकार्यान्वय – मातृका। ४. काव्यान्वय° – मातृका। ५. व्यक्तिः – मातृका। ६. तव – मातृका। ७. °त्याकृतेरेव – मातृका। ८. °न्वयमिति – मातृका। ९. विशेषणान्वयेन – मातृका। १०. °रनूबन्ध्य – मातृका।

व्यापारान्तराभ्युपगमेनानवस्थापत्तेः। किन्तु नियत[1]पूर्ववृत्तित्वनियतम्। तज्जातावस्त्येव। '[2]बुद्ध्या हि व्यक्त्या क्रिया साध्यत' इति धीद्वारास्ति [3]साधनत्वमाकृतेः। कथं पुनराकृतिव्यक्त्योरेकधीवेद्यत्वेऽप्याकृतेरेव शब्दार्थता न व्यक्तेरिति [4]चेन्न।

---

**नौका**

व्यापारस्य स्वजन्यघटितत्वादिति भावः। तर्हि किंस्वरूपं [1]कारणत्वमिति शङ्कते -- किन्त्विति। समाधत्ते --- नियतेति। तत् पूर्ववृत्तित्वलक्षणकारणत्वम्। [2]अस्त्येवेति। व्यक्तेः पूर्ववृत्तित्वसत्त्वे व्यक्त्यनपेताया जातेरपि तसत्त्वस्याविवादास्पदत्वादिति भावः। अपि च ज्ञाताया एव व्यक्तेः क्रियासाधनतया व्यक्तिज्ञाने जाते तुल्यवित्तिवेद्यत्वेनाकृतिज्ञानस्यावर्जनीयत्वात् ज्ञानद्वारा क्रियासाधनत्वमाकृतेर्लक्षणमित्यभिप्रायेण युक्त्यन्तरमाह – किञ्चेति। शङ्कते - कथं पुनरिति। एकधीवेद्यत्वेऽपीति।

---

**मन्दरः**

तज्जन्यजनकत्व'रूपलक्षणलक्षितव्यापारशून्याया इत्यर्थः। अन्यथात्वं दर्शयति–न हीति। व्यापारवत्त्वस्य नियतं व्याप्यं न भवति हि। अयं भावः— 'कारणमात्रे व्यापारवत्त्वाभावेन 'यत्र कारणत्वं तत्र व्यापारवत्त्व'मिति व्याप्त्यसम्भवादिदं लक्षणमनुपन्न'मिति। तत्र हेतुं प्रतिपादयति — व्यापारोत्पाद इति। व्यापारस्योत्पादे उत्पत्तौ। अयमाशयः — व्यापारस्य जन्यत्वेन तदुत्पत्तिं प्रति व्यापारान्तरमभ्युपगन्तव्यम्, तस्यापि तादृशत्वेन तत्रापीति प्रतीताप्रतीतिकृदनवस्था स्यादिति। तर्हि कारणं किंस्वरूपमित्यत्राह — किन्त्विति।

---

पाठ. १. पूर्वक्षणवर्तित्व° – मधु. ख.। २. किञ्च बुद्ध्या – नौका.। ३. साधकत्व° – मधु. ख. ४. 'चेत्' न पठ्यते – मन्दर. ख.।

---

१. कार्यत्व – मातृका। २. अस्यैवेति – मातृका।

**उक्तोत्तरत्वात्। शब्दाद् व्यक्तौ धीराकृतिधर्मेणैव जायते। न प्रातिस्विकेन धर्मान्तरेणास्याः स्फूर्तिरित्युक्तमेव ॥**

---

### नौका

[1]व्यक्तेः समकालमेव जाति[2]भासकत्वनियमादिति भावः। समाधत्ते — नेति। ननु किमुक्तमित्यपेक्षायामुक्तसमाधानं स्मारयति – [3]शब्दाद् व्यक्ताविति। [4]अस्याः स्फूर्तिः आकृति[5]विनिर्मुक्तव्यक्तेः स्फूर्तिः। इत्युक्त-मेवेति। तथा च – 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायाद् विशेषणीभूतजाताविव शक्तिर्न तु तद्वतीत्युक्तत्वादिति भावः॥

---

### मन्दरः

नियतपूर्ववृत्तित्वस्य नियतं व्याप्यम्। 'कार्यनियतपूर्ववृत्ति कारणम्' इति लक्षणाभ्युपगमाद् यत्र कारणत्वं तत्र नियतपूर्ववृत्तित्वमिति निष्कर्षः। अस्तु किं तत इत्यत्राह –– तदिति। तत् नियतपूर्ववृत्तित्वम्। ततः क्रियासाध-नत्वसद्भावादाकृतावेवान्वयधीरिति युक्तमित्याशयः। ननु नीरूपाया जातेः कथं क्रियासाधनत्वमित्याशङ्क्याह — बुद्ध्येति। 'व्यक्त्या बुद्ध्या हि' — व्यक्तौ जातिघटिततया ज्ञातायामेव सत्यामित्यर्थः। क्रिया आनयनादिः। साध्यत इति हेतोः, धीद्वारा व्यक्तिज्ञानद्वारा, आकृतेर्जातेः साधनत्वं,क्रियासाधनत्वम्। ननु एकज्ञानविषययोर्जातिव्यक्त्योरेकस्यामेव कथं पक्षपात इत्याशङ्क्य समा-धत्ते –– कथमिति। तत्र हेतुमाह — उक्तोत्तरत्वादिति। एतत्प्रश्नस्येति शेषः। उक्तमुत्तरं स्मारयति – शब्दादिति। व्यक्तौ धीः व्यक्तिविषयक-ज्ञानम्॥

---

१. व्यक्तिसमकाल° – मातृका। २. °भासकत्वं – मातृका। ३. शब्द-व्यक्ताविति – मातृका। ४. अन्यास्फूर्तेः – मातृका। ५. °विनिर्मुक्तौ स्फूर्तिः – मातृका।

नन्वेतदयुक्तम् । किमाकृतिः प्रतीता व्यक्तिधीहेतुः ? उताप्रतीता वा[1] ? नाद्यः, धीभेदापत्तेः । न द्वितीयः, हेतुत्वासम्भवात् । तथा[2] शब्दधीविषयत्वमपि कथं व्यक्तेः ? अन्यव्यावृत्तविशेषरूपा

---

**नौका**

नन्वेतावता आकृतिर्व्यक्तिज्ञानहेतुरित्यापतितम् । तच्चायुक्तम् । ज्ञाताज्ञातविकल्पपराहतत्वादित्यभिप्रायेण शङ्कते — नन्विति । भेदापत्तेरिति । आकृतेः पूर्ववृत्तित्वलक्षणत्वार्थं प्रथमं ज्ञानस्यावश्यकतया आकृतिज्ञानाद् व्यक्तिज्ञानस्य भेदः स्यादित्यर्थः । हेतुत्वासम्भवात् । स्वरूपा[1]सत्त्या आकृतेर्हेतुत्वासम्भवात् । अन्यथा अज्ञात[2]त्वाविशेषेण व्यक्तिनिष्ठधर्मान्तरस्यापि हेतुत्वापत्तेरिति भावः । व्यक्तेः शाब्दज्ञानविषयता च न सिद्ध्यतीत्याह — तथा शब्दधीति । अविषयत्वमेवोपपादयति — अन्येति । अस्तु किं तत्राह — न च शब्दादिति । व्यक्तेरिति शेषः । तथा[3] प्रतीतिः इतरव्या[4]वृत्तविशेषरूपेण प्रतीतिः[5] । ज्ञायमानावस्थाया एव आकृतेर्व्यक्तिज्ञानहेतुतया न जातौ

---

**मन्दरः**

नन्वाकृतेर्विकल्पासहत्वात् तस्यां व्यक्तिधीहेतुत्वं न सिद्ध्यतीति शङ्कते — नन्विति । एतत् — 'आकृतिर्व्यक्तिधीहेतुः' इति वचनम् । कुत इत्यत्राह- किमिति । आद्यं परिहरति — नाद्य इति । तत्र हेतुमाह — धीभेदापत्तेरिति । जातिव्यक्तिज्ञानयोर्भेदाङ्गीकारेऽनुभवविरोधोऽपसिद्धान्तश्चापततीति भावः । द्वितीयं परिहरति — न द्वितीय इति । तत्र हेतुमाह — हेतुत्वासम्भवादिति । बद्धस्य पलायनवदबुद्धस्य हेतुत्वं न सम्भवतीति भावः ।

---

पाठ. १. न पठ्यते – मधु. ख. । २. तथा च – मन्दर° ।

---

१. स्वरूपसत्या – मातृका । अज्ञापत्याविशेषणव्यक्ति° – मातृका । ३. तदा प्रतीतेः – मातृका । ४. °व्यवृत्ति° – मातृका । ५. प्रतीतेः – मातृका ।

**हि व्यक्तिः। न च शब्दात् तथा प्रतीतिरिति चेन्नैवम्। न ह्यज्ञाता ज्ञाता वाऽऽकृतिर्व्यक्तिधीहेतुः। किन्तु ज्ञायमानावस्थैव। द्विविधा हि लोके पदार्थाः-'स्वतन्त्राः परतन्त्राश्च'इति।**

---

नौका

विकल्पावकाश इति समाधत्ते — नैवमिति। 'ज्ञायमानत्वेन हेतुताम्'एवोपपादयति — द्विविधा हीति। स्वतन्त्राणां ज्ञातानां हेतुत्वं, परतन्त्राणां ज्ञायमानत्वेन हेतुत्वम्। आस्तां (च) आकृति[1]र्व्यक्तिधीहेतु (रित्यपि) हेतुत्वं (तु) कथमित्याशङ्क्य – आकृतेरपि परतन्त्राया[2] ज्ञायमानत्वेनैव हेतुतेत्याह — तत्राकृतेरिति। तत्र स्वतन्त्राणां मध्य इत्यर्थः। प्रातिस्विकं रूपं प्रत्येकरूपम्। तच्चेति। चस्त्वर्थे। 'तत्तु (तच्च)' परतन्त्रत्वमित्यर्थः।

---

मन्दरः

नन्वेवं सति व्यक्तेः शब्दज्ञानविषयत्वं कथमित्यत्राह — तथा चेति। 'तथा च' — जातौ विकल्पासहायां सत्याम्। व्यक्तेरिति। अत्र'अपि'शब्देन आकृतेर्व्यक्तिधीहेतुत्वं दूरापास्तमेवेति। सूच्यते। व्यक्तिस्वरूपनिरूपणपूर्वकं तस्याः शब्दजन्यज्ञानाविषयत्वमेव प्रतिपादयति — अन्येति। न चेति। 'तथा' अन्यव्यावृत्तविशेषाकारेणेत्यर्थः। प्रतीतिर्न व्यक्तेरिति परिणामेनानुवर्तते। गोव्यक्तिश्च न गोशब्दात् प्रातिस्विकधर्मघटिता प्रतीयत इति त्वयैवोपपादितत्वादित्याशयः। नैवमित्यादिना समाधत्ते — न हीति। किन्त्विति। द्विविधा इति। द्वैविध्यं दर्शयति — स्वतन्त्रा इति। स्वतन्त्रा दण्डादयः। परतन्त्रा जात्यादयः। तत्रेति। 'प्रातिस्विकं रूपं' विशेषाकार इत्यर्थः। परतन्त्रं जातेर्व्यक्त्यविनाभूतत्वादिति भावः। भवतु, किं तत इत्यत्राह — तदिति। परतन्त्रभूतगोत्वादीत्यर्थः। कर्तृ। शब्दात् स्फुरन्ती अन्तर्भाविता स्वस्फूर्तावन्तर्भावं प्रापिता च धर्मिभूतव्यक्तिः यस्मिन् तत् तथोक्तं तथाविधमेव स्फुरति। अवधारणार्थमाह — नान्यथेति।

---

१. °तन्त्रया – मातृका। २. आकृतिव्यक्ति° – मातृका।

तत्र[1] स्वतन्त्राणां ज्ञातानामेव हेतुत्वम्। परतन्त्राणां तु ज्ञायमान[2]तयैव। तत्राकृतेः प्रातिस्वि[3]कं [4]रूपं [5]परतन्त्रम्। त[6]च्च शब्दात् स्फुरदन्तर्भावितधर्मिभूतव्यक्तिकमेव स्फुरति। नान्यथा।

---

### नौका

शब्दात् स्फुरत्[1] शब्दाद् भासमानं सत् अन्तर्भाविता अन्तर्गता धर्मिभूतव्यक्तिः यस्य तद् — अन्तर्भावितधर्मि[2]भूतव्यक्तिकं, व्यक्त्यन्तर्भावेणैव स्फुरतीत्यर्थः। आकृतेर्व्यक्त्यन्तर्भावेण स्फुरणसाधन[3]त्वफलमाह — अत इति। अत इत्यनन्तरम् 'आकृतिव्यक्त्योः'इति शेषः। सिद्धमिति। तथा च आकृतेर्व्यक्त्यन्तर्भावेणैव भासमानतया व्यक्त्याकृतिधियोर्न भेदः, व्यक्तेश्च शब्दजन्यज्ञानविषयत्वमपि सिद्धमित्यर्थः। ननु स्वतन्त्राः केचित् पदार्थाः,

---

### मन्दरः

अन्यथा व्यक्तिस्फूर्तिं विना। अत इति। 'धीभेदापत्तिर्न'जातिव्यक्त्योरिति शेषः। व्यक्तेरिति। अत्रापि — 'अत' इत्यनुवर्तते। नन्वाकृतेः प्राति स्विकं रूपं परतन्त्रमित्युक्तं, किं पारतन्त्र्यमित्याशङ्क्य — तद् दर्शयति — इदमिति। अपर्यवसानं पर्यवसानाभावः। पारतन्त्र्यमिति यावत्। तदपि इदं वक्ष्यमाणमेव। यदिति। धर्मधीः आकृतिरूपधर्मज्ञानम्। अन्तर्भावितो धर्मी यस्यां सा तथोक्ता। तथाविधेति यत् इदमेवेति सम्बन्धः। जातिस्फूर्तेः स्वान्तर्व्यक्तिस्फूर्तिं विना पर्यवसानाभावात् तत्पारतन्त्र्यमिति भावः।

---

पाठा. अत्र – ख.। २. ज्ञायमानावस्थयैव – मधु.। ३. न पठ्यते – ख.। ४. स्वरूपं – मधु. ख.। ५. न स्वतन्त्रम् – मधु.। ६. 'च' न पठ्यते – मधु. मन्दर° – ख.।

---

१. स्फुरति – मातृका। २. °धर्म° – मातृका। ३. °साधनस्य – मातृका।

**अतो न[1] धीभेदापत्तिः। व्यक्तेः शब्दधीविषयत्वं च सिद्धम्। इदमे[2]वापर्यवसानमपि - 'यदन्तर्भावितधर्मिका [3]तद्धर्मधीः' इति। अत एव आक्षेपादनुमानादर्थापत्तेर्वा व्यक्तिधीरिति निरस्तम्॥**

---

नौका

केचित् परतन्त्राश्च, तत्राकृतिः परतन्त्रेत्युक्तं, तदाकृतेः किं नाम परतन्त्रत्वमित्याशङ्क्य पारतन्त्र्यं निर्वक्ति — इदमेवेति। वक्ष्यमाणमेवेत्यर्थः। अपर्यवसानमपर्यवसितरूपम्। परतन्त्रत्वमिति यावत्। नन्विदमेवेति किं? तत्राह—यदिति। तद्धर्मधीः आकृतिरूप[1]धर्मधीः। अन्तर्भावितधर्मिका[2]। अन्तर्गतव्यक्तिरूपधर्मिकेति यावत्। इदमेवाकृतेः परतन्त्रत्वमित्यर्थः। व्यक्तिनान्तरीयकवित्तिवेद्यत्वमेवाकृतेः परतन्त्र(त्व)मिति फलितार्थः। एवं च मतान्तरमपास्तमित्याह—अत[3] एवेति। जातिव्यक्त्योस्तुल्यवित्तिवेद्यत्वादेवेत्यर्थः॥

---

मन्दरः

अत एवेति। स्वस्फूर्त्यन्तर्भावितधर्मिभूतव्यक्तिस्फूर्तिकत्वादेव। अस्य निरस्तमित्यनेन सम्बन्धः। आक्षेपादिति। वाच्यभूतया जात्या व्यक्तिराक्षिप्यत इति केचित्। अनुमीयत इत्यन्ये। व्यक्तिं विना जात्यन्यथानुपपत्त्या व्यक्तिः कल्प्यत इत्यपरे। एवं मतभेदेन व्यक्तिधीरिति निरस्तम्। कारणान्तरनैरपेक्ष्येण वाच्यभूतजातिस्फूर्तावेव व्यक्तिस्फूर्तेरपि जायमानत्वादिति भावः॥

---

पाठा. न भेदा° – इत्येव – मधु। २. °मेवं पर्यवसानमेव – मधु.। ३. 'धर्मधी°' इत्येव – मन्दर°।

---

१. धर्मतः – मातृका। २. धर्मिकः – मातृका। ३. अथ वाति – मातृका।

**जातौ शक्तिव्यवस्थापनम् –**

**नन्वेवं व्यक्तेरपि शब्दजन्यधीविषयत्वे[१] तस्यामपि शब्दशक्तिरिति वाच्य[२]तापत्तिरिति चेन्नै[३]वम्। यस्मादेवमाकृतिधर्मस्वभावादेव व्यक्त्यन्तर्भावः, तस्मादेवात्र गवादिशब्दविषये[४] यस्यां स्फूर्तौ शक्तिः कल्प्यते, तत्र सा द्व्यंशा — आकृतिरेकोऽंशो, व्यक्तिरन्यः। तत्रा[५]-**

---

नौका

शङ्कते — नन्वेवमिति। 'एवं'शब्दस्यैवार्थकथनं — 'व्यक्तेरपि शब्दजन्यधीविषयत्व[१]' इति। तस्यामपि व्यक्तावपि। वाच्यत्वापत्तिः[२]इति। न चेष्टापत्तिः। आकृतिरेव शब्दार्थ इति तव सिद्धान्तभङ्गापत्तेरिति भावः। आकृतिधर्म[३]स्वभावादेव आकृतिरूपधर्म[४]स्वभावादेव। अनन्यलभ्या[५]कृत्यंशेति। अनेन आकृतिरूपांशस्यानन्यलभ्यत्वोपपादनेन — 'व्यक्त्यं[६]शे नानन्यलभ्यत्वं'

---

मन्दरः

तर्हि जातेरिव व्यक्तेरपि वाच्यताऽऽपततीति शङ्कते — नन्विति। व्यक्तेरपि — जातिरिवेति'अपि'शब्दार्थः। 'शब्दजन्यधीविषयत्वे' शब्दजन्यज्ञानविषयत्वे सतीत्यर्थः। तस्यां व्यक्तावपि। 'वाच्यतापत्तिः' घट्टकुटीप्रभातवृत्तान्तन्यायेन पुनर्जात्यालिङ्गितव्यक्तेरेव वाच्यार्थता सिद्ध्यतीति चेन्नैवमित्यादिना परिहरति — यस्मादिति। आकृतिरूपस्य धर्मस्य स्वभावादेव। यत्नान्तरं विनेत्यवधारणार्थः। 'व्यक्तेरन्तर्भावः' भवतीति शेषः। गोत्वादौ गवादेरन्तर्भावस्य नैसर्गिकत्वादिति भावः। तस्मादिति।

---

पाठ. °विषयत्वेन – मधु.। २. वाच्यत्वापत्ति° – नौका। ३. चेन्न – मधु.। ४. विषयः – मधु.। ५. अत्रा° – मन्दर°।

---

१. °विषयत्वमिति – मातृका। २. °त्वापत्तेरिति – मातृका। ३–४. धर्मस्य भावादेव – मातृका। ५. अनन्यलभ्यशब्दार्थकृत्यंशेति – मातृका। ६. व्यक्त्यंशेन वाच्य° – मातृका।

नन्यलभ्याकृत्यंशस्फूर्तौ शब्दशक्तिकल्पने व्यक्त्यंशस्फूर्तेरन्तर्भावोऽवर्जनीयतया भवति। अनन्यलभ्यविषयत्वाच्छब्दशक्तिकल्पनायाः। एवं च[1] व्यक्त्यंशोऽकारणकः स्यादिति[2] चोद्यं निरस्तम्। नान्तरीयकस्य पृथक्कारणापेक्षाभावात्। अत एव न विशिष्टस्य

---

### नौका

ध्वनितम्। अवर्जनीयतया भवतीति। तथा च — जातिशक्त्यैव व्यक्तिभावनिर्वाहे तदंशेऽपि न शक्तिः कल्प्यते, प्रयोजनाभावादिति भावः। ननु व्यक्त्यंशेन किमपराद्धम्? यतः (येन) शक्तिर्न मृश्यते, तत्राह— अनन्येति। 'अनन्यलभ्यः शब्दार्थः' इति न्यायादिति भावः। एवं सति शङ्कान्तरमपि निरस्तमित्याह -- एवं चेति। व्यक्त्यंशस्फुरणमकारणकं स्यात्, शक्तिरूपकारणाभावादिति भावः। नान्तरीयकस्य अवर्जनीयस्य। तथा च — आकृतिस्फुरणेऽवर्जनीयतया व्यक्त्यंशस्यापि स्फुरणसम्भवान्न तदंशस्य पृथक्कारणापेक्षाऽस्तीति भावः। अत एव — पृथक्कारणापेक्षाभावादेव।

---

### मन्दरः

अंशद्वयं दर्शयति --- आकृतिरिति। ननूभयोरप्यविशेषात् व्यक्त्यंशेऽप्यनुक्रोशः कार्य इत्याशङ्क्य तयोर्वैलक्षण्यमस्तीत्याह — अत्रेति। अत्र। अंशद्वये। अनन्यलभ्यः। शक्तीतरालभ्यो य आकृत्यंशः तस्य स्फूर्तौ एतेन व्यक्त्यंशस्यान्यलभ्यत्वमस्त्येवेति सूचितम्। शब्दशक्तिकल्पने सति, अगतिकत्वाच्छब्दशक्तौ कल्पितायां सत्यामित्यर्थः। उक्तार्थे सम्मतिं दर्शयति --- अनन्यलभ्येति। 'अनन्यलभ्यः शब्दार्थः' इति तान्त्रिकाः। एतेन तस्यामपि शब्दशक्तिरिति वाच्यतापत्तिरिति निरस्तमिति ज्ञेयम्। चोद्यम् आक्षेपश्च। 'चोद्यमाक्षेपाभियोगौ' इत्यमरः। पूर्वोक्तवाच्यतापत्तिसमुच्चायकश्चकारः। तत्र हेतुमाह — नान्तरीयकस्येति। नान्तरीयकस्य

---

पाठा. १. न पठ्यते – मधु. ख. २. °दिति चोद्यं – मधु. ख.।

**वाच्यता। शक्तिकल्पनागौरवाच्च। न चाशाब्दिकमतवदुभयापेक्षयोभयार्थविषयत्वस्वीकारः। शक्तेरनन्यलभ्यविषयत्वादेवेति सर्वमवदातम्॥**

**शक्तित्वाबोपसंहारः –**

**तदेवं मतभेदेन जात्यादिचतुष्टयस्य[1] जातेरेव वा[2] सङ्केतनिके-**

---

**नौका**

विशिष्टस्य, शक्तिकल्पनागौरवाच्चेति। जातिशक्त्यैव निर्वाहे जातिविशिष्टशक्तिकल्पने गौरवादित्यर्थः। गौरवाच्चेति 'च'कारेण 'पृथक्कारणापेक्षाभावात्'इति हेतुः समुच्चीयते॥

जातिशक्तिमुपसंहरति — तदेवमित्यादिना। स्पष्टार्थः॥

---

**मन्दरः**

अवर्जनीयस्य। 'येन विना यन्न भवति तन्नान्तरीयकम्' इति पारिभाषिकम्। शक्तीति। विशेषणे शक्त्या निर्वाहे विशिष्टे शक्तिकल्पनायां गौरवं भवेदिति भावः। ननु मास्तु विशिष्टे शक्तिः, जातिव्यक्त्योरुभयोरपि वाच्यता भवत्वित्याशङ्क्य परिहरति — न चेति। अशाब्दिकमतवत् नैयायिकमत इव। अत्र उपहासार्थम् 'शाब्दिक'शब्दग्रहणम्। 'उभयापेक्षया'— 'केवलजातेः'इत्यादिना 'मिलितयोः प्रवृत्तिनिमित्तत्वमुपपद्यत' इत्यन्तेन प्रतिपादितप्रक्रिया उभयापेक्षेति भावः। उभयार्थयोः जातिव्यक्त्योर्विषयत्वस्य शब्दशक्तिविषयत्वस्य स्वीकारश्च न - नोपपन्नः। तत्र हेतुमाह — शक्तेरिति। एवेति। अत्रापि स एव हेतुरिति भावः। निगमयति—इतीति। सर्वं जातौ शक्तिनिर्वाहकं युक्तिजालम्। अवदातं परिशुद्धम्। अनवद्यमिति यावत्॥

---

पाठा. १. चतुष्टयस्य वा – ख.। २. अनन्तरं – 'जात्यालिङ्गितव्यक्तेर्वा' इत्यधिकं पठ्यते – मधु.।

**तनत्वे स्थिते वाच्यस्यार्थस्य चतुर्विधत्वमेकविधत्वमेव वा व्यवतिष्ठते। तद्वाचकः शब्दोऽपि तथैव व्यवस्थितो भवति ॥**

**अभिधालक्षणम् -**

**[1]अभिधां लक्षयति —**

**मुख्यार्थगोचरा तस्य व्यापृतिः कथ्यतेऽभिधा ॥**

**तस्य वाचकस्य ॥**

---

**नौका**

एवं वाच्यवाचकान् निरूप्य तद्व्यापारभूतामभिधामभिधत्ते — अभिधामित्यादिना ॥

[1]लक्षणमाह — मुख्येति। मुख्यार्थगोचरा सङ्केतितार्थविषयिणी। सङ्केतितार्थविषयकः शब्दव्यापारो*ऽभिधेत्यर्थः ॥

---

**मन्दरः**

फलितमाह — तदिति। चतुर्विधत्वं — 'चतुष्टयी शब्दानां प्रवृत्तिः'-इति वैयाकरणमते चातुर्विध्यम्। एकविधत्वम् — 'अनन्यलभ्यः शब्दार्थः' इति मीमांसकमते जातेरेव शब्दार्थत्वात्। व्यवतिष्ठते व्यवस्थितं भवति। तद्वाचक इति। वाच्यचातुर्विध्यमते वाचकचातुर्विध्यं, तदेकविधत्वमते तदेकविधत्वं च युक्तमेवेति भावः ॥

अथेति। वाच्यवाचकनिरूपणान्तरमित्यर्थः ॥

मुख्येति। मुख्यः साक्षात्सङ्केतितो योऽर्थः स गोचरो यस्याः स तथोक्ता। शक्तेरेव अभिधेत्यभिधानम् ॥

---

पाठा. अथाभिधां - मन्दर°।

---

१. 'लक्षणमाह - मुख्येति' इति '*अभिधेत्यर्थः' इत्यनन्तरं पठ्यते-मातृका।

अभिधायाः शब्दगतत्वनिर्वाहः—

**इन्द्रियाणामिव शब्दानामपि पदार्थप्रतीतिजननानुगुणः परिस्पन्दपरिणामविलक्षणो व्यापारोऽङ्गीकर[1]णीयः। स च कोष्ठगत्या विचार्यमाणः सङ्गतिप्रतिसन्धानात्मको बुद्धिविशेष एव। स चात्मनिष्ठोऽपि शब्दधर्मत्वेन व्यवह्रियत इति प्राञ्चः॥**

---

नौका

लक्षण[1]त्य (लक्षणवटक)तच्छब्दार्थमाह —तस्य वाचकस्येति॥

तदुपपादयति — इन्द्रियाणामिवेति। परिस्पन्दः क्रिया। स च व्यापारश्च। कोष्ठगत्या कोष्ठोऽर्थकधनिकन्यायेन (?)। सङ्गतीत्यादि। शक्तिज्ञानात्मक इत्यर्थः॥

---

मन्दरः

साक्षादित्यादिना निरूपितस्य वाचकस्य व्यवहितत्वात् तच्छब्दार्थमाह— तस्येति॥

ननु शब्देषु व्यापारः कथमस्तीत्याशङ्क्याह—इन्द्रियाणामिति। परिस्पन्दः चलनक्रिया, परिणामो रूपान्तरापत्तिः, ताभ्यां विलक्षणः। चक्षुरादीनि परिस्पन्देन घटपटादिविषयेषु प्रविश्य तत्प्रतीतिं जनयन्तीति केचित्। इन्द्रियाणां विषयसन्निकर्षात् तदाकाराकारिततया तत्प्रतीतिर्भवतीत्यन्ये। शब्दव्यापारस्तु तद्विलक्षणः। अस्तु तद्वैलक्षण्यम्, किंरूपोऽयमित्यत्राह — स चेति। चः'त्वर्थः'। कोष्ठगत्या अन्तर्ज्ञानेन। निश्चलचित्तेनेति यावत्। 'कोष्ठः कुसूले चात्मीये कुक्षेरन्तर्गृहस्य च॥' 'गतिर्मार्गे दशायां च

---

पाठ. °ङ्गीकार्यः – मधु.।

---

१. लक्षणार्थ – मातृका।

अभिधाया द्वैविध्यम् --

[1]सा द्विविधा[2] — रूढिपूर्विका योगपूर्विका चेति ॥

रूढिपूर्विका --

तत्राद्या यथा —

श्रीरामभद्र ! भवतश्चरणारविन्दे[3]
रेणुं कथं [4]मधु च मुक्तिपदं वदन्ति ।

---

नौका

अभिधां विभजते — सा च द्विधेति । द्वैविध्यमेव दर्शयति — रूढीत्यादिना । रूढिः अश्वकर्णादिवदवयवार्थाभावेन समुदायप्रसिद्धिः । तदुक्तमाचार्यैः ---

'असत्स्ववयवार्थेषु यो यत्रार्थे प्रयुज्यते ।
तत्रानन्यगतित्वेन समुदायः प्रसिध्यति ॥'

इति । योगः प्रोक्षण्यादौ प्रकृष्टोक्षणकरणत्वादवयवप्रसिद्धिः ॥

---

मन्दरः

ज्ञाने यात्राभ्युपाययोः' इत्युभयत्रापि विश्वः । सङ्गतिप्रतिसन्धानं शब्दार्थयोः सन्दर्भपर्यालोचनम् , आत्मा स्वभावो यस्य स तथोक्तः । नन्वात्मनिष्ठस्य बुद्धिविशेषस्य कथं शब्दव्यापारत्वनिश्चय इत्यत्राह — स चेति । शब्दधर्मत्वेनेति । शब्ददर्शनसमुद्बुद्धत्वात् — 'तद्व्यापार' इत्यौपचारिकोऽयं व्यवहार इत्याशयः । 'इति प्राञ्चः' । न वयमित्याकूतम् । 'आहुः' इति शेषः । तद्वचनस्य विकल्पानर्हत्वात् तदवश्यमभ्युपगन्तव्यमिति भावः ॥

तां विभजते — सेति । द्वैविध्यं दशयति -- रूढिपूर्विकेति । रूढिः प्रसिद्धिः योगोऽवयवसम्बन्धः ॥

---

पाठा. १. सा च – नौका । २. द्विधा – नौक. मधु. ख. । ३. °रविन्दरेणुं – नौका. मधु. । ४. मधुरमुक्ति° – मधु. ।

यद्रेणुना मुनिरवाप कलत्रबन्धं
रत्नाकरोऽपि मकरन्दरसैरविन्दत् ॥३८॥

---

नौका

आद्या[1]मुदाहरति — श्रीरामेति। चरणारविन्दरेणुं मधु च, गङ्गामित्यर्थः। चरणारविन्दमकरन्दं चेत्येतद् द्वयं कथं केन हेतुना मुक्तिपदं मुक्तिस्थानम्। मुक्तिसाधनमिति यावत्। न केनापीत्यर्थः। वदन्ति। तत्र हेतुमाह — यद्रेणुनेति। ययोश्चरणारविन्दयोः परागेण। अथवा यदिति भिन्नं पदम्। यद् यस्माद्धेतोः। रेणुना पादधूल्या मुनिः गौतमः। 'कलत्रबन्धं' कलत्रं दाराः तेन बन्धं संसारमित्यर्थः। अवाप। रत्नाकरः समुद्रोऽपि मकरन्दरसैः गङ्गारूपैः श्रीरामचन्द्रचरणकमलमकरन्दैः कलत्रबन्धम् अविन्दत् अलभत। 'विद्लृ लाभे'(धा.पा.१४३२),'शे मुचादीनाम्' (पा.७.१.९९)इति नुमा[2]गमः। अत्र गोतमो नाम मुनिः स्वशापेन शिलीभूतां श्रीरामपादस्पर्शेन पुनः प्रकृतिमापन्नामहल्यां नाम भार्यां जग्राहेति कथाऽत्रानुसन्धेया। रामरूपस्य विष्णोः पादोद्भवया गङ्गया समुद्रः कलत्रवानिति चानुसन्धेयम्। अत्र व्याजस्तुतिरलङ्कारः। अत्र शब्दानामवयवार्थाभावात् रूढत्वे न कोऽपि विवादः ॥३८॥

---

मन्दरः

आद्यामुदाहरति — श्रीरामेति। अत्र (श्रीपति)श्रीरामयोः क्वचिदंशेऽभेदाभिसन्धिः। चरण एव अरविन्दं तस्मिन्। मुक्तिपदं मुक्तिस्थानम्। बन्धनसाधनयोस्तयोः मुक्तिपदत्ववचनमनुपपन्नमित्यर्थः। यद् यस्मात् रेणुना अर्थात् पापपद्मपरागेण। मकरन्दरसैः गङ्गारूपमकरन्दधाराभिः। रत्नाकरोऽपि। अत्र 'अपेः' कलत्रबन्धमित्यनुवर्तते। भर्तृशापात् शिलारूपिण्यहल्या श्रीरामपादपङ्कजरजःस्पर्शविधूतपातका पुनर्भर्तारमापेति रामायणीकथाऽत्रानुसन्धेया। अत्र निन्दया स्तुत्यभिव्यक्तेर्व्याजस्तुतिरलङ्कारः।

---

१. आद्यमुदा – मातृका। २. मुमागमः – मातृका।

अत्र सर्वे शब्दा रूढाः ॥

२. योगपूर्विका--

**द्वितीया यथा —**

काकुत्स्थकार्मुकाम्भोदे शरवर्षिणि नादिनि ।

---

**नौका**

श्रीरामेत्यादिशब्दानां केषाञ्चिदवयवार्थसत्त्वेन यौगिकत्वेऽपि शब्दशक्तिस्वाभाव्यादर्थान्तरे प्रयोगवारणात् रूढत्वमभिप्रेतमेवेत्याशयेनाह — अत्र सर्व इति ॥

द्वितीया[1]मुदाहरति–काकुत्स्थेति । ककु[2]त्स्थस्य गोत्रापत्यं काकुत्स्थो रामः, तस्य कार्मुकं धनुः तदेव अम्भोदः[3] मेघः तस्मिन् शरवर्षिणि शराः बाणा[4] जलानि च [5]तद्वर्षिणि । 'शरो दध्याद्यग्रसारे बाणे काण्डे तृणान्तरे । [6]शरं तु नीरे' इति रत्नमाला (पं. ९०९) । युद्धकाल इति शेषः । नादिनि ध्वनति सति । क्रतुभुजो देवाः । 'बर्हिर्मुखाः[7] क्रतुभुजः' इत्यमरः (१.१.९) । कलापः

---

**मन्दरः**

'उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः' (चन्द्रा. श्लो. ७०) इति लक्षणात् । चरणेऽरविन्दत्वारोपस्य तन्निःसृतायां गङ्गायां मकरन्दत्वारोपस्य च हेतुहेतुमद्भावात् परम्परितरूपकमिति तयोरनुग्राह्यानुग्राहकभावादङ्गाङ्गिभावेन सङ्करः ॥३८॥

अत्र रत्नानामाकरो रत्नाकर इति योगोऽप्यस्ति, तथापि रूढिर्योगमपहरतीत्युक्तत्वाद् रूढ एवायमपीत्याशयेनाह — अत्रेति ॥

---

१. द्वितीय° – मातृका । २. ककुस्थेति – मातृका । ३. °म्भरो – मातृका । ४. बाणजालानि च – मातृका । ५. द्वर्षिणी – मातृका । ६. श . . . के तूते त्विति – मातृका । ७. °र्मुखः – मातृका ।

**नृत्तवन्तः क्रतुभुजः कलापिन इवोन्मुखाः ॥३९॥**

**अत्र सर्वेऽपि[1] यौगिकाः ॥**

---

**नौका**

पिच्छम् एषामस्तीति कलापिनो मयूरा इव । अत्र रूपकश्लेषसङ्कीर्णेयमुपमा ॥३९॥

इह — 'ककुत्स्थस्यापत्यं काकुत्स्थः' 'कर्मणि (कर्मणे) प्रभवति कार्मुकम्' इत्यादिरीत्या सर्वेषामवयवार्थसत्त्वात् यौगिकत्वमित्याह — अत्रेति ॥

---

**मन्दरः**

द्वितीयामुदाहरति — काकुत्स्थेति । शरा बाणा एव जलानि वर्षतीति तथोक्ते । 'शरो दध्याद्यग्रसारे बाणे काण्डे तृणान्तरे । शरं तु नीरे' इति रत्नमाला (पं. ९०९) । नादो ज्याघोषो गर्जितं च । यद्यपि नभोभागस्थितानाममराणां रामरावणसम्प्रहारसमवलोकनसमये समुन्नमितास्यत्वमसम्भावितमेव, तथापि तच्छरासारोग्रनिर्घोषनीरन्ध्रगुणघोषदिग्भ्रान्तिसम्भ्रान्ततयोन्मुखत्वमभूदित्याकूतम् । अत्र रूपकोपमयोरङ्गाङ्गिभावेन सङ्करः ॥३९॥

अत्र कार्मुकादीनां केषांचिद् योगरूढत्वेऽपि 'ककुदि तिष्ठतीति ककुत्स्थः तद्गोत्रस्यापत्यं पुमान् काकुत्स्थः' इति, शरान् बाणान् शराणि जलानि वर्षतीति च प्रायो यौगिकत्वाद् छत्रिन्यायेन यौगिका एवेत्याशयेनाह — अत्र सर्वेऽपि यौगिका इति । शब्दा इत्यनुवर्तते ॥

---

पाठ1. सर्वेऽपि शब्दा – मधु.

इति श्रीमत्त्रिभुवनपवित्रहरित(स-)गोत्रावतंसवाराणसीवंश-पद्माकरप्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्याय-यपर्वतनाथसूरिपण्डितमण्डलेश्वरसूनुना श्रीयल्लमाम्बागर्भरत्नाकरपारिजातेन निर्मलाचारपूतेन चतुर्दशविद्याविभूषणवता धर्मसङ्ख्यावता विरचिते श्रीमद्रघुकुलतिलकयशोघनसारसुरभिते साहित्यरत्नाकरनामन्यलङ्कारशास्त्रे वाचकशब्दार्थवृत्तिनिरूपणं नाम द्वितीयस्तरङ्गः ॥

[1]आस्यामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मनः
त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरैरङ्गीकृताडम्बरः ।
तादृङ्निर्मलधर्मसूरिकविता [2]सोल्लासकल्लोलिनी—
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः ॥

*धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातः पर्वतेशाच्छुभगुणगणभूर्यल्लमाम्बासुगर्भे ।
व्याख्याविख्यातकीर्तिर्विवरणगुरुवाक्साङ्ख्यमुख्यागमानां
तस्यालङ्कारशास्त्रे रघुपतिविभुकेऽयं द्वितीयस्तरङ्गः ॥

---

**नौका**

आस्यामन्दिरमित्यादिश्लोको व्याख्यातः ॥

---

पाठा. १. पद्यमिदं न पठ्यते – मधु. ख. । २, कल्लोसिनीवेल्लनैः ख. ।

*मधुसूदनमिश्रैस्त्वेवं पठ्यते —
"धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातो यल्लमाम्बाकृत सुकृतफलं पर्वतेशस्य भाग्यम् ।
काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतु-
स्तस्यालङ्कारशास्त्रे रघुपतिचरितेऽयं द्वितीयस्तरङ्गः ॥"

**नौका**

इति श्रीमत्त्रिभुवनपवित्रविचित्रचरित्रचर्लान्ववायसुधासिंधुसुधाकरायमाण[1]-श्रीमद्ब्रह्मान्तर्वाणिपौत्रस्य श्रीसूरमाम्बासहचरश्रीलक्ष्मणाख्यसूरिसूनोः श्रीवेङ्कट-सूरिणः कृतौ साहित्यरत्नाकरव्याख्याने नौकाख्याने द्वितीयोऽभिधातरङ्गः ॥

'श्रीचर्लान्वयलक्ष्मणाख्यविबुधः श्रीसूरमाम्बापतिः
श्रीमद्वेङ्कटनामसूरिणममुं प्रासूत सूनुं च यम् ।
नौका तद्रचितेयमद्य विवृतिः साहित्यरत्नाकरे
द्वैतीयीकतरङ्गरिङ्गणधियामाल[2]म्बभूता भवेत्' ॥

**मन्दरः**

इतीत्यादिगद्यं व्याख्यातम् । नामेति प्रसिद्धौ । 'नाम प्राकाश्य-सम्भाव्यक्रोधोपगमकुत्सने' इत्यमरः (३.३.२५१) ॥

आस्थामन्दिरमित्यादि श्लोकद्वयमपि व्याख्यातम् ॥

इति श्रीमल्लादिलक्ष्मणसूरिविरचिते साहित्यरत्नाकरव्याख्याने मन्दरसमाख्याने द्वितीयः प्रस्थः

इति द्वितीयोऽभिधातरङ्गः ॥

१. °मान° – मातृका । २. °मालां बिभूता – मातृका ।

# साहित्यरत्नाकरे

## तृतीयो लक्षणातरङ्गः

### लक्षकशब्दनिर्वचनम्

एवं वाच्यवाचक[1]तद्वृत्तीर्निरूप्य सम्प्रति तन्मूल[2]कतया लक्ष्यलक्षकतद्वृत्तीर्निरूपयितुमर्थज्ञानस्य शब्दज्ञानपूर्वकत्वात् पूर्वं शब्दं निरूपयति --

लक्षकशब्दनिर्वचनम् --

योऽर्थं लक्षणया शब्दो बोधयेल्लक्षको ह्यसौ ॥

---

नौका

अथ लाक्षणिकशब्दनिरूपणाय सङ्गतिं प्रदर्शयति -- एवं वाच्येत्यादिना। वाच्यं, वाचकं, वृत्तिं तद्व्यापारम् अभिधां चेत्यर्थः। तन्मूलतया वाच्यार्थमूलकत्वेन ॥

लक्षणार्थमाह — लक्षणयेति। लक्षणयेत्यस्य व्यावृत्तिमाह --- लक्षणयेतीति। वाचका[2]दीत्यादिना व्यञ्जकपरिग्रहः ॥

---

मन्दरः

अथ लक्ष्यलक्षकलक्षणा लिलक्षयिषुः उत्तरतरङ्गप्रारम्भाय सङ्गतिं दर्शयति — एवमिति। ता वाच्यवाचकाभिधा मूलं यासां, तासां भावः तत्ता

---

पाठ. '°वाचकवृत्तीः' इत्येव – नौका। २. तन्मूलतया – नौका. मधु. ख.।

लक्षणयाऽर्थप्रतिपादकः शब्दो लाक्षणिक इति लक्षणार्थः। लक्षणयेति वाचकादिव्यावृत्तिः ॥

ननु केयं लक्षणा ? यद्योगाच्छब्दस्य लाक्षणिकतेत्यपेक्षायां लक्षणायाः सामान्यलक्षणमाह –

२. लक्षणा —

वाच्यार्थबाधे तद्योगे रूढितो वा प्रयोजनात् ।
ययाऽन्यं बोधयेच्छब्दो व्यापृत्या साऽस्य लक्षणा ॥२॥

अन्यमर्थम् । अस्य शब्दस्य । मुख्यार्थबाधः, सम्बन्धः प्रसिद्धिप्रयोजनयोरन्यतरच्च लक्षणा[1]प्रयोजकानीत्यर्थः ॥

---

नौका

लक्षण[1]मभिधत्ते — योऽर्थमिति ॥

लक्षणालक्षणं वक्तुमाकाङ्क्षामुद्भावयति –– नन्वित्यादिना ॥ तद्योगे वाच्यार्थयोगे । [1]व्यापृत्या व्यापारेण ॥२॥

लक्षणस्थ[2]म् 'अन्य'पदं व्याचष्टे — अन्यमिति । अर्थं वाच्याविनाभूतमर्थम् । [3]अस्येत्यस्यार्थमाह — अस्येति । वाच्यार्थबाध इत्यादिपूर्वार्धे

---

मन्दरः

तया । वाच्यार्थमूलो लक्ष्यार्थः, वाचकमूलो लक्षकः, अभिधामूला लक्षणेति विवेकः । शब्दं लक्षकशब्दमित्यर्थः ॥

य इति । (लक्षणार्थ इति) लक्षणस्य लक्षणालक्षणस्य अर्थ इत्यर्थः । वाचकादीति । आदिपदेन व्यञ्जकः सङ्गृह्यते ॥

---

पाठ. १. प्रयोजकमित्यर्थः – मधु. ।

---

१. लक्षणा°–मातृका । २. व्याप्यत्वाद् वाच्यव्यापारेण–मातृका । ३. लक्षणस्थस्य पदं – मातृका । ४. अन्ये त्वन्यार्थमाह – मातृका ।

### नौका

विवृणोति -- 'मुख्यार्थेत्यादिना 'इत्यर्थ' इत्यन्तेन। सम्बन्धः वाच्यार्थ-सम्बन्धः। तथा च -- मुख्यार्थबाधतद्योगाभ्यामन्यार्थो यथा प्रतिपाद्यते, सा लक्षणेति लक्षणांशः। मुख्यार्थबाधे(सति)तत्सम्बन्धिन्यारोपितः शब्दव्यापारो लक्षणेति तु निष्कर्षः। अत एवोक्तम् मुख्यार्थबाधेन हेतुना 'मुख्यार्थसन्बन्धे विषये आरोपितः शब्दव्यापारो लक्षणा' इति। 'रूढितो[1] वा प्रयोजनात्' इति तु लक्षणा-विभागपरम्। न लक्षणान्तर्गतम्। तथा सत्येकै[1]कस्यान्तर्भावे इतरे[2]तरत्रा-व्याप्तेरुभयान्तर्भावे असम्भवः स्यात्। तथा च रूढिलक्षणा प्रयोजनलक्षणा चेति द्विधा लक्षणेति विभाग इति ध्येयम्॥

---

### मन्दरः

एवं लक्षकं निरूप्य लक्षणानिरूपणायावसरं प्रदर्शयति -- नन्विति। अपेक्षायाम् आकाङ्क्षायाम्। ननु लक्षकनिरूपणानन्तरं लक्ष्यमनिरूप्य कथं लक्षणाया लिलक्षयिषेति चेल्लक्षणाबोधमन्तरेण लक्ष्यस्य दुर्बोधत्वात्तन्निरूप-णेनैव तन्निरूपणमपि भवतीति बोध्यम्॥

वाच्यार्थबाध इति। वाच्यार्थे मुख्यार्थस्वीकारे बाधः प्रमाणपराहतत्वं तस्मिन् सति। इममेवार्थमग्रे सिद्धान्तत्वेन कविर्विवरीवरिष्यति। तद्योगे तेन मुख्यार्थेन लक्षयितुमभिमतस्य सम्बन्धे। वाच्यार्थबाधतद्योगौ साधारण्येन, रूढिः प्रयोजनं वा विकल्पेन, लक्षणाबीजम्। लक्षणा(लक्षण)सङ्ग्रहस्तूत्त-रार्धनेति विज्ञेयम्। एतेन रूढिलक्षणा प्रयोजनलक्षणा चेति द्वैविध्यमुक्तं भवति। 'लक्षणाप्रयोजकानि' लक्षणाबीजानीत्यर्थः॥

---

टिप्प. 1. प्रत्येकं रूढिप्रयोजनयोरन्यतरस्य लक्षणान्तर्गतत्वे सतीत्यर्थः।

---

१. रूढिता वा – मातृका। २. इतर इतरत्रा° – मातृका।

लक्षकत्वविचारः —

नन्रु किं शब्दस्य लक्षकत्वमर्थस्य वा? नाद्यः, तस्य [1]स्वार्थप्रकाशनमात्रेणोपरतव्यापारस्य पुनर्व्यापारान्तरायोगात्। न द्वितीयः; अर्थस्य लक्षकत्वे 'शब्दव्यापारो लक्षणा' इत्यङ्गीकार[2]विरोधात्, इति चेत्, उच्यते। वाच्यार्थव्यापार एव लक्षणा वाचके समारोप्यते। न च शब्दव्यापारताङ्गीकारविरोधः। आरोपितः शब्दव्यापारो लक्षणेत्यभ्युपगमात्।

---

नौका

नन्विदं लक्षणमनुपपन्नम्। तथा हि — लक्षणा हि लक्षकव्यापारत्वेन निरूपणीया। तत्र अर्थस्य लक्षकत्वम्? शब्दस्य वा? उभयथाऽप्यनुपपत्तिः अतो(ऽलं)लक्षकत्वनिर्णया[1]यासेन, लक्षकत्वाविचारः अनुपयुक्तत्वादित्याशयेन शङ्कते — नन्रु किमित्यादि(ना)। अर्थस्यैव लक्षकत्वं तद्व्यापारतयैव लक्षणानिरूपणमुपयुक्तमेवेत्यभिप्रेत्य समाधत्ते — उच्यत[2] इति। नन्रु अर्थव्यापारत्वे 'शब्दव्यापारो लक्षणा' इति सिद्धान्तभङ्ग इत्युक्तमेवेत्याशङ्क्य—अर्थधर्मस्यापि शब्दे आरोपेण तथा व्यवहारान्न विरोध इत्याह – न च शब्देति।

---

मन्दरः

अर्थेऽपि लक्षकत्वं प्रतिपादयितुं शङ्कते — नन्विति। 'नाद्य' इत्याद्यं परिहरति। तत्र हेतुं प्रतिपादयति — तस्येति। अयं भावः – शब्दे – अभिधयाऽभिधेयमभिधाय विरतव्यापारे (सति) 'सकृदुच्चरितः शब्दो न वृत्तिद्वयमर्हति' इति निषेधात् पुनस्तस्मिन् लक्षणारूपव्यापारस्यानङ्गीकार्यत्वादिति। द्वितीयं परिहरति — न द्वितीय इति। तत्र हेतुं दर्शयति -- अर्थस्येति।

---

पाठ. १. शब्दार्थ° – मधु.। २. °विरोधः – मधु. ख.।

---

१. °निर्णयाभावेन – मातृका। २. अन्यतः – मातृका।

नन्वर्थस्यै[1]व लक्षकत्वे कथमजहत्स्वार्थायां स्वार्थांशे वृत्ति-विरोधाभावः ? केवल[2]समुदायभेदेन लक्ष्यलक्षकभेदसद्भावा-दित्यवेहि ।

---

नौका

नन्वर्थस्य लक्षकत्वं तावदनुपपन्नम् । जहत्स्वार्थलक्षणायां स्वार्थत्यागेनान्यार्थ-स्यैव लक्ष्यत्वात् स्वार्थस्य च लक्षकत्वात् लक्ष्यलक्षकयोः भेदसत्त्वेऽप्यजह-त्स्वार्थलक्षणास्थले स्वार्थत्यागे — अजहत्त्वभङ्गापत्त्या स्वार्थस्यापि लक्ष्यकोटि-निवेशेन लक्ष्यत्वं वाच्यम् । तथा सति स्वस्यैव लक्ष्यत्वं तथा लक्षकत्वं चेति द्वयं विरुद्धमिति स्वार्थांशे लक्षणारूपवृत्तेः विरोधादित्याशयेन शङ्कते—नन्वर्थस्यैवेति । [1]वृत्तिविरोधाभावः कथमित्यन्वयः । लक्षणा[2]रूप वृत्तेः विरोधाभाव इत्यर्थः । केवलस्यार्थस्य लक्षकत्वं स्वार्थसहितस्यान्यार्थस्य [3]लक्ष्यत्वम् । केवलाद् विशिष्टस्य

---

मन्दरः

अयमाशयः — आलङ्कारिकसमयविरोधादर्थव्यापारत्वमप्यनुपपन्नमिति । उच्यत इति । समुचितोत्तरमिति शेषः । वाच्यार्थेति । आरोपित इति । आरोपि-तत्वविशेषणेन वस्तुतोऽर्थव्यापारः, शब्दे त्वारोपित इति भेदावगमान्न विरोध-गन्ध इति । नन्वर्थ एव लक्षकश्चेत् , क्वचिद् बाधते तत्परिहारः कथमिति शङ्कते — नन्विति । आरोपितः शब्दव्यापार इत्युक्तत्वादर्थस्यैवेत्यवधारणम् । लक्षकत्वे लक्षणयाऽन्यार्थप्रतिपादकत्वे सति । अजहत्स्वार्थो यां सा तस्यां 'कुन्ताः प्रविशन्ति' इत्यादौ । स्वस्य कुन्तशब्दस्य योऽर्थस्तद्रूपांशे कुन्त-विशिष्टपुरुषरूपार्थान्तरांशस्य विद्यमानत्वात् स्वार्थांश इत्युक्तम् । वृत्त्योः

---

पाठ. १. 'एव' न पठ्यते – मधु. । २. '°समुदायभेदेन' न पठ्यते – मधु.ख. ।

---

१. व्यक्ति° – मातृका । २. लक्षण° – मातृका । ३. लक्षकत्वं – मातृका ।

नन्वर्थधर्मस्य शब्दाध्यारोपे किं निमित्तमिति चेत्, शब्द-प्रतिपादितस्यैवार्थस्य [1]लक्षकत्वमिति वदामः। न हि [2]शब्दव्यापार-संस्पर्शमन्तरेणार्थोऽर्थान्तरं लक्षयितुमीष्टे। अन्यथा प्रमाणान्तरो-

---

नौका

भिन्नत्वाद् न किञ्चिदनुपपन्नमिति समाधत्ते — केवलसमुदायेति। अर्थधर्म-स्यैव शब्दारोपे बीजं वक्तुं पूर्वमुखेन निमित्तं पृच्छति — नन्वर्थेति। उत्तरयति --- शब्देति। तदेतद् व्यतिरेकमुखेन विशदयति — न[1] हीति। न (लक्षयितुं) ज्ञापयितुम्। तथात्वे अतिप्रसङ्गमाह — अन्यथेति। शब्द-स्पर्शमन्तरेण लक्षकत्व[2] इत्यर्थः। प्रमाणान्तरेति। [3]प्रत्यक्षाद्युपस्थितानाम-पीत्यर्थः। उपसंहरति — अतोऽथेति। आरोपितत्वेना (स्याः शब्दव्यापार-तेति भावः) तत्रो[4]पपत्तिमाह — अत एवेति। सान्तरार्थनिष्ठ इति। अन्तरं व्यवधानं तेन सह वर्तते (सान्तरः स चासावर्थश्च सान्तरार्थः) [5]व्यवहितार्थः,

---

मन्दरः

लक्षणयोः विरोधः, तस्याभावः परिहारः, कथमिति पूर्वः पक्षः। अयं भावः 'तथा सति लक्षकस्य कुन्तरूपार्थस्य कुन्तविशिष्टपुरुषरूपलक्ष्यार्थप्रविष्ट-त्वादेकस्यैव कुन्तरूपार्थस्य लक्षकत्वं लक्ष्यत्वं चेति लक्षणाद्वयापत्तेर्वृत्तिविरोधे प्राप्ते तत्परिहारः कथं भवतीति। समाधत्ते — केवलेति। अयं भावः — केवलस्वार्थस्य लक्षकत्वं तत्सहितस्यान्यस्य लक्ष्यत्वं चेति लक्ष्य लक्षकभेदस्य सद्भावाद् वृत्तिविरोधो न प्रसजतीति जानीहि। प्रतिपादकता-सम्बन्धेन लक्षके, विषयता सम्बन्धेन लक्ष्ये च लक्षणायाः स्थितिरिति विवेकः। केचित्तु वृत्तिविरोध इत्यत्र अभिधालक्षणयोर्विरोध इत्यामनन्ति।

---

पाठ. १. लक्षकत्वादिति – मन्दर। २, व्यापारस्पर्श° – नौका.।

---

१. स हीति। स – ज्ञापयितुं – मातृका। २. लक्षकत्वमित्यर्थ – मातृका। ३. प्रत्यक्षादुप° – मातृका। ४. .... वादमाह – मातृका। ५. व्यवहारतः – मातृका।

**पनीतानामर्थानां लक्षकत्वप्रसङ्गात् । अतोऽर्थव्यापारोऽपि शब्द-महिम्ना प्राप्तत्वाच्छब्दव्यापार इत्युच्यते । अत एव सान्तरार्थ-निष्ठः शब्दव्यापारो लक्षणेत्याश्रीयते[1] ॥**

---

नौका

(लक्ष्यार्थ इति यावत् ) । स हि मुख्येन व्यवधीयते । अतः(व्यवहितार्थ) विषयो व्या[1]पारो मुख्यार्थगतः, न तु निवृ[2]त्तव्यापारो गङ्गादिशब्दगतः । स शब्दे[3] न सम्भवतीति तत्रारोप्यत इत्यर्थः । तथा च – सान्तरार्थनिष्ठः व्यवहितार्थगोचरः । शब्दस्य हि स्वार्थ एव मुख्यव्यापारः न व्यवहितेऽर्थान्तरे, व्यवहितार्थविषयकश्चायमिति युक्तमारोपितत्वमिति भावः ॥

---

मन्दरः

तदसत् । अत्रार्थस्य लक्षकत्वेन शब्दमात्रव्यापारभूताया अभिधायास्तत्राप्रसक्तेः । केवलेत्यादिविरोधपरिहारवाक्ये च लक्ष्यलक्षकभेदसद्भावादित्यनेन केवलस्य लक्ष-कत्वं समुदायस्य लक्ष्यत्वमिति लक्ष्यलक्षकयोर्भेदप्रतिपादनादेकस्मिन्नर्थे लक्षणा-द्वयापत्तिरिति पूर्वपक्षतात्पर्यावगतेश्च । ननु यद्यपि स्वार्थं प्रत्याय्योपरतव्यापारस्य शब्दस्य पुनर्व्यापारान्तरायोगादर्थस्यैव लक्षकत्वमुपपद्यते। तथा सत्यर्थव्यापारभू-ताया लक्षणायाः शब्दाध्यारोपोऽनुपपन्न इत्याशङ्क्य समाधत्ते–नन्विति । शब्द-प्रतिपादितस्यैवेति । अत्रावधारणेन प्रत्यक्षादिप्रमाणान्तरप्राप्तानां प्रवाहादि-रूपार्थानां लक्षकत्वं न सम्भवतीति ज्ञाप्यते । 'इति'निमित्तमितीत्यर्थः । प्रतिपादितार्थमेव द्रढयति – न हीत्यादिना । ननु लक्षणाया उभयव्यापारत्वे सिद्धे किं वैलक्षण्यमित्याशङ्क्याह — अत एवेति । अन्तरेण व्यवधानेन

---

पाठ. १. 'न हि' इत्यारभ्य 'आश्रीयते' इत्यन्तो ग्रन्थो न पठ्यते–मधु.

---

१. व्यवहारो मुख्यार्थगतता – मातृका । २. निवृत्ति° – मातृका । ३. शब्देन सम्भवतीति – मातृका ।

'वाच्यार्थबाध'पदनिरुक्ति :-

'वाच्यार्थबाध' इत्यनेन वाच्यार्थस्वीकारे वाक्यप्रामाण्यानुपपत्तिर्विवक्ष्यते। न तु वाच्यस्य[1] वाक्यार्थेन[2] सम्बन्धानुपपत्तिः। नापि मुख्यार्थस्वीकारे प्रत्यक्षादिप्रमाणविरोधो वा[3] विवक्ष्यते।

---

नौका

अथ केषाञ्चिल्लक्षणालक्षणद्वयं दूषयितुं स्वोक्तलक्षणालक्षणे वाच्यार्थबाध इत्यनेन विवक्षितमर्थमाह — वाच्यार्थेति। प्रामाण्यानुपपत्तिरेव सर्वं वाक्यं सावधारणमिति न्यायेन प्रामाण्यानुपपत्तिरिति विवक्ष्यत इत्यर्थः। एवकारव्यवच्छेद्यं[1] तत् पक्षद्वयमाह — न त्विति, नापीति च। अत एव वाक्यप्रामाण्यानुपपत्तेर्विवक्षणादेव। तदुभयविवक्षया सम्बन्धानुपपत्तेः प्रमाणविरोधस्य च विवक्षया। [2]तत्र सम्बन्धानुप-

---

मन्दरः

सहितः सान्तरः स चासौ अर्थश्च सान्तरार्थः वाच्यार्थव्यवहितः तीरादिः तस्मिन् निष्ठा तात्पर्यं यस्य स तथोक्तः। एतेन अव्यवहितार्थनिष्ठार्थव्यापारोऽपीति सूच्यते॥

एवं लक्षणां विमृश्य सम्प्रति तल्लक्षणं विमृशति — वाच्यार्थबाध इति। विवक्षितार्थमाह—वाच्यार्थस्वीकार इति। अन्यथाप्रतिपादनमनुपपन्नमित्याह— न त्वित्यादिना। वाच्यस्य मुख्यार्थस्य अर्थेन वाक्यार्थेन बाधः सम्बन्धानुपपत्तिः। अर्थान्तरमाह — नापीति। 'न विवक्ष्यते' एवं रूपार्थद्वयस्यापातमधुरत्वादिति भावः। अव्यापकमेकं लक्षणालक्षणं दर्शयति — वाच्यस्येति। तत्सम्बन्धवशेन वाच्यार्थसम्बन्धवशेन प्राप्तस्य। तीरादेरिति शेषः। क्वचिदव्याप्तिं दर्शयति — न हीति। हि यस्मात् तल्लक्षणं नास्तीति सम्बन्धः। अत्र'अपि'शब्देन 'गङ्गायां घोषः प्रतिवसति'इत्यादावस्तीति सूच्यते। द्विषद्गृहे

---

पाठ. १. 'वाच्येन' इत्यधिकमनन्तरं पठ्यते – मन्दर.। २. 'सह' इत्यधिकं पठ्यते – मधु.। ३. न पठ्यते – मधु.।

---

१. व्यवच्छेद्यत्वं पक्ष. – मातृका.। २. तत्रासम्बन्धा° – मातृका।

अत एव तदुभयविवक्षया प्रवृत्तं कैश्चिदुक्तं लक्षणालक्षणद्वयमव्याप्तिदूषितम्। तथा हि—

"वाच्यस्या[1]र्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः।
तत्सम्बन्ध[2]वशप्राप्तस्यान्वयाल्लक्षणोच्यते ॥"

इति यल्लक्षणं तदव्यापकम्। न हि 'विषं भुङ्क्ष्व'इत्यादावपि[3] तल्लक्षणमस्ति। सर्वेषां पदानां लक्षकत्वेन वाच्यार्थाबा[4]धात् ॥

---

**नौका**

पतिविवक्षया प्रवृत्तं केषाञ्चिल्लक्षणमनुवदति — वाच्यस्येत्यादिना। शत्रुगृह-भोजने प्रवृत्तं पुत्रं प्रति मात्रा उक्ते 'विषं भुङ्क्ष्व'इत्यादौ सर्वलाक्षणिकस्थले अव्याप्तमिदं लक्षणमिति दूषयति — न[1] हीति। तत्र हेतुमाह–सर्वेषामिति ॥

---

**मन्दरः**

भोक्तुं प्रवृत्तं प्रति सुहृदा 'विषं भुङ्क्ष्व'इति प्रयुक्तत्वाद् विषपदस्य द्विषदन्ने, 'भुङ्क्ष्व'इत्यस्य मा भुङ्क्था इत्यर्थे च वाच्यार्थहानपूर्वकं प्रवृत्तत्वाज्जहद्वाच्या। अत्र आदिशब्देन – 'उपकृतं बहु यत्र (तत्र) किमुच्यते' (का. प्र. ४.२४) इत्यादिर्गृह्यते। अव्याप्तिहेतुमाह – सर्वेषामिति। लक्षकत्वेन हेतुना 'वाच्यार्थस्याबाधात्' बाधशब्दस्य तन्मते सम्बन्धानुपपत्त्यर्थकत्वेन सम्बन्धो-पपत्तेरित्यर्थः। अयं भावः – 'गङ्गायां घोषः प्रतिवसति'इत्यादौ तु सर्वपदानाम-लक्षकत्वाद् वाच्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तिः सम्भवति। अत्र तु सर्वपदानां लक्षकत्वेन वाच्यार्थस्याप्यन्वयसम्भवात् सम्बन्धोपपत्तिरिति अस्म-त्पक्षावलम्बने तु वाच्यार्थस्वीकारे वाक्यप्रामाण्यानुपपत्तिरक्षतेति व्यज्यते। सुहृद्वचने विषभक्षणोपदेशरूपार्थस्यानुपपन्नत्वात् ॥

---

पाठ. १. वाच्यार्थस्यास्य – ख.। २. वशं प्राप्त° – मधु.। ३. °वप्येतल्लक्ष° – मधु.। ४. वाच्यार्थाभावात् – मधु. ख.।

---

१. सहेति – मातृका।

यदपि —

'मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे ।
मुख्यार्थेनाविनाभूते[1] प्रतीतिर्लक्षणोच्यते ॥'

इति लक्षणालक्षणं, तदप्यव्यापकम् । 'कुण्डपायिनामयने मासमग्निहोत्रं जुहोति' इत्यत्रैतल्लक्षण[2]स्याव्यापकत्वात् । तथा हि यावज्जीवम-

---

नौका

द्वितीयलक्षणमनुवदति – यदपीति । एतस्याव्याप्तिमाह – कुण्डपायिनामिति । कुण्डपायिनामयनं नाम सत्रविशेषः । तत्र – 'मासमग्निहोत्रं जुहोति'इति वाक्यं श्रूयते । तच्चाग्निहोत्रपदं लाक्षणिकम् । तत्र लक्षणाया-मव्याप्तिः स्यादित्यर्थः । अव्याप्तिमुपपादयति – तथा हीत्यादिना । तत्प्रख्यनये सिद्धमिति । 'तत्प्रख्यं चान्यशास्त्रम्'इत्यधिकरणे – 'अग्निहोत्रं जुहोति'इति वाक्यमुदाहृत्य अग्निहोत्रशब्दः किं गुणविधिः किं वा कर्मनामधेयमिति संशय्य

---

मन्दरः

द्वितीयमव्यापकं लक्षणमाह — यदपीति । एतत्पदद्वयमग्रे तच्छब्देनान्वेति । मानान्तरेति । मानान्तरविरोधे प्रत्यक्षादिप्रमाणविरोधे सति । मुख्यार्थेनाविनाभूते प्रतीतिः मुख्यार्थाविनाभूतविषयकप्रतीतिः । इति यदपि लक्षणालक्षणं तदप्यव्यापकम् । कुत्राव्याप्तिरित्यत्राह –– कुण्डपायिनामिति । कुण्डा नाम त्सरुशून्याश्चमसाः तैः सोमं पिबन्तीति कुण्डपायिनः, तेषामयने तन्नामके सत्रयागविशेषे । मासं कृत्स्नेऽपि मासे । 'कालाध्वनोरत्यन्त-संयोगे' (पा. २.३.५) इति द्वितीया । अग्निहोत्रं जुहोति करोति । सुबन्त-तिङन्तयोरेकार्थत्वे तिङन्तस्य करोत्यर्थकत्वनियमात् । 'इत्यत्राव्यापकत्वात्' तदव्यापकमिति पूर्वेण सम्बन्धः । अग्निहोत्रशब्दं व्याकुर्वन् अव्याप्तिं

---

पाठ. १. °भूतप्रतीति° – मधु. । २. लक्षणस्याप्यभावात् – मधु. ।

**ग्निहोत्रं जुहोतीत्यत्र अग्निहोत्रपदस्य नित्याग्निहोत्रनामत्वं तत्प्रख्य[1]नयेन [2]सिद्धम् । अयं चाग्निहोत्रशब्दः कर्मान्तरे नित्याग्निहोत्र[3]साधर्म्यात् साध्यवसानलक्षणया प्रवर्तत इति प्रकरणान्तरे 'प्रयोजनान्यत्वम्'इत्यत्र निर्णीतम् । न ह्यत्र**

---

**नौका**

गुणविधित्वेन पूर्वपक्षयित्वा कर्मनामधेयमिति राद्धान्तितमित्यर्थः । अयं कर्मनामत्वेन सिद्धः[1] । कर्मान्तरे[2] नित्याग्निहोत्र-भिन्ने कर्मणि । साध्यवसानलक्षणयेति । [3]विषयिण्यप्रस्तुते विषयस्य प्रस्तुतस्य निगरणेनाभेदप्रतिपत्तिरध्यवसायः । तेन सहिता लक्षणा साध्यव-सानलक्षणा तया । (तथा) 'चायं [चेयं] कामधेनुः'इत्यत्रेव साधर्म्यात् कर्मान्तरे मासकर्तव्ये अग्निहोत्रशब्दः प्रवर्तत इति प्रकरणान्तरे 'प्रयोजना-न्यत्वम्'इत्यधिकरणे निश्चितमित्यर्थः । विस्तरस्तु तत्रैव द्रष्टव्यः । एव-मग्निहोत्रशब्दस्य [4]लक्षणया प्रवृत्तिमुपपाद्य अव्याप्तिमाह — तदर्थस्येति ।

---

**मन्दरः**

दर्शयति – तथा हीति । 'यावज्जीवमग्निहोत्रं जुहोति'इत्यत्र 'विषयवाक्य' इति शेषः । नित्याग्निहोत्रनामत्वं नित्याग्निहोत्रनामपरत्वमित्यर्थः । तत्प्रख्य-नयेन तत्प्रख्याधिकरणन्यायेन । तद्विचारेणेत्यर्थः । तदुक्तम् – 'विषयो विशय-श्चैव पूर्वपक्षस्तथोत्तरः । तयोः फलं च पञ्चैते शास्त्रेऽधिकरणं मतम् ॥' इति । 'तत्प्रख्यं चान्यशास्त्रम्' इत्यस्य – 'यावज्जीवमग्निहोत्रं जुहोति'इति विषयवाक्यम् । विषयवाक्यस्थाग्निहोत्रपदम्–'अग्नौ हूयतेऽनेन'इति दध्यादिगुणपरं वा ? 'अग्निर्हूयतेऽस्मिन्' इति कर्मनामपरं वेति विशयः ।

---

पाठ १. °नये – नौका ख., °न्यायेन – मधु. । २. प्रसिद्धम् – ख., सिद्धमित्य-ग्निहोत्र° – मधु. । ३. °साम्याल्लक्षणया – ख. ।

---

१. सिद्धिः – मातृका । २. कर्मान्तरेणेत्यग्नि° – मातृका । ३. विषयिणी अप्रस्तुतेन – मातृका । ४. लक्षणायाः – मातृका ।

मानान्तरविरोधः । तदर्थस्य प्रत्यक्षाद्यगोचरत्वात् । तस्मान्मुख्यार्थपरिग्रहे वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाबीजम् । उक्तं हि—

"वाक्यप्रामाण्यभङ्गः स्यात् स्वाभिधेयपरे पदे ।
लक्षणा तत्र विज्ञेया वाक्ये वैदिकलौकिके ॥"

इति । अस्ति च — 'गङ्गायां घोषः प्रतिवसति', 'आदित्यो यूपः' इत्यादिलौकिकवैदिक[1]वाक्येषु मुख्यार्थमात्रपरत्वे वाक्यप्रामाण्यानुप-

---

नौका

एवं पक्षद्वयं दूषयित्वा स्वमतमुपसंहरति — तस्मान्मुख्येति । अत्रार्थे सम्मतिमाह — उक्तं हीति । लक्ष्ये लक्षणं योजयति — अस्ति चेति । वाक्यप्रामाण्यानुपपत्तिरिति । 'गङ्गायां घोषः' इत्यादिलौकिकवाक्ये गङ्गापदस्य प्रवाहरूपमुख्यार्थमात्रपरत्वे [1]प्रवाहे घोषाधिकरणत्वबाधात् वाक्यमप्रमाणं स्यात् । अतो गङ्गापदस्य तीरे[2] लक्षणा आश्रयणीया । एवम्–'आदित्यो वै यूपः' इत्यादिवैदिकवाक्ये आदित्यशब्दस्य आदित्यरूपमुख्यार्थपरिग्रहे [3]समानाधिकरणविभक्तिबल[4]लभ्याभेदान्वयस्य आदित्ययूपयोः बाधितत्वादप्रामाण्यं वाक्यस्य

---

मन्दरः

गुणविधायकमिति पूर्वपक्षः । तं दध्यादिगुणं ख्यापयतीति तत्प्रख्यम् । अन्यशास्त्रं शास्त्रान्तरं चास्तीति नित्याग्निहोत्ररूपकर्मनामपरं भवतीत्युत्तरः पक्षः । अन्यशास्त्रं तु — 'आज्येन जुहुयात्'इत्यादिकम् । तयोः फलं तु तदर्थप्रतिपादनेनैव प्रव्यक्तम् । अयं चेति । 'अयं' तत्प्रख्यन्यायानुगृहीत इत्यर्थः ।

---

पाठ. १. वाक्ये – मधु. ।

---

१. प्रवाहो – मातृका । २. नीरे – मातृका । ३. सामान° – मातृका । ४. लभ्यभेदा° – मातृका ।

**पत्तिः। [1]यद्यपि तत्र वाच्यार्थान्वयानुपपत्तिर[2]प्यस्ति, तथापि — लोके '[3]सुवर्णपुष्पाम्' इत्यादौ पदार्थानामन्वयसम्भवे[4]ऽपि वाक्यार्थं हित्वा 'शूरादित्वं सम्पदो हेतुः'-निष्प्रयोजने तात्पर्यासम्भवेन वाक्यप्रामाण्यानुपपत्तेः प्रतीयमानं इति[5] ध्वनिना सूच्यते। वेदे च — '[6]वायुर्वै क्षेपिष्ठा देवता'इत्यादौ**

---

नौका

स्यादत आदित्यपदस्य आदित्यसदृशे लक्षणेति, सर्वत्र वाक्यप्रामाण्यानुपपत्तेः लक्षणाबीजत्वं स्यादिति भावः। अनुपपत्तिरस्तीति। तथा च — तस्यैव लक्षणाबीजत्वं स्यादिति भावः। सुवर्णेति। 'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः। शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्।' इत्यादौ। ध्वनिना लक्षणामूलध्वनिना। प्रतीयमानवाक्यार्थत्यागेनान्यार्थस्वीकारात्। [1]सूच्यत इति।

---

मन्दरः

चस्त्वर्थः। कर्मान्तरे नित्याग्निहोत्रसदृशे सत्रयागाङ्गभूते कस्मिँश्चित् कर्मणि। 'साध्यवसानलक्षणया' सादृश्यमूलत्वाद् गौण्येति शेषः। प्रकरणान्तर इति। प्रकरणान्तरे अग्निहोत्रप्रकरणाद् भिन्ने सत्रयागप्रकरणे। 'प्रयोजनान्यत्वं फलभेदः' इत्यत्र निर्णीतम्। एवमग्निहोत्रशब्दार्थ-मुक्त्वा अव्याप्तिं दर्शयति – न हीति। तत्र हेतुं प्रतिपादयति – तदिति। तदर्थस्य कर्मरूपस्याग्निहोत्रशब्दार्थस्य, प्रत्यक्षाद्यगोचरत्वात् प्रवाहादीनामिव प्रत्यक्षादिप्रमाणाविषयत्वात्। वाक्यप्रामाण्यानुपपत्तिस्तु 'मासमग्निहोत्रं जुहोति'इत्यत्र -- अग्निहोत्रपदस्य नित्याग्निहोत्ररूपमुख्यार्थपरत्वे तस्य तत्प्रख्या-धिकरणेन 'यावज्जीवम्'इत्यादिविषयवाक्ये विहितस्य सत्रयागे पुनर्विधाना-

---

पाठ. १. यद्यप्यत्र – मधु.। २. अपिर्न पठ्यते – नौका। ३. पद्यमिदं पूर्णतया पठ्यते मधु. मन्दर.। ४. अपिर्न पठ्यते – मधु.। ५. °इति च – मधु.। ६. 'वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स (ए)वैनं भूतिं गमयति'इत्यादौ – मधु.।

---

१. स्याच्चत इति – मातृका।

सम्भ[1]वत्येव वाच्यार्थान्वये नैरर्थक्यवशेन देवताप्राशस्त्यलक्षणया कर्मणः प्राशस्त्यं लक्ष्यत इत्यर्थवादाधिकरणे निर्णीतम्। तस्माद् वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाक्षेपिकेति सूक्तम्॥

'तद्योग' इत्यादिपदनिर्वचनम् –

तद्योग इति योगशब्देन सम्बन्धमात्रं विवक्षितम्। प्रयोजनं च[2] यथासम्भवं तत्र तत्र द्रष्टव्यम्। अत्र — 'रूढितो वा प्रयोज-

---

**नौका**

तथा चात्रापि वाक्यप्रामाण्यानुपपत्तेः सत्त्वात् सर्वत्रापि तस्या एव मूलत्वमिति भावः। उक्तमर्थं वैदिकवाक्येऽप्याह — वेदे चेति। उपसंहरति —– तस्मादिति॥

---

**मन्दरः**

योगाद् दुर्निवारेति तत्त्वम्। तस्मात् प्रकारान्तरप्रतिपादितलक्षणयोरव्यापकत्वादित्यर्थः। एवं प्रतिपाद्य – 'वाच्यार्थबाध' इत्यत्र स्वाभिमतार्थं विस्रम्भाय कारिकारूपेण निश्चिनोति - वाक्येति। उक्तमर्थं क्रमेण लोकवेदयोर्दर्शयति – अस्ति चेति। अस्य वाक्यप्रामाण्यानुपपत्तिरित्यनेन सम्बन्धः। कैश्चिद् वाच्यार्थान्वयानुपपत्तिर्विवक्षिता, तां निराकर्तुमाह–यद्यपीति। तत्र 'वाच्यार्थबाध' इत्यत्रेत्यर्थः। 'तथापि' वाच्यार्थान्वयानुपपत्तिरूपार्थे विद्यमाने सत्यपीत्यर्थः। तस्यार्थस्य क्रमेण लोकवेदयोर्व्यभिचारं दर्शयति - सुवर्णेति। निगदव्याख्यातोऽयं श्लोकः। निष्प्रयोजने - 'सर्वेऽपि चिन्वन्ति'इति वक्तव्ये त्रय इत्युक्तत्वात् प्रयोजनरहिते शूरादिकर्तृकसुवर्णपुष्पपृथिवीकर्मकविचयनरूपवाक्यार्थे। ध्वनिना लक्षणामूलेनेति शेषः। वेदे चेति। क्षेपिष्ठा क्षिप्रगामिनी 'तस्मात्' वाच्यार्थान्वयानुपपत्तिरूपार्थस्याप्यनैकान्तिकत्वादित्यर्थः। सूक्तं सुष्ठूक्तम्॥

---

पाठ १. सम्भवति वाच्यस्य वाक्यार्थान्वये – मधु.। २. न पठ्यते – मधु.।

नाद्' इत्येतल्लक्षणाविभागपरम्। [1]शिष्टं लक्षणपरमिति विज्ञेयम्॥

रूढिलक्षणा -

तत्र रूढिलक्षणा यथा —

प्रवीणो भवतो राम! कृपाणो युधि यन्निजम्।
कोशं चर्ममयं हित्वाऽगृह्णाद् रत्नमयं द्विषाम्॥१॥

---

**नौका**

एवं तावल्लक्षणे 'वाच्यार्थबाध' इत्यनेन विवक्षितार्थमुक्त्वा तद्योगपदेन विवक्षितार्थमाह - तद्योग इति। प्रयोजनं चेति। निष्प्रयोजनलक्षणाया अभावादिति भावः। लक्षणे द्वितीयपादं विभागपरमिति व्याचष्टे - अत्र रूढितो इति। रूढिलक्षणा प्रयोजनलक्षणा चेति विभागः। इदं च विवेचितमेव पूर्वमस्माभिः॥२॥

तत्राद्या[1]मुदाहरति — तत्रेत्यादिना। तत्र तयोर्मध्ये॥

प्रवीण इति। हे राम! भवतः कृपाणः खड्गः प्रवीणो, निपुण इत्यर्थः। "[2]कर्तर्यां छुरिकायां च [3]कृपाणी स्यादसौ तु ना" इति रत्नमाला (पं. १४६७)। निपुणत्वे हेतुमाह — यदित्यादि। यद् यस्मात् युधि चर्ममयं

---

**मन्दरः**

ततस्तद्योगशब्दार्थमाह - तद्योग इति। सम्बन्धमात्रं सम्बन्धसामान्यम्। वाच्यार्थलक्ष्यार्थयोर्ये ये सम्बन्धाः सम्भवन्ति ते सर्वेऽपि 'योग'शब्देन सङ्गृह्यन्त इति भावः। 'मात्रं कात्स्न्र्येऽवधारणे' इत्यमरः (३.३.१७८)॥२॥

---

पाठ. १. विशिष्टं - मधु.।

---

१. तत्राद्य° - मातृका। २. कर्तलौ - मातृका। ३. कृपाणः - मधु.।

अत्र 'प्रवीण' इत्यत्र[1] वीणाप्रकर्षस्य प्रकृतानुप[2]योगात् रूढितः प्रसिद्धे[3]रेव [4]लक्षणाऽऽश्रीयते ॥

नौका

चर्मस्वरूपम् । स्वरूपार्थे मयट् । कोशम् असिपिधानं हित्वा द्विषां सम्बन्धि(नं) रत्नमयं रत्नस्वरूपं (कोशं) द्रव्यसमूहम् अगृह्णाद् जग्राहेत्यर्थः । 'कोशो[1]ऽस्त्री कुड्मलेऽर्थौघे गुह्येऽण्डे शास्त्रदिव्ययोः । गृहे देहे पुस्तकौघे पेश्यामसिपिधानके' इति रत्नमाला (पं. १०९७) । अत्र साध्यसाधननिर्देशाद् अनुमानालङ्कारः । स[2] च कोशमिति श्लेषमूलः ॥

अत्र कुत्र कथं लक्षणेत्यपेक्षायां तदेतदुपपादयति — अत्रेत्यादिना । 'रूढित' इत्यस्यार्थकथनं प्रसिद्धेरिति ॥

मन्दरः

क्रमप्राप्तां रूढिलक्षणामुदाहरति — प्रवीण इति । प्रवीणो निपुणः । कोशं खड्गपिधानं धनाधिकं च । 'कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः (३.३.२२१) ॥

लक्षणाबीजभूतं मुख्यार्थबाधं दर्शयति — अत्रेति । प्रकृष्टा वीणा यस्य स प्रवीणः । प्रवीणत्वमेव वीणाप्रकर्षः, तस्य प्रकृतानुपयोगात् मुख्यार्थबाधः । वाच्यलक्ष्ययोः प्रावीण्ययोरेकपदोपात्तत्वोपाधिकाभेदः सम्बन्धः । लक्षणस्थरूढिपदस्य शक्तिपरत्वे विरोधाद् विवक्षितार्थमाह — प्रसिद्धेरेवेति । योगे सत्यपीत्यवधारणार्थः । ननु प्रवीणपदस्य रूढिशक्त्या निपुणबोधक-

पाठ. १. 'प्रवीण इति' इत्येव – मधु. । २ योगित्वात् – मधु. । ३. प्रसिद्धेः केवलं – मधु. । ४. निपुणत्वे लक्षणा – मधु. ।

१. कोशोऽस्त्री कुड्मलेऽर्थौघे सम्पत्तौ – अन्या पेशी पटुकाय पेश्या° – मातृका । २. न च कोकमिति – मातृका ।

**प्रयोजनलक्षणावैविध्यम् –**

**प्रयोजनलक्षणा तु प्रथमं – 'शुद्धा सारोपा साध्यवसाना च' इति [1]त्रिविधा। तत्राद्या – जहत्स्वार्थाऽजहत्स्वार्था जहदजहत्स्वार्था चेति त्रिधा[2]। इतरे तु 'प्रत्येकं गौणी शुद्धा चेति[3] द्विविधे' इति फलतो लक्षणा सप्तविधेति विभागं सिद्धवत्कृत्य क्रमेण तासां लक्षणोदाहरणे दर्शयन्नादौ जहत्स्वार्थां लक्षयति —**

---

**नौका**

एवं विभागाभावेन 'रूढितो लक्षणां' निरूप्य 'प्रयोजनतो लक्षणां' विभजन्नाह — प्रयोजनलक्षणा त्विति। शुद्धां विभजते — तत्राद्येत्यादिना। जहदादित्रयाणां शुद्धत्वं स्फुटीकरिष्यत्युपरिष्टात्। इतरे त्विति। सारोपा साध्यवसाना चेत्यर्थः। फलतो लक्षणा प्रयोजनाल्लक्षणा ॥

---

**मन्दरः**

त्वात् कथं निपुणत्वे लक्षणेति चेद्, उच्यते। यद्यपि प्रवीणशब्दे प्रकृष्टा वीणा यस्येत्यवयवशक्त्या विलक्षणवीणाशालित्वरूपार्थः, रूढिशक्त्या निपुणत्वरूपार्थश्चेति नीरजपदवद् योगरूढी। तथापि क्वचिद् योगरूढस्य पदस्यावयवार्थानन्वयात् स्थलकमले नीरजपदस्येव रूढ्यर्थे विश्रान्तिरिति बोध्यम् ॥

अथ प्रयोजनलक्षणां विभज्योदाहरति — प्रयोजनलक्षणेति। 'फलतः' पर्यवसानादित्यर्थः। सप्तविधेति। १ जहत्स्वार्था २ अजहत्स्वार्था ३ जहदजहत्स्वार्था ४ शुद्धसारोपा ५ गौणसारोपा ६ शुद्धसाध्यवसाना ७ गौणसाध्यवसाना चेति ॥

---

पाठ. १. त्रिधा – मधु. ख.। २. त्रिविधा – मन्दर॰। ३. चेति फलतो – इत्येव – मधु.।

१. जहत्स्वार्था –

स्वार्थं हित्वा परोक्तिश्चेज् जहत्स्वार्था तदा भवेत् ॥

[1]यदा गङ्गादिशब्दः परस्य तटादेः घोषाद्यधिकरणत्वसिद्धये स्वार्थं हित्वा स्वात्मानं तटाद्यर्थे प्रवर्तयति, तदा स्वार्थत्यागाज्जहत्स्वार्थाऽन्वर्थ[2]संज्ञेत्यर्थः ॥

यथा –

ग्रामास्त्रयः स्वरहिताः क धृताः सदैव
श्राव्याश्च मध्यमयुता भरतेन दाताः ।

---

नौका]

लक्ष्ये लक्षणमु(प)पादयति — यथा गङ्गादिशब्द इति । स्वार्थत्यागात् स्वार्थस्य स्रोतोरूपस्य त्यागात् ॥

स्वयमुदाहरति – ग्रामा इति ॥

श्लोकं स्वयमेव विवृणोति — भरतेनेत्यादिना । ग्रामशब्दस्य उक्तार्थे सम्मतिमाह — तथा स्वराणामिति । 'दैप् शोधने' इत्यस्माद् धातो रूपमिति ।

---

मन्दरः

जहत्स्वार्थां लक्षयति — स्वार्थमिति ।

लक्षणं व्याकरोति — यदेति । स्वार्थं प्रवाहादिरूपमित्यर्थः ।

उदाहरति — ग्रामा इति ।

---

पाठ. १. यथा – नौका. ख. । २. सङ्केतेत्यर्थः – मधु. ।

रामेण तून्नतधनाः शतशो महार्हाः
प्रेक्ष्याश्च पात्रवशगा निहिता[1] नदीषु ॥२॥

भरतेन सङ्गीतशास्त्रप्रवर्तकेन। ग्रामाः स्वरसन्दोहात्मकाः। '[2]तथा [3]स्वराणां सन्दोहो ग्राम इत्यभिधीयते' इत्युक्तत्वात्। *दाताः शोधिताः। [4]'दैप् शोधने' इति[5] धातो रूपम्[6]। [7]श्लेषमहिम्ना भरतेन राजविशेषेण जनपदविशेषा वितीर्णा इत्यपि ध्वन्यते। ते च त्रय एव —

'षड्जग्रामस्तथैवैको मध्यमग्राम एव च।
गान्धारग्राम इत्येतद् ग्रामत्रयमुदाहृतम्॥'

---

नौका

अत्र यद्यपि 'दाधा घ्वदाप्' (पा. १.१.२०) इति सूत्रस्थ —' दाप्प्रतिषेधे न दैप्यनेजन्तत्वात्' (कात्या. वा. १८४) इति भाष्यकैयटादिग्रन्थपर्यालोचनया 'दैप् शोधने' इति धातोर्घुसंज्ञाप्रतिषेधस्यैव राद्धान्तिततत्वात् 'दो दद्घोः' (पा. ७.४.४६) इति दद्भावाप्रसक्तेः नेदं रूपं सिध्यति। तथापि कविरेव

---

मन्दरः

स्वयं व्याकुर्वन् 'लक्षणं' योजयति — भरतेनेति। अन्यत्र विप्रसात्करणमेव शोधनम्। स्वैरिति। 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः (३.३.२११)। 'सम्प्रदाने' प्रतिग्रहीतरीत्यर्थः।

---

पाठ. १. विहिताः — मधु.। २. यथा — ख.। ३. न पठ्यते — मधु.। * दत्ताः — नौका.। ४. वाक्यमिदं न पठ्यते — मधु.। ५. इत्यस्माद धातोः — नौका.। ६. अनन्तरं — जनपदपक्षे दानमतन्तीति दाता, दत्ता इत्यर्थः। दत्ता इति पाठे तु 'दैङ् रक्षणे' इति धातुरूपमिति ज्ञेयम्'' इत्यधिकं पठ्यते — ख.। ७. शब्दश्लेष° — ख.।

इत्युक्तत्वात् । नापरिमिता इति[१] ध्वन्यते । स्वरहिताः स्वरैर्निषादादिभिः [२]सङ्गीभूतैर्हिताः प्रिया इति स्वरूपकथनम् । [३]स्वैर्धनै रहिता इति निन्दा च [४]व्यज्यते । क धृताः कापि धृताः । स्वराणामभिव्यक्तिमात्रशरीरत्वान्नैकत्र धृता इति [५]स्वरूपोक्तिः । यत्र [६]कचन देशे सम्प्रदाने च निहिता इति निन्दा च व्यज्यते । सदैव श्राव्या नित्यं [७]श्रोत्रग्राह्या इति [८]स्वभावोक्तिः । [९]ग्रामा 'दत्ता' इति नित्यं वाङ्मात्रसिद्धा न तु दर्शनयोग्या इति व्यज्यते । किञ्च – [१०]मध्यमयुताः मध्यमग्रामेण सङ्गताः । [११]न त्रयोऽप्युत्कृष्टा इति [१२]ध्वन्यते । एवं भरत-

---

नौका

प्रष्टव्य इति[1] । अत्र श्लेषेणार्थान्तरं प्रतीयत इत्याह — अत्र श्लेषेति । अर्थश्लेषेत्यर्थः । स्वैर्धनैरिति । 'स्वोऽस्त्रियां धने' इत्यमरोक्तेः । अत्रालङ्का-

---

मन्दरः

अत एवेति । स्वरहिता इत्यत्र जतुकाष्ठन्यायेन शब्दस्यैव श्लिष्टत्वाच्छब्दश्लेषः। अन्यत्र — एकनालावलम्बिफलद्वयवदर्थयोरेव श्लिष्टत्वादर्थश्लेषः । तयोः प्रतिभयाऽतिशयोक्त्युत्थापितयाऽसम्बन्धे सम्बन्धरूपातिशयोक्त्यानुप्राणितः ॥

---

पाठ. १. इति च ध्वनिः – मधु.. इत्यपि – ख. । २. सङ्घातभूतैः – मधु. । ३. स्वेनार्थेन – ख. । ४. गम्यते – मधु. । ५. स्वरोपोक्तिकथनम् – ख., स्वभावोक्तिः – मन्दर. । ६. क्वचन असम्प्रदायेन हिता इति – मधु. । ७. श्रोतव्याः – मधु., श्रवणसाध्याः – ख. । ८. स्वभावोक्तिकथनम् – ख., स्वरूपकथनम् – मधु. । ९. अन्यत्र ग्रामा – मधु. मन्दर. । १०. 'मध्यमेन ग्रामेण युताः सङ्गताः' इत्येव – मधु । ११. अन्यत्र न – मधु. मन्दर. ख. । १२. भावः – मधु. ख. ।

---

टिप्प. 1. दत्ता इति पाठमादृत्य नौकाकृद्भिर्विवेचितम् । वस्तुतस्तु दाता इति पाठमादृत्यैव 'दैप् शोधने' इत्यादिग्रन्थ उपक्रान्त इति स एव पाठः साधीयान्, अनुपपत्तेरिति वेद्यम् ।

दत्तदग्रामेभ्यो[1] रामदत्तग्रामाणामतिशय उत्तरार्धे प्रतिपादितः [2]स्फुट एव। अत[3] एवात्र शब्दार्थश्लेषप्रतिभोत्थापितातिशयोक्त्यनुप्राणितो व्यतिरेकालङ्कारः।

अत्र नदीनां स्रोतोरूपाणां ग्रामाधिकरणता न सम्भवतीति नदी[4]शब्दः, तस्मिन् मुख्यार्थे गृहीते वाक्यप्रामाण्यभङ्गात् तं त्यक्त्वाऽधिकतरशैत्यपावनत्वादि[5]द्योतनाय तत्सम्बन्धिनि तीरे स्वात्मानमर्पयतीतीयं जहत्स्वार्था॥

---

नौका

रान् विशदयति — अत्र शब्दार्थेति। स्वरहिता इत्यत्र शब्दश्लेषः। इतरत्र सर्वत्रार्थश्लेषः। तयोः प्रतिभया महिम्ना उत्थापिता या अतिशयोक्तिः स्वरसन्दोहात्मकग्रामाणां [1]जनपदरूपग्रामाणां च भेदेऽप्यभेदरूपा [2]पूर्वार्धे निर्दिष्टा, तदनुप्राणितो व्यतिरेकालङ्कारः। उपमेयानां श्रीरामदत्तग्रामाणामुपमानभूतभरतदत्तग्रामेभ्योऽतिशयप्रतीतेरिति भावः। एषां लक्षणानि तु वक्ष्यन्ते॥

अत्र निहिता नदीष्वित्यत्र लक्षणेति प्रतिपादयति — अत्र नदीनामित्यादिना। मुख्यार्थे बाधकमाह — स्रोतोरूपाणामिति। जहत्स्वार्थतां

---

मन्दरः

अत्रेति। वाचकशब्दप्रयोगे फलप्रतिपादनाभावं लाक्षणिकपदे तत्प्रतिपादनं च दर्शयन्नाह — नदीशब्द इति। तत्सम्बन्धिनि तीरे स्वात्मानमपर्यतीति। अयं भावः — 'स्वायत्ते शब्दप्रयोगेऽन्यवाचकपदप्रयोगानौचित्याद्

---

पाठ. १. °ग्रामाणां न्यूनत्वमापाद्यातो रामदत्तग्रामाणा° – मधु.। २. स्पष्ट एव – मधु.। ३. 'अत एव' न पठ्यते – नौका.। ४. न पठ्यते – मधु.। ५. °बोधनाय – मधु.।

---

१. जनकपद° – मातृका। २. पूर्वार्थे – मातृका।

जहत्स्वार्थाया अप्रस्तुतप्रशंसामूलत्वम् –

इयमप्रस्तुतप्रशंसादेर[1]लङ्कारस्य [2]मूलम्। *सामान्यविशेष-कार्यकारण[3]रूपाणामन्यतमकथनात् तेषामेवान्यतमस्य प्रतियोगिनः प्रस्तुतस्य गम्यत्वे ह्यप्रस्तुतप्रशंसा। तत्राप्रस्तुतस्याप्रस्तुतत्वादेव कथनमनुपपन्नं सत् स्वार्थत्यागेन प्रस्तुतमाक्षिपतीति युक्तमस्या जहल्लक्षणामूल(क)त्वम् ॥

---

नौका

व्यनक्ति — तं त्यक्त्वेति। प्रयोजनमाह — अधिकतरेति। तीर इति [1]पदे न(दी)तटवाचिनि। लक्ष्यार्थस्य मुख्यार्थेन स्रोतसा अविनाभावः सूचितः ॥

अथास्याः स्वशास्त्रोपयोगितामाह — इयमप्रस्तुतप्रशंसादेरिति। आदिना अनन्वयादिपरिग्रहः। अप्रस्तुतप्रशंसालक्षणकथनपूर्वकं बीजत्वं विशदयति — सामान्यविशेषेत्यादिना। प्रतियोगिनो निरूपकस्य ॥

---

मन्दरः

'नदीतीरेषु निहिता' इति प्रयोक्तव्ये नदीषु निहिता इति प्रयोक्तुर्नदीगतशैत्यपावनत्वादिधर्मा तदविनाभावसम्बन्धेन तीरेष्वपि प्रतीयन्तामित्याशय इति। इति हेतोः ॥

अलङ्काराः केचिदभिधामूलाः' केचिल्लक्षणामूलाः केचिद् व्यञ्जनामूलाश्च। इयं कस्यालङ्कारस्य मूलमित्यत्राह — इयमिति। 'अप्रस्तुतप्रशंसादेः' व्याज-

---

पाठ. १. 'अलङ्कारस्य' न पठ्यते – मधु.। २. बीजम् – नौका. ख., वाङ्गम्–मधु.। ३. °स्वरूपाणा°–मधु.। *'सामान्यविशेषकार्यकारण' – इति न पठ्यते–ख.।

---

१. पदेन तद्वाचिना – मातृका।

विपरीतलक्षणा –

यदा पुनः स्वाभिधेयविपरीतमर्थं लक्षयति, तदा सा जहत्स्वार्थै[1]व विपरीतलक्षणे[2]त्युच्यते। यथा –

रामः सुरासुरदुरासददुर्गवर्ती।
दैत्यः पराधंचतुरङ्गचमू[3]सहायः।
जय्यः कथं वद विभीषण! रावणेन
स्थानच्युतेन मनुजेन पदातिना च ॥३॥

इदमिन्द्रजिद्वचनमभिधेयविपरीतमर्थं लक्षयति। रामरावणयो-

नौका

ननु विपरीतलक्षणेति काचिल्लक्षणाऽस्ति, सा किमिति नोक्तेत्याशङ्क्य – जहत्स्वार्थाया एव विधान्तरं सा नातिरिक्तेति तल्लक्षणकथनपूर्वकं तामुपपादयति– यदा पुनरिति॥

राम इत्यादि। स्पष्टार्थः। जय्य इति। 'क्षय्यजय्यौ शक्यार्थे' (पा. ६.१.८१) इति निपातनात् साधुः ॥३॥

अत्र लक्षणा[1]सत्त्वं सूचयति — इदमिन्द्रजि(दि)ति। लक्षयतीति। व्याजस्तुत्या प्रवृत्तमिदं स्वाभिधेयविपरीतार्थान्तरं लक्षयतीत्यर्थः। लक्षणा[2]बीज-

मन्दरः

स्तुत्यादिः 'आदि'शब्दार्थः। सामान्येति। प्रतियोगिनः आधेयभूतस्य। तत्र अप्रस्तुतप्रशंसायाम्॥

जहत्स्वार्थायाः प्रकारान्तरं प्रदर्शयन्नुदाहरति — राम इति। परार्धसङ्ख्याकाः चतुरङ्गचम्वः सहाया यस्य सः। जय्यः जेतुं शक्यः ॥३॥

पाठ. १. 'एव' न पठ्यते – मधु.। २. इतिर्न पठ्यते – मधु. ख.। ३. °समूहः – मधु. ख.।

१–२. लक्षण° – मातृका।

मुख्यार्थासम्भवोऽनुपपत्तिः । विरोधः सम्बन्धः । रामस्य सुजयत्वं रावणस्य दुर्जयत्वं प्रयोजनम् ॥

विपरीतलक्षणाया व्याजस्तुतिमूलत्वम् —

इयं तु व्याजस्तुतेर्बीजम् । यत्र वाच्यया निन्दया स्तुतिः, स्तुत्या[1] वा निन्दा [2]गम्यते, सा हि व्याजस्तुतिः । तत्र विपरीतार्थप्रतिपत्तिर्विरुद्धलक्षणामूलैव ॥

२. अजहत्स्वार्था —

अजहत्स्वार्थां लक्षयति —

शब्दः स्वार्थक्रियासिद्धयै स्वार्थत्यागेन लक्षयेत् ।
अर्थान्तरं स्वार्थयुतं सा[3]ऽजहत्स्वार्थिका भवेत् ॥

---

नौका

भूतामनुपपत्तिमाह – [1]रामरावणयोरिति । सम्बन्धमाह — विरोध इति । वाच्यार्थलक्ष्यार्थयोः विरोधः सम्बन्ध इत्यर्थः । लक्षणायाः प्रयोजनमाह — रामस्येति ॥

अस्या अपि स्वशास्त्रोपयोगमाह – इयं त्विति । बीजत्वं विशदयितुं व्याजस्तुतिलक्षणार्थमनुवदति — यत्र [2]वाच्ययेति ॥

---

मन्दरः

लक्षणाप्रयोजकानि वाच्यार्थबाधादीनि दर्शयति – रामरावणयोरिति । अनुपपत्तिरिति । वाक्यप्रामाण्यानुपपत्तिरित्यर्थः । सम्बन्ध इति । वाच्यलक्ष्ययोरिति शेषः ॥

---

पाठ. १. स्तुत्या वाच्यया निन्दा च – मन्दरः । २. व्यज्यत्वे – मधु. । ३. 'सा'-न पठ्यते – मधु. मन्दर. ।

---

१. रामरामयोः – मातृका । २. वाचयेति – मातृका ।

यत्र शब्देन स्वार्थगतक्रियासिद्धये [1]स्वार्थापरित्यागेनैव[2] तद्विशिष्टम-र्थान्तरं लक्ष्यते । [3]यथा — 'कुन्ताः प्रविशन्ति' इत्यत्र कुन्तप्रवेशाय तद्वन्तः [4]पुरुषाः । सा अजहत्स्वार्था लक्षणेत्यर्थः ।]

यथा -

दयादाक्षिण्यदातृत्वधैर्यधर्मादयो गुणाः ।
विशन्ति भवतो राम सुधर्मासन्निभां सभाम् ॥४॥

अत्र दयादिगुणानां स्वतः सभाप्रवेशासम्भवात् तत्सिद्धये दयादि-शब्दाः स्वार्थोपादानेनैव तत्सम्बन्धिनः पुरुषान् लक्षयन्ति ॥

---

नौका

एवं जहत्स्वार्थामुक्त्वा अजहत्स्वार्थां लक्षयितुमवतारयति — अजह-त्स्वार्था[1]मिति ॥

प्रसिद्धोदाहरण[2]निर्देशं कुर्वन् लक्षणार्थमाह—यत्र शब्देनेत्यादिना । पुरुषा इति कुन्तपदेन लक्ष्यन्त इति शेषः ॥

---

मन्दरः

अजहत्स्वार्थां लक्षयति - शब्द इति ॥

व्याकरोति - यत्रेति ॥

---

पाठ. १. स्वार्थात्यागे° - मन्दर° । २. 'एव' न पठ्यते - ख. । ३. तत्रा-जहत्स्वार्था यथा - ख. । ४. पुरुषा लक्ष्यन्ते - मधु. ख.

---

१. त्स्वार्थेति - मातृका । २. °निर्दिष्टम् - मातृका ।

अजहत्स्वार्थतासमर्थनम् --

न च स्वार्थपरित्यागे, 'तत्र शब्दस्याभिधा, अंशान्तरे लक्षणा च'[1] इत्येकशब्दस्यैकदैव वृत्तिद्वयापत्तिरिति वाच्यम् ।

अत्रापि स्वार्थं हित्वैव स्वार्थविशिष्टेऽर्थान्तरे सृष्टिन्यायेन लक्षणास्वीकारात् । हन्त तर्हि अजहत्स्वार्थता कथमिति चेत्, —

---

नौका

स्वयमुदाहरति — दयादाक्षिण्येति । दया परदुःख[1]प्रहाणेच्छा, दाक्षिण्यं सरलत्वम् । सुधर्मासन्निभां देवसभासदृशीम् । 'स्यात्सुधर्मा देवसभा' (१.१.४८) इत्यमरः ॥४॥

अत्र लक्षणं भावयति - अत्र दयेत्यादिना । तत्सम्बन्धिनः पुरुषानिति । तेन स्वार्थेन[2] सम्बन्धिनः [3]सम्बद्धान्, तद्विशिष्टान् पुरुषानित्यर्थः ॥

नन्वेतावता — 'अजहत्स्वार्थायां स्वार्थत्यागो नास्ति' इत्यापतितम्, तत्रायुक्तमित्याशयेन शङ्कते — न च स्वार्थेति । तत्र स्वार्थांशे । अंशान्तरे अन्यार्थे । वृत्तिद्वयापत्तिरिति । न चेष्टापत्तिः । 'सकृदुच्चरितः

---

मन्दरः

उदाहरति - दयेति । दाक्षिण्यं मित्रशात्रवसमभावः । धर्मो विध्युक्त-कर्मानुष्ठानम् । वैदुष्यादय आदिशब्दार्थः ॥४॥

लक्षणं लगयति — अत्रेति । तत्सम्बन्धिनः दयादिगुणविशिष्टानित्यर्थः ॥

---

पाठ. १. एकस्य शब्दस्य – मधु°, चेति शब्दस्य – ख. ॥

---

१. °प्रहरणेच्छा – मातृका° । २. स्वाधीनसम्बन्धिनः – मातृका° । ३. सम्बन्धान् – मातृका° ।

[1]नह्यभिधात्यागमात्रेण स्वार्थत्यागः। 'गङ्गायां घोषः' इत्यादिस्थलवैलक्षण्येन [2]स्वाभिहितार्थस्यैवार्थान्तरवैशिष्ट्येन विकृत्य [3]लक्षणया [4]स्वीकारादिति सन्तोष्टव्यम्। सभासदामुत्कर्षद्योतनं प्रयोजनम्[5]॥

---

नौका

शब्दो न वृत्तिद्वयमर्हति' इति निषेधादिति भावः। समाधत्ते — अत्रापीति। अजहत्स्वार्थायामपीत्यर्थः। सृष्टिन्यायेनेति। 'सृष्टीरुपदधाति' इत्यत्र सृष्टिपदस्य सृष्ट्यसृष्टिसमुदाये लक्षणा स्वीकृता, तन्न्यायेनेत्यर्थः। इदं च भूमाधिकरणनामधेयपादे स्पष्टं द्रष्टव्यम्। विस्तरभयान्नेह प्रदर्श्यते। स्वार्थं [1]हित्वेत्यधिकृत्य शङ्कते — हन्त तर्हीति। हन्तेति कष्टे। समाधत्ते — न हीति। वैलक्षण्येनेति। वैलक्षण्ये च 'गङ्गायां घोषः' इत्यत्र गंगापदार्थस्य स्रोतोरूपस्य सुतरां त्यागः। अत्र तु – स्वार्थस्यार्थान्तरवैशिष्टयेनानुप्रवेश इति बोध्यम्। विकृत्य विकारं प्रापयित्वा। स्वीकारादिति। तथा च स्वार्थस्यापि विशिष्टवेषेणानुवृत्तेर्नाजहत्स्वार्थताविरोध इति भावः। अत्र प्रयोजनमाह — सभासदामिति। अस्या अपि [2]लक्षणायाः॥

---

मन्दरः

नन्वेवमपि वृत्तिविरोधः सम्भवतीत्याशङ्क्य समाधत्ते — न चेति। 'तत्र' स्वार्थ इत्यर्थः। शब्दस्याभिधा, अंशान्तरे स्वार्थविशिष्टांशे लक्षणा चेत्येकदैव वृत्तिद्वयापत्तिरिति। परिहरति–अत्रापीति। 'अपि' शब्देन

---

पा०. १. नत्वत्र त्यागमात्रेण – ख°, न ह्यभिधामात्रत्यागेन – मधु°। २. स्वाभिहितमेवा° – ख°, स्वाभिहितार्थमेवा° – मधु° मन्दर°। ३. लक्षणायाः- मन्दर°। ४. तत्स्वीकारादिति – मधु°। ५. 'अस्या अपि' इत्यधिकं पठ्यते – नौका°।

---

१. हित्वेत्युपक्रम्य – मातृका°। २. लक्षणीया – मातृका।

अजहत्स्वार्थायाः समासोक्तिमूलत्वम् —

इयमजहल्लक्षणा समासोक्त्यादेर्बीजम् । प्रस्तुतविशेषणसाम्यादप्रस्तुतस्य गम्यत्वे [1]हि समासोक्तिः । तत्र प्रस्तुतस्वरूपानुमर्देनैव विशेषणमहिम्नाऽप्र[2]स्तुताक्षेपात् ॥

---

**नौका**

[1]तदस्याः समासोक्त्यादिबीजत्वमिति भावः ॥

---

**मन्दरः**

जहत्स्वार्थायामेवेति ज्ञाप्यते । 'अर्थान्तरे' विशिष्टाकारेण विलक्षणत्वादर्थान्तरत्वम् । सृष्टिन्यायेन लक्षणायाः स्वीकाराद् वृत्तिद्वयापत्तिरिति न वाच्यमिति पूर्वेण सम्बन्धः । सृष्टिन्यायस्तु — 'सृष्टीरुपदधाति' इत्यत्र 'सृष्टि'शब्दस्य केवलसृष्टीष्टकानामुपधानाभावाद् वाच्यार्थबाधे सति 'एकया स्तुवत प्रजा आधीयन्त'इत्यनुवाकप्रतिपादितसृष्ट्यसृष्टीष्टकासमुदाये यथा लक्षणा स्वीक्रियते, तथात्रापि वाच्यार्थभूतदयादीनां स्वतः सभाप्रवेशासम्भवात् तद्विशिष्टेषु लक्षणेति । ननु स्वार्थत्स्वागे कथमजहत्स्वार्थतेत्याशङ्क्य समाधत्ते — हन्तेति । हन्तेति हर्षे । स्ववचनव्याघातोऽत्र हर्षकारणम् । न हीति । अभिधेयविशिष्टार्थान्तरस्य लक्ष्यत्वादभिधाया एव त्यागो न त्वभिधेयस्येति अजहत्स्वार्थतेति भावः । ननु कथमभिधायास्त्यागो नाभिधेयस्येत्याशङ्कां परिहरति—गङ्गायामिति । विकृत्य विकृतिं नीत्वा । लक्षणाया लक्षणाख्यव्यापारात् ॥

समासोक्त्यादेरिति । प्रस्तुताङ्कुरादिः 'आदि'शब्दार्थः । उपपत्तिं दर्शयति – तत्रेति । प्रस्तुतस्वरूपस्यानुपमर्देनोपमर्दाभावेन । अत्यागेनेति यावत् ॥

---

पाठ. १. न पठ्यते – मधु° ख° । २. °स्तुतस्याक्षेपात् – मधु° ।

---

१. नन्वस्याः – मातृका. ।

**अनयोरेव लक्षणलक्षणोपादानलक्षणात्वव्यवहारः —**

**अनयो[1]र्जहदजहत्स्वार्थलक्षणयोर्लक्षणलक्षणा उपादानलक्षणेति च[2] संज्ञां विनिवेश्य व्याजहार काव्यप्रकाशकारः ॥**

---

नौका

ननु लक्षणलक्षणा उपादानलक्षणा चेति लक्षणाद्वयं काव्यप्रकाशे श्रूयते। त(द)त्र किमिति नोदाहृतमित्याशङ्क्य — जहत्स्वार्थाया एव लक्षणलक्षणेति अजहत्स्वार्थाया एव उपादानलक्षणेति च नामान्तरकरणमात्रं, न तु तदतिरिक्तं तद् द्वयमित्याशयेनाह — अनयोर्जहदजहदित्यादिना। लक्षणलक्षणेति। लक्षणं नाम [1]परार्थं स्वार्थसमर्पणम्। स्वार्थत्याग इति यावत्। तेनोपलक्षिता लक्षणा लक्षणलक्षणा। अजहत्स्वार्थेति यावत्। 'उपादानलक्षणा' उपादानं स्वार्थापरित्यागः, तेनोपलक्षिता लक्षणा उपादानलक्षणा। अजहत्स्वार्थेति यावत् ॥

---

मन्दरः

उदाहृतयोः प्रयोजनलक्षणयोर्मतान्तरे संज्ञान्तरमित्याह — अनयोरिति। जहदजहत्स्वार्थे इति लक्षणे तयोः। जहत्स्वार्थाया लक्षणलक्षणेति अजहत्स्वार्थाया उपादानलक्षणेति च संज्ञां विनिवेश्य निधाय। कृत्वेति यावत्। तद्व्यवहारप्रकारस्तु 'स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्। उपादानं लक्षणं च' (का. प्र. २.१०) इति। 'आद्या स्वार्थमुपादाय अन्यं लक्षयतीत्युपादानलक्षणा, द्वितीया तु वाच्यमर्थमन्वयायोग्यत्वेनोपलक्षणीकृत्य अन्वययोग्यमर्थं तत्सम्बन्धिनं लक्षयतीति लक्षणलक्षणेत्युच्यत' इति

---

पाठ. १. जहदजहल्लक्षणयोः – मधु., जहदजहत्स्वार्थयोः – ख.। २. न पठ्यते – मधु. ख.

---

१. पदार्थं – मातृका।

३. जहदजहत्स्वार्था —

[1]जहदजहत्स्वार्थां लक्षयति—

अंशभेदमुपादाय जहाति न जहाति च ।
शब्दः स्वार्थं यदि जहदजहत्स्वार्थलक्षणा ॥

यथा—

समुद्रकन्यासमुपासितो यो
वैकुण्ठलोके वसतिं वितेने ।

---

नौका

इह तावत् जहत्स्वार्था अजहत्स्वार्था चेति द्विविधैव शुद्धेति काव्यप्रकाशकृदभाणीत् । यथा — " स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् । उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥" (का. प्र. २.१०) इति । एतदन्यथयितुं द्वितीयां शुद्धाविधां लक्षणोदाहरणाभ्यां दर्शयति — अंशभेदमिति । [1]स्वार्थं यदीत्युत्तरम्, — 'इति' इति शेषः ॥

---

मन्दरः

तद्व्याकर्तारः । उपादानलक्षणाया अजहल्लक्षणेति लक्षणलक्षणाया जहल्लक्षणेति च तान्त्रिकव्यवहारः ॥

जहदजहत्स्वार्थां लक्षयति — अंशभेदमिति । उपादाय अवलम्ब्य स्वार्थं जहाति, तथैव न जहाति च यदि ॥

---

पाठ. १. जहदजहल्लक्षणा – मधु. ख. ।

---

१. स्वार्थं यदीत्युत्तरमिति – मधु. ख. ।

सोऽयं हरिः सम्प्रति रामनामा
सीतासमेतोऽधिवसत्ययोध्याम् ॥७॥

अत्र *यद्देशकालवैशिष्ट्यं हरेः पूर्वमभूत्, [1]तद्देशकालवैशिष्ट्यमधुना नास्तीति 'सोऽयम्' इत्यत्र तत्तांशे स्वार्थं जहाति। [2]इदन्तांशे तु न जहातीतीयं जहदजहत्स्वार्था लक्षणा ॥

---

नौका

उदाहरति — समुद्रेति। समुद्रकन्या लक्ष्मीः। 'क्षीराब्धितनया रमा' इत्यमरः (१.१.२७)। तया समुपासितः, विकुण्ठाया अपत्यं वैकुण्ठः विष्णुः। 'विकुण्ठायां यतो जातस्ततो वैकुण्ठ उच्यते' इति पुराणात् (भाग. ८.५४.५)। वैकुण्ठः शक्रकृष्णयोः इत्यमरश्च। तस्य लोके भुवने। अयोध्यामिति। 'उपान्वध्याङ्वसः' (पा. १.४.४८) इत्याधारस्य कर्मत्वम् ॥५॥

लक्ष्ये लक्षणं पातयति — [1]यद्देशादीत्यादिना। नास्तीति। 'इति' शब्दो हेत्वर्थे। तेन मुख्यार्थानुपपत्तिः सूचिता। जहदजहत्त्वे विशदयति— [2]तत्तांश इति। प्रयोजनं चात्र पूर्वापरकालीनस्वरूपयोरभेदप्रतिपत्तिरिति ज्ञेयम् ॥

---

मन्दरः

उदाहरति – समुद्रेति। निगदेनैव व्याकृतम् ॥५॥

अत्रेति। ययोर्देशकालयोर्वैशिष्ट्यम्। 'न जहाति' एतद्देशकालवैशिष्ट्यस्याद्य विद्यमानत्वादिति भावः ॥

---

पाठ. १. तद्देशकालौ सम्प्रति न स्त इति सोऽयमितीदं पदं तत्तांशे – मधु.।
२. इदमंशे नेति इयं जहदजहल्लक्षणा – मधु.। *यद्देशादिवैशिष्ट्यं – नौका.।

---

१. यद्देशादित्यादिना – मातृका.। २. तत्ताः शयति – मातृका।

जहदजहत्स्वार्थाव्यवस्थापनम् ---

नन्वेवं सतीयं लक्षणा पदद्वयधर्म इत्युक्तं स्यात्, तदसाधु। अभिधावत् तस्या अप्येकपदध[1]र्मत्वेन पदसङ्घात-[2]धर्मतायाः काप्यदर्शनात्। अत एव काव्यप्रकाशकारो नैतामुदाजहार। नाऽप्यन्यः परीक्षक इति नेयं सम्भवतीति चेद्, अत्र ब्रूमः। किमिह लक्षणैव[3] नास्तीति [4]विवक्षया परेण नोदाहृता ?

---

नौका

शङ्कते – नन्वेवं [1]सतीति। अयं च स्पष्टार्थः। अन्यः परीक्षकः विद्यानाथप्रभृतिः। विचारासहत्वादिति।

एतदेवोपपादयति — तथा हीत्यादिना। नन्वेवमस्तु सिद्धान्तस्थितिः ततः किम्? अत आह — सो[2]ऽयमिति। तत्तेति। तत्तेदन्ताविशिष्टदेवदत्त-स्वरूपरूपार्थ इत्यर्थः। इदम इदमंश[3]जन्योऽर्थः न्यूनः स्यादिति हेतोः। 'प्रतीयमानं च तत्' तत्तोपलक्षितं देवदत्तस्वरूपम्। अभिधाकुण्ठनादिति। [4]तत्तांश इत्यादिः[1]। लक्षणया भागत्यागलक्षणया। नापि द्वितीय इति।

---

मन्दरः

ननु शब्दव्यापाराणामेकैकपदधर्मत्वनियमादत्र पदद्वयधर्मत्वमनुपपन्नमित्याक्षिपति — नन्विति। अभिधावत् अभिधाया इव। नापीति।

---

पाठ. १. धर्मतया – ख.। २. धर्मत्वस्य – ख., °धर्मतया – मन्दर.। ३. 'एव' न पठ्यते – मधु.। ४. न पठ्यते – मधु.।

---

१. सदिति – – मातृका। २. समिति – मातृका। ३. °जन्यार्थः – मातृका। ४. दत्तांश – मातृका।

---

टिप्प. 1. तत्तांशे अभिधाकुण्ठनादिति योज्यम्, तद्देशकालवैशिष्ट्यस्याद्य बाधितत्वादभिधाया अप्रवृत्तेरिति तात्पर्यम्।

सत्यप्युक्त[1]विधाद्वय एवान्तर्भवतीति वा[2] ? । नाद्यः, विचारास-
हत्वात् । तथा हि - यावता शब्देन यावानर्थः प्रतीयते, तावानेव
[3]तस्यार्थो न न्यूनो [4]नाधिकश्चेति स्थितिः । सोऽयं देवदत्त
इत्यत्र तत्तेदन्ताविशिष्टं देवदत्तस्वरूपमवभासत इति [5]तावानेवार्थः ।
तत्र तत्तांशबाधे [6]न्यूनमिदमस्वार्थ इति कथमनेनाभिधीयेत ।
प्रतीयमानं च तद् यया कयाचन वृत्त्या प्रतिपादनीयम् । तेन
तत्तोपलक्षितमिदन्ताघटितमेव देवदत्तस्वरूपमभिधाकुण्ठनाल्लक्षणया

---

नौका

उक्तविधाद्वय एवान्तर्भवतीति पूर्वः पक्षः (इत्यर्थः)। अनन्तर्भावमेवोपपादयति –
न तावदिति। लक्षणलक्षणावत् जहल्लक्षणावत्। स्वसिद्धय इत्यादि।
यथा वा 'कुन्ताः प्रविशन्ति'इत्यादौ कुन्तानां प्रवेशसिद्धये परे[1]कुन्तिनः पुरुषा
आक्षिप्यन्ते, ( तथात्र नेत्यर्थः )। ( अर्धमिति )। किमन्तर्वेद्येकदेशो
यूपाङ्गत्वेन विधीयते ? [2]अथ बहिर्वेदिसहितो यूपस्य मानदेशं लक्षयति ?

---

मन्दरः

अन्यो विद्यानाथः। 'सत्यपि' विद्यमानापि। आद्यं परिहरति --- नाद्य
इति। तत्रोपपत्तिं दर्शयति - विचारेति। विचार्यमाणे विद्यमानत्वाद्
नास्तीति विकल्पो नोपपन्न इति भावः। 'तथा हि' इत्यादि 'स्थितिः'इत्यन्तं
स्पष्टम्। सोऽयमिति। तत्तेदन्ताभ्यां विशिष्टम्। तत्तांशस्य तद्देशका-
लवैशिष्ट्यस्य बाधे। अद्याविद्यमानत्वात् त्यागे सतीत्यर्थः। न्यूनं तत्तांशरहितं
इदं देवदत्तस्वरूपम् - 'अस्वार्थः' स्वस्य 'सोऽयं'शब्दस्यार्थो न भवति इति हेतोः

---

पाठ. १. °विधयोरन्त° – मधु.। २. न पठ्यते – मधु.। ३. तस्य स्वार्थो – मधु.। ४. 'च' न पठ्यते – ख.। ५. तावदेवार्थः – मधु.। ६. न्यून इदमोऽर्थ इति – नौका., न्यून इदन्तास्वार्थ इति – मधु.।

---

१. परं कुन्तिनः – मातृका.। २. अतः – मातृका.।

बोध्यमित्यकामेना[1]प्यभ्युपगन्तव्यमेवेति कथमत्र नास्ति लक्षणा। नापि[2] द्वितीयः। न तावदियं जहत्स्वार्था। इयं हि तत्तांशमात्रमेव जहाति। न तु लक्षणलक्षणावत् परार्थं[3] स्वार्थं सकलमपि समर्पयति। नाप्यजहत्स्वार्था। [4]स्वसिद्धये पराक्षेपाभावात्। किन्तु — स्वार्थस्यैवांशभेदेन हानाहानाभ्यामुभयवैलक्षण्यात् कोट्यन्तरमित्यन्यैवेयं जहदजहत्स्वार्था।

---

नौका

इति सन्दिह्य — पूर्वकोटौ वाक्यभेददोषमुपपाद्य उभयलक्षितदेशविधाने त्वेकार्थविधानादवाक्यभेदः। तदयमर्थः — यत्र मीयमानस्य यूपस्य अर्धमन्तर्वेदि भवति, अर्धं बहिर्वेदि, तत्र 'मिनुयाद्'इति लौकिक एव देशविशेषो विधीयते, न [1]संस्कृतो वेदिदेश इति पदसङ्घातलक्षणाश्रयणेन उत्तरकोटिरेव

---

मन्दरः

शब्देन कथमभिधीयेत। शब्दः स्वार्थमभिदधाति, अस्वार्थं कथमभिदध्यात्, ततः 'सोऽयं'शब्दः तत्तारहितमिदन्तावटितं च देवदत्तस्वरूपमभिधातुं न शक्नुयादित्यर्थः।'प्रतीयमानं' प्रतीयमानत्वादावश्यकमित्यर्थः। 'तत्' तत्तारहितमिदन्तावटितं देवदत्तस्वरूपमित्यर्थः। तेन प्रतिपादनीयत्वावश्यम्भावेन। अभिधायाः कुण्ठनाद् वैयर्थ्यात्। वाच्यार्थभूतस्य तत्तांशस्य बाधादभिधायाः कुण्ठनमिति बोध्यम्। द्वितीयं परिहरति — नापि द्वितीय इति। तदन्तर्भावाभावं दर्शयति — न तावदिति। इयं जहत्स्वार्था न तावत्। जहत्स्वार्थायां नान्तर्भवतीत्यर्थः। तत्र हेतुं दर्शयति — इयं हीति। 'नाप्यजहत्स्वार्था'। अजहत्स्वार्थायामपि नान्तर्भवतीत्यर्थः। तत्रोपपत्तिमुपपादयति — स्वसिद्धय

---

पाठ. १. अपिर्न पठ्यते – ख.। २. अपिर्न पठ्यते – मधु.। ३. परार्थे – मधु. ख.। ४. स्वार्थसिद्धये – मधु.।

---

१. संस्कृता – मातृका।

**दृश्यते च लोकवेदयोः**

**'अर्धमन्तर्वेदि [1]मिनोत्यर्धं बहिर्वेदि' 'विषं भुङ्क्ष्व' इत्यादौ पदसङ्घातलक्षणा ब्रह्मवादिनश्चैता[2]मेवोपजीव्य महावाक्यार्थं व्यवस्थापयन्ति ॥**

---

नौका

सिद्धान्तिता, तृतीयाध्यायसप्तमपादे 'तथा यूपस्य वेदिः' (पू.मी. ३.७.६.१३) इति सूत्रे। विस्तरस्तु तत्रैव द्रष्टव्यः। विषं भुङ्क्ष्वेत्यादावप्येवमेव। वेदान्तिनामपीयं सम्मतेत्याह — ब्रह्मवादिनश्चेति ॥

---

मन्दरः

इति। कोट्यन्तरं पक्षान्तरम्। एवं तावदावश्यकतां प्रतिपाद्य पदसङ्घातधर्मतया क्वाप्यदर्शनादित्यत्रोत्तरमाह — दृश्यते चेति। लक्षणायाः पदसङ्घातस्थितिं वेदे दर्शयति — अर्धमिति। 'अग्रेणाहवनीयं यूपावटं परिलिखति' 'अर्धमन्तर्वेद्यर्धं बहिर्वेदि' इत्यत्र — मीयमानस्य यूपस्य यत्रार्धमन्तर्वेदि, अर्धं बहिर्वेदि च भवति, तत्र मिनुयादित्यर्थः। अत्र घटत्वपटत्वयोरिव परस्परविरुद्धयोस्त्यागादविरुद्धप्रदेशमात्रापरित्यागाच्च भागत्यागलक्षणा। लोकेऽपि दर्शयति — विषं भुङ्क्ष्वेति। सुहृद्वाक्ये विषभक्षणोपदेशरूपवाच्यार्थस्य बाधाज्जह(दजह)द्वाच्या। लक्षणाया लोकवेदयोः पदसङ्घातस्थितिं दर्शयित्वा जहदजहत्स्वार्थाया आवश्यकताप्रदर्शनायाभियुक्ताङ्गीकारमाह — ब्रह्मवादिन इति। उपजीव्य- अवलम्ब्य। महावाक्यस्य तत्त्वमसीत्यस्य अर्थम्। व्यवस्थापयन्ति निश्चिन्वते ॥

---

पाठ. १. मिनोति' न पठ्यते – मन्दर. ख.। २. श्चैना – ख.।

आलङ्कारिकवेदान्तिमतयोः जहदजहल्लक्षणा —

इयांस्तु विशेषः[१]। आलङ्कारिकास्तावत् तत्तांशस्येदानीमसम्भवात् तस्यैव हानमिद[२]न्तांशस्येदानीं [३]सम्भवादहानमिति जहदजहत्स्वार्थामाचक्षते।

वेदान्तिनस्तु दृष्टान्तदार्ष्टान्तिकयोरैकरूप्याय 'सोऽयं देवदत्तः' इत्यत्रापि तत्तेदन्तांशयोरन्योन्यविरुद्धयोः[४]द्वयोरपि त्यागेनाविरुद्धस्वरूपमात्रापरित्यागेन च द्वयोपलक्षितं स्वरूपमात्रं लक्ष्यत इति जहदजहत्स्वार्थां व्युत्पाद्य 'तत्त्वमसि' इत्यादि महावाक्येऽपि 'तत्त्वं' पदार्थ-

---

नौका

आलङ्कारिकब्रह्मवादिनोर्विशेषमाह — इयांस्त्विवति। विरुद्धांशत्यागेनेति। संसारित्वा[१]संसारित्वादिकं विरुद्धांशः (तेन)। भागत्यागलक्षणया जहदजहत्स्वार्थलक्षणया॥

---

मन्दरः

परन्तूभयेषामभिप्रायभेदोऽस्तीत्याह — इयानिति। तन्मतभेदमेव प्रतिपादयति — आलङ्कारिका इति। तत्तांशस्य तद्देशकालवैशिष्ट्यस्य। 'तावत्' साकल्येन। वेदान्तिनस्त्विवति। 'तु'शब्दोऽत्र वैलक्षण्यं द्योतयति। दृष्टान्तेति। 'सोऽयं देवदत्तः' इति दृष्टान्तः। 'तत्त्वमसि' इति दार्ष्टान्तिकम्। अविरुद्धेति। स्वरूपैक्यादविरुद्धत्वम्। द्वयोपलक्षितं

---

पाठ. १. भेदः – मधु.। २. इदमंशस्ये° – मधु.। ३. सत्त्वा° – मधु.।
४. 'द्वयोः' न पठ्यते – मन्दर.।

---

१. °त्यासंसा° – मातृका।

गतविरुद्धांशत्यागेनाविरुद्धचिन्मात्रोपादानेन च 'उभयोपलक्षितमेकमखण्डं वस्तु भागत्यागलक्षणया प्रतिपाद्यते' इति वर्णयन्ति ॥

आलङ्कारिकमतनिराकरणम् -

नन्वालङ्कारिकोक्तमार्गेण पूर्वकालोपलक्षितस्यैतत्कालवैशिष्ट्यवर्णनेऽपि सम्भवत्येव तयोरभेद[1]प्रतिपादनमिति चेन्, मैवम्। किं

---

नौका

वेदान्तिमते शङ्कते — नन्विति। प्रतिपादनमिति। तथा च इदन्तांशस्यापि [1]त्यागे बीजाभाव इति भावः। विकल्प्य दूषयति — मैवमिति। अभेदासम्भवादिति। सम्भवे दोषमाह — तथा सतीति। परम्परया कालवैशिष्ट्यलक्षणधर्मप्रतिपादनरूपपरम्परया। परम्परया अभेदाङ्गीकारे विनिगमकं शङ्कते — उभयपदेति। अभेदप्रतिपादनादिति।

---

मन्दरः

तत्तेदन्तांशरहितमित्यर्थः। 'तत्त्वमसि'इत्यत्र तत्पदेन सर्वज्ञत्वविशिष्टं ब्रह्म, 'त्वं'पदेन किञ्चिज्ज्ञत्वविशिष्टो जीवश्च प्रतिपाद्यते। 'तत्त्वं'पदार्थगतयोविरुद्धांशयोः सर्वज्ञत्वकिञ्चिज्ज्ञत्वरूपयोस्त्यागेन। अविरुद्धेति। चिदंशस्यैकत्वादविरुद्धत्वम्। उभयोपलक्षितं सर्वज्ञत्वकिञ्चिज्ज्ञत्वरहितम्। भागत्यागलक्षणया जहदजहल्लक्षणया ॥

वेदान्तिप्रतिपादितप्रकारस्यानुरूपत्वादालङ्कारिकमतमपाकर्तुं शङ्कते — नन्विति। 'पूर्वकालोपलक्षितस्य' तत्तांशस्येदानीमसम्भवात् पूर्वकालरहितस्येत्यर्थः। तयोः शुद्धविशिष्टयोः अभेदप्रतिपादनं, 'विशिष्टं शुद्धान्नातिरिच्यते'

---

पाठ. १. °भेदेन प्रति° – मधु. ख.।

---

१. त्यागबीजा° – मातृका।

पूर्वकालोपलक्षितस्यैतत्कालविशिष्टेनाभेदः [1]प्रतिपाद्यते इत्युच्यते ? उत[2] वर्तमानकालवैशिष्ट्यलक्षणधर्म[3]प्रतिपादनेनार्थाद भेदः सिद्ध्यतीति। नाद्यः, [4]विशिष्टस्वरूपयोरभेदासम्भवात्। तथा सति वर्तमान[5]कालविशिष्टस्य प्रागपि सद्भावप्रसङ्गात्। नापि[6] द्वितीयः। साक्षादेवाभेदप्रतिपादने सम्भवति परम्परया तत्प्रतिपादना[7]श्रयणस्यायुक्तत्वात्। [8]उभयपदलक्षणाश्रयणे कल्पनागौरवात् [9]तथाऽऽश्रीयत इति चेन्,मैवम्। परम्परयाभेदप्रतिपादनात् साक्षाद[10] भेद-

---

नौका

अभेदप्रतिपादनापेक्षयेत्यर्थः। शङ्कते — तथापीति। विनिगमनायामिति। एकत्र[1] पक्षपातिनी युक्तिः विनिगमना (तस्याम्)। बुभुत्सितार्थस्य बोद्धुमिष्टस्याभेदस्य। उपसंहरति — एवं वेदान्तीति॥

---

मन्दरः

इति न्यायात् सम्भवत्येवेति चेन्,मैवम्। [1]किमिति। प्रश्नार्थकस्य किमित्यस्य उच्यत इत्यनेन सम्बन्धः। किमिति। अर्थाद् अर्थसामर्थ्यात्। आद्यं परिहरति—नाद्य इति। तत्रोपपत्तिं दर्शयति—विशिष्टेति। 'विशिष्टस्वरूपयोः' विशिष्टशुद्धयोरित्यर्थः। अयमाशयः — 'विशिष्टं शुद्धान्नातिरिच्यते' इति

---

पाठ. १. 'प्रतिपाद्यते' इत्येव – मधु.। २. किं पूर्वकालापेक्षितस्य वर्तमान° – मन्दर. ख.। ३. °पादने नार्थाभेदः सिद्धयति – ख.। ४. विशिष्टरूपयो° – ख.। ५. °काल° – न पठ्यते – मधु.। ६. अपिर्न पठ्यते – मधु.। ७. °नाश्रयस्या° – मधु.। ८. ननु उभय° – मधु.। ९. तदाश्रीयत–मन्दर.। १०. °अभेद° – न पठ्यते – मधु.।

---

१. परत्र पक्षपातनियुक्तेः – मातृका।

---

टिप्प. 'उत' स्थाने 'किम्' इति मन्दरकृदादृतः पाठ इत्यवधेयम्।

प्रतिपादने बुद्धिलाघवस्य दर्शितत्वात्। [1]तथापि विनिगमनायां को हेतुरिति चेद्, बुभुत्सितार्थस्य साक्षात्प्रतिपादनलाभ एवेति ब्रूमः।

एवं [2]वेदान्तिवर्णितमार्गेण पदद्वयलक्षणापक्षावलम्बनेऽप्यालङ्कारिकमते[3] जह[4]दजहल्लक्षणा सिद्ध्यत्येवेति परेषां तदनुदाहरणमज्ञानविलसितमेव ॥

---

मन्दरः

न्यायस्यौत्सर्गिकत्वात् तदभेदाङ्गीकारे तु शुद्धाग्नेश्च पथिकृदग्नेश्च भेदाभावप्रसङ्गेन पथिकृदग्निवैयर्थ्यापाताच्च तयोरभेदोऽनुपपन्नः' इति। किञ्च अनुभवविरोधोऽस्तीत्याह—तथेति। सद्भावप्रसङ्गात्। वर्तमानकालवैशिष्ट्येन विद्यमानत्वापत्तेः। ततस्तयोरभेदो न सम्भवतीति निष्कर्षः। द्वितीयं परिहरति — नापि द्वितीय इति तत्र हेतुं प्रतिपादयति — साक्षादिति। साक्षात् अव्यवधानेनैव। अभेदप्रतिपादने सम्भवति सति। तत्तेदन्तांशयोस्त्यागेनेति भावः। परम्परया व्यवधानेन। ननु वेदान्तिमतावलम्बने शक्तिकल्पनागौरवादालङ्कारिकोक्तप्रकार एवोपपन्न इत्याशङ्क्य परिहरति — उभयेति। अयं भावः — "'सोऽयं' पदयोरभिधयोः कुण्ठनमङ्गीकृत्य लक्षणाश्रयणे शक्तिकल्पनागौरवं स्याद्" इति। 'तत्' परम्परयाऽभेदप्रतिपादनम्। मैवमिति। परम्परयाऽभेदप्रतिपादनमसाम्प्रतमित्याशयः। ननु शक्तिकल्पनागौरवपरम्पराश्रयणाभ्यां पक्षद्वये तुल्यबलेऽपि वेदान्तिमते कः पक्षपात इत्याशङ्क्य तन्निमित्तं दर्शयति — तथापीति। पक्षद्वये तुल्यबलेऽपीत्यर्थः। विनिगमनायां वेदान्तिमतावलम्बन एव एकत्र पक्षपातिनी युक्तिर्विनिगमनेत्युक्तत्वात्। बुभुत्सितस्य बोद्धुमिच्छाविषयीकृतस्य अर्थस्य अभेदरूपस्य 'इति' हेतुरिति ब्रूमः। एवमिति। परेषां काव्यप्रकाशकारादीनाम्। अज्ञानविलसितम् अज्ञाननिमित्तमेव। अन्यथा कथं नोदाहरेयुरिति भावः॥

---

पाठ. १. ननु तथापि कतरः पक्षो विनिगमनाहेतुरिति चेत् – मधु.। २. वैदान्तिकमार्गेण वर्णित – मधु.। ३. °मतेन – मधु.। ४. जह(दजह)त्स्वार्था लक्षणा सिद्ध्यतीति केषाञ्चित् तदनुदा° – मधु.।

एतासां शुद्धात्वप्रतिपादनपूर्वक 'मुपचार'शब्दनिरुक्तिः -

**एतास्तिस्रोऽपि शुद्धा एव। उपचारेणामिश्रितत्वात्।**

**उपचारो नाम गुणयोगः। तदभावादेवासां शुद्धत्वम्। 'भिन्नत्वेन प्रतीयमानयोरैक्यारोपणमुपचारः इत्युक्ते 'सिंहोऽयम्'इति वक्ष्यमाण[1]साध्यवसानाप्रभेदे गौणे विषयस्य विषयिनिगीर्णत्वेन, भिन्नत्वेन प्रतीत्यभावात् तत्रापि शुद्धत्वमेव स्यात्॥**

---

नौका

एवं जहदादित्रयं निरूप्य तासां शुद्धत्वे निमित्तमाह — एतास्तिस्रोऽपीत्यादिना। उपचारपदार्थमाह -- उपचारो नामेति। अत्र कैश्चिदुक्तमुपचारपदार्थं दूषयितुं तदुक्तं तल्लक्षणमनुभाषते -- 'भिन्नत्वेनेत्यादिना इत्युक्तम्' इत्यन्तेन। दूषयति — सिंहोऽयमिति। गौणे[1] शौर्यादिगुणनिमित्ते। विषयस्य प्रस्तुतस्य [2]माणवकादेः, [3]विषयिणा अप्रस्तुतेन सिंहादिना निगीर्णत्वेन। स्यादिति। ननु सिंहोऽयमित्यादौ गुणयोग एवोपचारः' जहदादिलक्षणास्थले तु भिन्नत्वेनेत्याद्युपचारः, तदमिश्रत्वं शुद्धत्वमिति चेत्, तर्हि शुद्धत्वेऽप्यनुगतनिमित्ताभावप्रसङ्गात्। नन्वैक्यारो-

---

मन्दरः

एता इति। उपचारशब्दार्थमाह — उपचारो नामेति। उपचारस्त्वित्यर्थः। गुणयोगः गुणसादृश्यमित्यर्थः। अन्यथा प्रतिपादने दोषं दर्शयति — भिन्नत्वेनेति। 'शुद्धत्वम्' एवंरूपोपचारामिश्रितत्वप्रयुक्तमिति शेषः। तस्माद् गुणयोग एवोपचार इति युक्तम्॥

---

पाठ. १. °सानाभेदे निगीर्णविषयस्य ऐक्यारोपणं विधेयम्। आरोप्यमाणस्य विषय° – मधु.।

---

१. गुणे – मातृका। २. °कादिः – मातृका। ३. विषयिणा–मातृका।

**व्यक्तिलक्षणावादनिरासः —**

**ननु प्राभाकराः सर्वत्र जातिशब्दार्थवादिनो 'व्रीहीन् प्रोक्षति' इत्यादावुद्देश्यस्थले व्यक्तिलक्षणामाहुः। सा कुत्रान्तर्भवतीति चेद्, अज्ञान एवान्तर्भवतीति वदामः। न ह्यत्र लक्षणाप्रयोजकं रूढिप्रयोजनयोरन्यतरत् सम्भवति। तर्हि प्रोक्षणश्रुतेः का**

---

**नौका**

पणमुपचारः, तदमिश्रत्वं शुद्धत्वमिति चेन्, न। 'आयुर्घृतम्' 'आयुरेवेदम्' इति वक्ष्यमाणयोः शुद्धयोः सारोपसाध्यवसानभेदयोः आरोपिततादात्म्ययोः (शुद्ध)त्वाभावप्रसङ्गात् ॥

गुरुमतावलम्बनेन शङ्कते — ननु प्राभाकरा इति। जातिशब्दार्थेति। अनेन व्यक्तौ शक्त्यभावः सूच्यते। आदिना 'व्रीहीनवहन्ति'इत्यादिसङ्ग्रहः। आहुरिति। तेषामयमाशयः [इत्यर्थः]। नन्वत्र जातावेव शक्तिस्वीकारात् 'व्रीहीन् प्रोक्षति'इत्यादौ 'व्रीहि'पदशक्यार्थे व्रीहित्वजातावमूर्तायां प्रोक्षणान्वया-सम्भवात् तत्सिद्ध्यर्थं [1]व्यक्तौ लक्षणा आश्रयणीयेति तेषां व्यक्तिलक्षणाकल्पनम्

---

**मन्दरः**

ननु प्राभाकरप्रतिपादितव्यक्तिलक्षणायाः कुत्रान्तर्भाव इत्याशङ्क्य सोपहासं परिहरति — नन्विति। 'अनन्यलभ्यः शब्दार्थः' इति जातिरेव शब्दार्थः, व्यक्तिस्तु लक्ष्यत इति तन्मतसमयः। उद्देश्यस्थले प्रोक्षणसंस्कार-स्थले अज्ञान एवेति। न लक्षणा एवेत्यवधारणार्थः। तत्प्रयोजकाभावात् व्यक्तिलक्षणेति वचनमज्ञानविलसितमित्याशयः। 'व्रीहीन् प्रोक्षति'इत्यत्रापूर्व-विधिः। व्रीह्यवदानानन्तरकर्तव्यस्य क्वाप्यदृष्टत्वात्। 'व्रीहीनवहन्ति'इत्यत्र नियमविधिः। नखविदलनावहननयोरवहननस्य पाक्षिकत्वात्। 'इमाम-

---

१. अव्यक्तौ – मातृका।

गतिरिति चेत्, तत्र जातेः प्रोक्षण[1]संस्कारान्वयानुपपत्त्या व्यक्तिर-विनाभाविन्याक्षिप्यते [2]जात्या। यथा '[3]भूयताम्'इत्यत्र कर्ता, [4]'पश्यति'इत्यत्रा कर्म, क्रिययाऽऽक्षिप्यते। यथा वा 'ग्रामम्'इत्यत्र कर्मकारकेण 'गच्छ'इति क्रियाऽऽक्षिप्यते। एवमर्थापत्तिमहिम्नापि तत्र[5] तत्र पदार्थप्रतीतिर्द्रष्टव्या। रूढिप्रयोजने विना क्वापि

---

**नौका**

(इति चेत् तद्) अज्ञानप्रयुक्तमिति दूषयति — अज्ञान एवेति। तदेव विशदयति — न ह्यत्रेत्यादिना। सम्भवतीति। तथा च निमित्ताभावाल्लक्षणा न प्रवर्तत इति तदाश्रयणज्ञानमिति भावः। एवं चेत् जातेः प्रोक्षणान्वयासम्भवात् [1]तच्छ्रवणमनर्थकं स्यादिति शङ्कते — तर्हीति। उत्तरयति-तत्र जातेरिति। आक्षिप्यते जात्येति। तथा च जात्याक्षिप्तव्यक्त्यन्वयेनैव प्रोक्षणश्रुतिसामञ्जस्ये [2]व्यक्तिलक्षणाकल्पनं निर्युक्तिकमेवेत्याशयः। आक्षेपे

---

**मन्दरः**

गृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यत्र परिसङ्ख्याविधिः। इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि'इत्यादिश्रुतिप्रतिपादितस्याश्वगर्दभसाधारण्यायातस्य रशनाग्रहणस्याश्वे नियमनात्। तदुक्तम् — 'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति कथ्यते॥' इति। ननु व्रीहित्वस्य प्रोक्षणासम्भवात् 'व्रीहीन् प्रोक्षति'इति श्रुतेः का गतिरित्याशङ्क्य समाधत्ते — तर्हीति। अविनाभाविनी व्यक्तिः। जात्या वाच्यभूतया। अयं भावः – 'अस्मत्प्रतिपादितदिशा जातिस्फूर्त्यन्तर्भूतव्यक्ति-

---

पाठ. १. °संस्कारान्वयाभ्युपगम्या – मधु.। २. न पठ्यते – ख.। ३. 'भूयते' इत्यत्र – मधु.। ४. पश्येत्यत्र – मधु. ख.। ५. 'तत्र' इत्येव – मधु.।

---

१. तजच्छ्रवण° – मातृका.। २. वृत्ति° – मातृका।

लक्षणाया अप्रवृत्तेः। अन्यथाऽतिप्रसङ्गादिति सन्तोष्टव्यम्। अत्रायं [1]लक्षणासङ्ग्रहः —

" स्वार्थत्यागे समानेऽपि सह तेनान्यलक्षणा।
यत्रेयमजहत्स्वार्था जहत्स्वार्था च तं विना॥
स्वार्थैकांशत्यागादंशान्तरमेव लक्ष्यते यत्र।
सा जहदजहत्स्वार्था तत्त्वमसीत्यादिविषयदृश्येयम्॥"

इति॥

---

नौका

दृष्टान्तमाह -- यथा भूयतामित्यादिना। उक्तन्यायमन्यत्राप्यतिदिशति — एवमिति। अर्थापत्तीति। अनुपपत्तीत्यर्थः। [1]अतिप्रसङ्गादिति। मुख्यार्थेऽपि लक्षणाप्रसङ्गादित्यर्थः। इत्थं [2]जहदादिलक्षणात्रयं निरूप्य तस्यैव सङ्ग्राहकं प्राचीनकारिकाद्वयं दर्शयति — अत्रायमित्यादिना। प्राचीनैः कृत इति शेषः। समानेऽपीति। जहदजहल्लक्षणयोरिति शेषः। यत्र च तेन सह स्वार्थेन [3]सहास्वार्थे लक्षणा, यत्र तु तं विना अन्यत्र लक्षणा, तत्र जहत्स्वार्थेति कारिकार्थः। इतरस्तु स्पष्टः॥

---

मन्दरः

स्फूर्तिरास्ताम्। पक्षान्तरावलम्बनेनापि व्यक्तिस्फूर्तिः सुलभैव'इति। व्यक्तेराक्षेपलभ्यत्वे दृष्टान्तं दर्शयति—यथेति। 'आक्षिप्यते' इत्यनुवर्तते। वाक्यत्रयेऽपि क्रमेण कर्तृकर्मक्रियाक्षेपा द्रष्टव्याः। किञ्च अर्थापत्तेरपि व्यक्तिस्फूर्तिः सम्भवतीत्याह -- एवमिति। अनुपपद्यमानार्थेनार्थान्तरकल्पनमर्थापत्तिः

---

पाठ. १. लक्षणात्रयसङ्ग्रहः – मधु.।

---

१. अत्र प्रसङ्गादिति – मातृका। २. जुहोत्यादि° – मातृका। ३. सह स्वार्थे – मातृका।

[1]एवं शुद्धां त्रिविधां निरूप्य सारोपाया लक्षणं विभागं चाह —

सारोपा --

सामानाधिकरण्येन भेदस्यापह्नवं विना ।
विषयारोप्ययोरुक्तौ सारोपा सा द्विधा मता ॥

आरोप्यमाणारोपविषयौ यदाऽनपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते, तदा सारोपेत्यर्थः। एतेन साध्यवसानातो भेद उक्तः ॥

---

**नौका**

अथ क्रमप्राप्तां सारोपलक्षणां निरूपयिष्यन् अन्तेवास्यवधानायाह — एवं त्रिविधामिति ॥

विषयारोप्यादिपदार्थान् विवेचयन् लक्षणं व्याचष्टे -- आरोप्यमाणेत्यादिना। आरोपाधिष्ठानमारोपविषयः। [1]अनपह्नुतभेदावित्यनेन सूचितं विशेषमाह — एतेनेति। अनपह्नुत[2]भेदाविति कथनेन साध्यवसा(नायां विष)यविषयिणोर्भेद अपह्नूयते, [3]सारोपायां तु (न तथे)त्यनयोर्विशेष इत्यर्थः ॥

---

**मन्दरः**

'आपत्तिः' कल्पनमित्यर्थः। तन्महिम्नापि, 'तत्र तत्र' 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादिस्थलेष्वित्यर्थः। नन्वाक्षेपादिवत् व्यक्तिलक्षणाप्यङ्गीक्रियतामित्यत्राह – रूढीति। व्यवस्थानङ्गीकारेऽनिष्टं दर्शयति – अन्यथेति। अतिप्रसङ्गादिति। बह्व्यो वृत्तयः कल्प्या भवेयुरिति भावः ॥

एवं जहदादिशुद्धास्तिस्रोऽपि पृथङ् निरूप्य बोधसौकर्याय लक्षणात्रितयस्यापि लक्षणं सङ्गृह्णाति–स्वार्थेति। समाने तुल्येऽपि। द्वयोरिति शेषः।

---

पाठ. १. एवमेत – मधु.।

---

१. अनपह्नुते भेदादित्यनेन सूचितम्। विशेष° – मातृका। २. अनपह्नुतभेदादित्यनेन – मातृका। ३. सारोपे तु – मातृका।

**सारोपाया द्वैविध्यम् --**

**इयं तु द्विविधा — शुद्धा गौणी चेति ॥**

**गौणसारोपा --**

**तत्र गौणी गुणसादृश्यनिमित्ता ।**

---

**नौका**

सङ्ग्रहे सा द्विविधेत्युक्तम् । किं तद् द्वैविध्यं तत्राह–इयं त्विति ॥

तत्र गौण्याः प्रवृत्तिनिमित्तमाह -- तत्र गौणीति । गुणतः सादृश्यमस्याः प्रवृत्तिनिमित्तमिति सा तथा, यथा — 'अग्निर्माणवकः' इति । यदाहुराचार्याः

" अग्नित्वलक्षितादर्थाद् यत् पैङ्गल्यादि गृह्यते ।
तेन माणवके बुद्धिः सादृश्यादुपजायते ॥

इति । सादृश्यनिमित्तेयं लक्षणा, न तु मुख्यार्थाविनाभावमूलेत्यर्थः । द्वितीयविधायाः

---

**मन्दरः**

यत्र तेन स्वार्थेन सह अनस्मिन् स्वार्थविशिष्टार्थान्तरे लक्षणा, इयमजहत्स्वार्था । यत्र तं स्वार्थं विना हित्वा अन्यलक्षणा, इयं जहत्स्वार्था च । स्वार्थेति । स्पष्टम् ॥

अथ 'सारोपाया लक्षणं विभागं चाह' इत्याह । सामानाधिकरण्येनेति । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् ॥

लक्षणं व्याकरोति -- आरोप्यमाणेति । साध्यवसानातो वैलक्षण्यं दर्शयति — एतेनेति । अयं भावः -- 'साध्यवसानायां विषयस्य विषयिनिगीर्णत्वेन तयोरभेदप्रतीतिः । सारोपायां तु द्वयोरप्युपात्तत्वात् भेदप्रतीतिः' इति ॥

शुद्धसारोपा --

शुद्धा तु सादृश्येतरकार्यकारणभावादिसम्बन्धनिबन्धना ॥

एतेन लक्षणायाः पृथग्भूता गौणी वृत्तिरिति तान्त्रिकसमयः परास्तो वेदितव्यः, तथाहि –

प्राभाकरमतम् --

प्राभाकरास्तावदाहुः — लक्षणातो गौणस्यायं भेदः। गौणे हि [1]पदप्रयोगादेव गुणोपेते तात्पर्यम्। लक्षणायां तु [2]पदार्थोपलब्धे सम्बन्धिनि पदतात्पर्यमिति।

नौका

शुद्धत्वे निमित्तमाह — [1]शुद्धा त्विति। सादृश्येतर[2]सम्बन्धनिमित्ता शुद्धा। न तु सादृश्यनिमित्ता। अन्यथा गौण्यामतिव्याप्तिः। 'भावादि'इत्यादिना वक्ष्यमाण[3]तादर्थ्यादिसङ्ग्रहः। सादृश्येतरसम्बन्धनिबन्धना शुद्धसारोपा यथा – 'आयुर्वै घृतम्' इत्यादीत्यर्थः। एतेन गौण्या लक्षणान्तर्भावेन। तन्त्रे भाट्टं प्राभाकरं च तद् द्वयमधीयते तान्त्रिकाः भट्टगुरुमतानुयायिनः, तेषां समयः सिद्धान्तः ॥

मन्दरः

एतेनेति। गौणवृत्तेर्लक्षणान्तर्भावप्रतिपादनेनेत्यर्थः। तान्त्रिकसमयः भाट्टप्राभाकरसिद्धान्तः 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः (३.३.१४९) परास्तो निराकृतः। परिहृत इति यावत् ॥

पाठ. १. गुणयोगादेव – ख.। २. पदार्थतो लब्धे – नौका., मधु. ख.।

१. शुद्धेति – मातृका। २. °सम्बन्धान्तरनिमित्ता – मातृका। ३. °तादर्थ्यादि – मातृका।

नन्वयमेव भेदो [1]नोपपद्यते। यथा [2]लक्षणायां सम्बन्धिसम्बन्धयोः स्मृतयोरपि सम्बन्धिमात्रेऽन्वितेऽर्थे वाक्यतात्पर्यमवधार्यते, तथा गौणेऽपि मुख्यस्यानन्वयात् [3]सदृशसादृश्ययोः स्मृतयोरपि सदृशमात्र एव तात्पर्यमवगम्यतामिति चेन्, मैवम्।

---

नौका

ननु कथं परास्तम्? नेत्याशङ्क्य पराकरणप्रकारं वक्तुं प्रथमं तन्मतमनुवदति — तथा हीत्यादिना। गौणे हि 'अग्निर्माणवकः' इति गौणप्रयोगस्थले हि। पदप्रयोगादेव माणवकपदप्रयोगादेव। गुणोपेते पैङ्गल्यादिगुणविशिष्टे माणवके *तात्पर्यम् अग्निपदस्य तात्पर्यम्। लक्षणायां तु –– 'गङ्गायां घोषः' इति लक्षणास्थले तु पदार्थतो लब्धे सम्बन्धिनि तीररूपसम्बन्धिनि पदतात्पर्यं गङ्गादिपदतात्पर्यम्। उपपादितं वैलक्षण्यमसहमानः प्रत्यवतिष्ठते – नन्विति।

---

मन्दरः

पराकर्तुमेव तन्मतं प्रतिपादयति — तथा हीति। लक्षणातो लक्षणायाः। 'पञ्चम्यास्तसिल्'। गौणस्य गौण्याः। भेदं दर्शयति – गौणे हीति। गौणे – 'अग्निर्माणवकः' इत्यादौ। पदप्रयोगात् समानाधिकरणपदप्रयोगादेव। गुणोपेते पैङ्गल्यादिगुणविशिष्टे तात्पर्यम् अग्निपदतात्पर्यं हि। अत्रावधारणेन लक्षणायां तीरपदप्रयोगं विना तीरप्रतिपत्तिर्भवतीति ज्ञाप्यते। लक्षणायां तु पदार्थात् प्रवाहरूपादुपलब्धे प्राप्ते। पदप्रयोगं विनैवेति भावः। सम्बन्धिनि केवले तीरे पदस्य गङ्गापदस्य तात्पर्यम्। इत्याहुरिति पूर्वेण सम्बन्धः। अयं भावः – 'पदप्रयोगतदप्रयोगप्रयुक्तविशिष्टाविशिष्टतात्पर्याभ्यां गौणीलक्षणयोर्वैलक्षण्यस्य लक्ष्यमाणत्वात् तयोर्भेदः' इति।

---

पाठ. १. न घटते – मधु.। २. लक्षणायामपि न सम्बन्धमात्रे किन्तु – अन्वितेऽर्थे वाक्य° – ख.। ३. सादृश्यसदृशयोः – मधु. ख.।

---

*सादृश्य – मातृका।

**अग्निशब्दात् [1]स्वार्थे स्मृतिः। ततस्तस्यानुपपत्तिविमर्शात् तस्मात् स्वार्थात् स्वसदृशेऽर्थान्तरे स्मृतिः। सदृशस्मृतिश्च सादृश्यव्यतिरेकेण नास्तीति सादृश्यस्मृतिश्चास्त्येव। तत्र न तावत् सदृशमात्रे तात्पर्यम्। पदान्तरेणोपात्ततया पौनरुक्त्यापत्तेः। नापि सादृश्यमात्रे, समानाधिकरणपदप्रयोगानुपपत्तेः। अतः सादृश्यविशिष्टसदृशस्मृत्या तत्रैव वाक्यतात्पर्यम्। सा [2]तु समानाधिकरणपदप्रयोगबलादेव।**

---

नौका

मुख्यस्येति। अग्निरूपमुख्यार्थस्येत्यर्थः। समाधत्ते – मेवमिति। स्वार्थस्मृतिः अग्निशब्दार्थस्मृतिः। तस्य अग्निशब्दार्थस्य अनुपपत्तिविमर्शात् माणवकेऽभेदान्वयानुपपत्तिप्रतिसन्धानात्। न तावदिति। अग्निपदस्येति

---

मन्दरः

ननु विवक्षावशेन समत्वादभेदोऽस्त्वित्याशङ्क्य मैवमित्यादिना भेदं प्रतिपादयिष्यति — नन्विति। नोपपद्यत इति। तदनुपपत्तिमेव दर्शयति — यथेति। सम्बन्धिसम्बन्धयोः तीराविनाभावयोः सम्बन्धिमात्रे केवले तीरे। अन्विते अधिकरणत्वेनान्वयानुकूले अर्थे वाक्यतात्पर्यं गङ्गायामित्यादिवाक्यतात्पर्यं यथाऽवधार्यते, तथा मुख्यस्य अग्नित्वरूपमुख्यार्थस्य अनन्वयात् माणवकेनान्वयासम्भवात्। सदृशमात्र एव केवलसदृश एव तात्पर्यम् अग्निरित्यस्य तात्पर्यमवगम्यताम्। अयं भावः — यथा लक्षणायां केवले तीरे तात्पर्यं, तथा गौण्यां केवले सदृशे तात्पर्यमित्यभेद इति। 'इति चेन्मैवम्' अभेदो न सिद्ध्यतीति भावः। अभेदासिद्धिमेवाह — अग्निशब्दादिति। 'तस्मात् स्वार्थात्' तं स्वार्थं विहायेत्यर्थः। सदृशस्मृतिश्चेति। ननु सदृशस्यैवान्वितत्वात् किं सादृश्येनेत्याशङ्क्याह — तत्रेति। तत्र हेतुमाह — पदान्तरेणेति। अयं भावः — 'अग्निर्माणवकः' इत्यत्र अग्निपदस्य सदृशमात्रार्थकत्वे सदृशस्य माणवकस्य स्वपदोपात्तत्वात् तत्र 'माणवको

---

पाठ. १. स्वार्थस्मृतिः – नौका.। २. सापि – नौका.।

अतो गौणे सादृश्यविशिष्टेऽन्वितेऽर्थे वाक्यतात्पर्यज्ञानसमय एव पदस्योपयोगः। लक्षणायां त्वपेक्षाक्रम¹वशेन सम्बन्धिमात्रेऽन्वितेऽर्थे वाक्यतात्पर्यात् सम्बन्धिमात्रे पदतात्पर्यम्। न सम्बन्धोपेते। 'प्रतिवसति'इत्यनेनान्वययोगोऽपि न सम्बन्धविशिष्टे। सम्बन्धिप्रतीत्यर्थस्य तस्य तत्प्रतीतिमात्रार्थस्य वाक्यतात्पर्यपूर्वकपदतात्पर्यान्तर्भावे मानाभावात्। इति न पदप्रयोगापेक्षा तत्र।

---

नौका

शेषः। पदान्तरेण माणवकरूपपदेन। नापि सादृश्यमात्र इति। तात्पर्यमित्यनुषज्यते। सापीति। सादृश्यविशिष्टसदृशस्मृतिस्त्वित्यर्थः। लक्षणायां वैलक्षण्यमाह – लक्षणायां त्विति। सम्बन्धिमात्रे तीररूपसम्बन्धिनि।

---

मन्दरः

माणवकः' इति पौनरुक्त्यं स्यादिति। तर्हि यथा लक्षणायां केवले सम्बन्धिनि तात्पर्यं तथा गौण्यां केवले सादृश्ये तात्पर्यमित्येवंरूपेण तयोरभेदोऽस्त्वित्याशयेनाह — नापीति। तत्र हेतुमाह — समानेति। यद्यग्निपदस्य सादृश्यमात्रमभिप्रेतं तर्ह्यग्निर्माणवक इत्युभयत्र धर्मिवाचकपदप्रयोगं न कुर्यादिति भावः। फलितमाह — अत इति। तत्रैव सादृश्यविशिष्टसदृश एव। तत्रोपपत्तिमाह — सा त्विति। सादृश्यविशिष्टसदृशस्मृतिस्तु(इत्यर्थः)। तस्माद् लक्षणातो महद् वैलक्षण्यमस्येत्याशयेनाह — अत इति। 'अतः' समानाधिकरणपदप्रयोगबलप्रयुक्तसादृश्यविशिष्टसदृशस्मृतेरित्यर्थः। गौणे सादृश्यविशिष्टे सादृश्यविशिष्टरूपे अन्वितेऽर्थे वाक्यतात्पर्यज्ञानसमय एव पदस्य अग्निपदस्योपयोगः। अत्र अवधारणेन 'लक्षणायां वाक्यतात्पर्यकलनानन्तरं सम्बन्धिमात्रेऽन्वितेऽर्थे पदस्योपयोगः' इति सूच्यते। अयं भावः – 'गौणे पदतात्पर्यपर्यालोचनपूर्वकं वाक्यतात्पर्यनिश्चयात् तदैवाग्निपदस्य सादृश्यविशिष्टरूपार्थोपयोगित्वम्'इति। लक्ष–

---

पाठ. °वशे तत्सम्बन्धि° – मधु.।

**यत्रापि गौणे पदप्रयोगो नास्ति, — 'अग्निरधीत' इत्यादौ, तत्रा[1]पि सादृश्योपेत एव पदतात्पर्यम् । पदप्रयोगसहितस्थले तथैव[2] तात्पर्यावधारणात् । यथा काम्ये कामिनियोज्यान्वयबलादपूर्वे लिङादेस्तात्पर्यमिति नित्येऽपि तथा ।**

---

नौका

मात्रपदेन सम्बन्धव्यवच्छेदः । पदप्रयोगापेक्षेति । तत्रेति । लक्षणास्थल इत्यर्थः । तथैव तात्पर्येति । सादृश्योपेत एव तात्पर्यावधारणादित्यर्थः । नित्येऽपि तथेति । सन्ध्यावन्दनादिनित्यकर्मस्थले अपूर्व एव लिङादि-

---

मन्दरः

णायां तद्वैलक्षण्यमित्याह – लक्षणायां त्विति । 'तु'शब्दोऽत्र भेदं प्रतिपादयति । 'अपेक्षाक्रमवशेन गङ्गापदात् स्रोतोरूपमुख्यार्थस्फूर्तिः, ततस्तद्बाधात् तत्सम्बन्धज्ञानपूर्वकं सम्बन्धिप्रतीतिः'इत्याकाङ्क्षाक्रमवशेनेत्यर्थः । सम्बन्धिमात्र इति । अयं भावः – 'लक्षणायां वाक्यतात्पर्यनिश्चयपूर्वकं पदतात्पर्यावधारणनियमाद् वाक्यतात्पर्यानुरोधेन सम्बन्धरहिते तीरे 'गङ्गा'पदतात्पर्यम्'इति । मात्रशब्दार्थमाह — न सम्बन्धोपेत इति । एवं कारकवशाद् विमृश्य क्रियायोगाद् विमृशति — प्रतिवसतीति । अयं भावः – ''यथा गौणे माणवकपदप्रयोगवशाद् 'अग्नि'पदस्य सादृश्यविशिष्टपरत्वम्, तथा लक्षणायां क्रियायोगेनापि ससम्बन्धतीरप्रतीतिर्न भवति'इति । अत्र 'अपि'शब्दाद् गङ्गापदेन विशिष्टतीरप्रतीतिर्न भवेदेवेति सूचितम् । तत्र हेतुमाह–सम्बन्धिप्रतीतिः तीरप्रतीतिः अर्थः प्रयोजनं यस्य तस्य तथोक्तस्य । अधिकरणाकाङ्क्षिण इत्यर्थः । तस्य 'प्रतिवसति'पदस्य । तत्प्रतीतिरेव तत्प्रतीतिमात्रं केवलतीरप्रतीतिः अर्थो यस्य तस्य । तादृशस्य सतः । सम्बन्धिमात्रप्रतीत्यर्थकत्वादित्यर्थः । वाक्यतात्पर्यं पूर्वं येषां तानि तथोक्तानि ।

---

पाठ. १. अपिर्न पठ्यते – मधु. । २. 'तथैवावधारणात्' इत्येव – मधु. ।

**ननु यदि लक्षणायां वाक्यतात्पर्यज्ञानसमये न पदप्रयोगापेक्षा, कथं तर्हि तत्र तदप्रयोगधीरिति चेत्, वाक्यतात्पर्य प्रतीत्यैव १हि पश्चात् तत्र पदप्रयोगधीः, सम्भूयकारिताव्युत्पत्तेः। यत एवं गौणे पदप्रयोगतात्पर्यनिरूपणपूर्वकमेव विशिष्टेऽर्थे वाक्य-**

---

**नौका**

तात्पर्यमित्यर्थः ॥ लक्षणायां पदप्रयोगानङ्गीकारे अनुपपत्तिमाशङ्कते – ननु यदीत्यादिना चेदित्यन्तेन। वाक्यतात्पर्यज्ञानान्तरमेव पदप्रयोगधियः स्वीकारा-

---

**मन्दरः**

तादृशानि यानि पदतात्पर्याणि तेषामन्तर्भावे मानाभावात्। अयं भावः — 'प्रतिवसति'पदस्य सम्बन्धिमात्राकाङ्क्षितत्वेन वाक्यतात्पर्यविरुद्धपदतात्पर्य-कल्पनस्यानुचितत्वात् 'तीराधिकरणको घोषस्तिष्ठति'इत्येवंरूपवाक्यतात्पर्या-न्तर्भावप्रतिपादने प्रमाणाभावाद्'इति। ततः सम्बन्धविशिष्टेऽन्वययोगो नास्तीति पूर्वेण सम्बन्धः। • इति उक्तप्रकारेण। तत्र लक्षणायाम्। पदस्य तीरपदस्य प्रयोगापेक्षा नास्ति। तस्य 'तीराधिकरणको घोषः' इति वाक्य-तात्पर्यप्रविष्टत्वादिति भावः। यदि तीरपदप्रयोगः, तदा सम्बन्धप्रतीतिः कल्प्या स्यादित्याकूतम्। तस्मान्महतो भेदस्य विद्यमानत्वाद् यथेत्यादि-पूर्वग्रन्थप्रतिपादिताभेदो निरस्त इति बोध्यम्। नन्वत्र समानाधिकरणपद-प्रयोगबलादस्तु सादृश्यविशिष्टसदृशपरत्वम्, पदप्रयोगरहितस्थले केवलसदृशपर-त्वावश्यम्भावात् तद्वल्लक्षणायां केवलसम्बन्धिन्येव तात्पर्यावधारणमिति तयोर-भेदोऽस्त्वित्याकूतेनाह — यत्रेति। तत्र हेतुमाह — पदप्रयोगेति। 'तथैव' सादृश्योपेतपरत्वेनैवेत्यर्थः। ननु पदप्रयोगसहितस्थलवत् तद्रहितस्थलेऽपि तात्पर्यतौल्ये किं प्रमाणमित्याशङ्क्य दृष्टान्तं दर्शयति — यथेति। काम्ये 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'राजा स्वाराज्यकामो राजसूयेन यजेत'

---

पाठ. १. न पठ्यते – मधु. ख.।

तात्पर्याद् विशिष्टान्वयपरत्वं पदस्य। लक्षणायां तु पदप्रयोगनिरपेक्षमेव वाक्यतात्पर्ये ज्ञाते पश्चात् तत्र पदप्रयोगधीः। अत एव जघन्यत्वं गौणाल्लक्षणाया इति वृत्तित्रयं सिद्धम्॥

---

नौका

न्नानुपपत्तिरिति समाधत्ते – वाक्यतात्पर्यमिति। इति वृत्तित्रयं सिद्धमिति। इति उक्तप्रकारेण शक्तिर्लक्षणा गौणी चेति त्रयं सिद्धमित्यर्थः॥

---

मन्दरः

इत्यादिकाम्यस्थले। कामी तत्कर्मफलाभिलाषी यो नियोज्यो यजमानः तस्मिन् अन्वयः अर्थाल्लिङादेरेव, तद्बलात्। अपूर्वे कालान्तरफलदाय्यवस्थाविशेषे लिङादेस्तात्पर्यम्। अत्रादिशब्देन लोडादिर्गृह्यते। इति एवंप्रकारेण। नित्येऽपि तथेति। अयं भावः — यजमाने तत्तत्कर्मफलप्रापकावस्थाविशेषरूपमदृष्टापरपर्यायमपूर्वमुत्पद्यत इति लिङादेस्तात्पर्यमिति तान्त्रिकसमये सति काम्यस्थले नियोज्यस्य शब्दोपात्तत्वात् तदन्वितस्य लिङादेरपूर्वे यथा तात्पर्यमवधार्यते, तथा — 'अहरहः सन्ध्यामुपासीत' इत्यादिनित्यस्थलेऽपि शब्दोपात्तस्य कर्तुरभावेऽपि तत्तत्कर्मानुष्ठातर्यपूर्वमुत्पद्यत इति। ननु वाक्यतात्पर्यज्ञानसमयोपेक्षितस्य तीरपदप्रयोगस्य कदा तदाकाङ्क्षेत्याशङ्क्याह — नन्विति। प्रतीत्य ज्ञात्वैव। पदप्रयोगधीः 'तीराधिकरणको घोषः' इति पदप्रयोगज्ञानम्। सम्भूयकारितारूपा या व्युत्पत्तिः, तस्याः। तादृक्पद समूहसम्मेलनसमासादितसामर्थ्यादित्यर्थः। भवतीति शेषः। फलितार्थमुक्त्वा निगमयति — यत इति। एतद् हेतुपरत्वेन वाक्यद्वयेऽप्यन्वेति। एवं पूर्वोक्तप्रकारेण। अत एवेति। जघन्यत्वं न्यूनत्वम्। तद्धेतुकभिन्नत्वमिति भावः। वृत्तित्रयम् अभिधा - गौणी - लक्षणाख्याः तिस्रो वृत्तय इत्यर्थः॥

भाट्टमतम् -

आचार्याः पुनः—'अग्निर्माणवकः' इत्यत्राग्निगतपैङ्गल्यादिगुण-साहश्यान्माणवकेऽग्निशब्दप्रवृत्तिरिति गौणीनामवृत्त्यन्तरमुररीचक्रिरे। तथा चोक्तम् -

" अग्नित्वलक्षितादर्थाद् यत् पैङ्गल्यादि गम्यते ।
तेन माणवके बुद्धिः साहश्यादुपजायते ॥ "
इति ॥

मतद्वयनिरासः -

तान् पृच्छामः - सम्बन्धानुपपत्तिप्रयोजनानि [1]खलु लक्षणा-[2]बीजानि तानीहापि सन्ति [3]किम् ? न[4] सन्ति वा ? आद्ये

---

नौका

इत्थं प्राभाकरमतमुपन्यस्य वार्तिककारमतमनुभाषते-आचार्याः पुनरिति। तत्संवादमेवाह—तथा चोक्तमिति। वार्तिक इति शेषः ॥

---

मन्दरः

एवं प्राभाकरमतं प्रतिपाद्याचार्याभिमतं मतमाविष्करोति — आचार्या इति। अग्निगतपैङ्गल्यादिगुणैः साहश्यात् माणवकनिष्ठपैङ्गल्यादिगुणानां साम्यात्। तत्कारिकामुदाहरति – अग्नित्वेति। अग्नित्वेन अग्नित्वरूपमुख्यार्थेन लक्षितात् लक्षणया प्रतिपादितात् अर्थात् अग्निनिष्ठपैङ्गल्यादिरूपार्थात् यत् पैङ्गल्यादि। माणवकनिष्ठमिति शेषः। गम्यते लक्ष्यते। तेन हेतुना साहश्याद् अग्नित्वलक्षिताग्निनिष्ठपैङ्गल्यादिसाम्यात्। माणवके बुद्धिः अग्निरिति धीः उपजायत इति। एतेन गौणीति वृत्त्यन्तरमस्तीति आचार्याभिप्रायः॥

---

पाठ. हि – मधु° । २. बीजम् – मधु. ख. । ३. न पठ्यते – मधु. । ४. 'न वा' इत्येव – मधु. ।

**किमपराद्धं[1] तत्र लक्षणा व्यवहारेण। न द्वितीयः, तेषां दुरपह्नवत्वात्। नन्वत्र सम्बन्धो दुर्निरूपः। कस्तवा[2]यमभिप्रायः? अभिधेयाविनाभावो न सम्भवतीति चेत्, मा[3] सम्भवतु। सादृश्यं तु भविष्यति। न हि स एव सम्बन्धो लक्षणोपयोगीति निर्बन्धः।**

---

नौका

इत्थं भाट्टगुरुमतद्वयमुपन्यस्य दूषयति — तान् पृच्छाम इत्यादिना। तान् भाट्टान् गुरूंश्च। सम्बन्धेत्यादि। सम्बन्धोऽनुपपत्तिः प्रयोजनं चेति तानीत्यर्थः। इहापि 'अग्निर्माणवकः' इत्यादिगौणस्थलेऽपि। लक्षणाव्यवहारेणेति। तथा च लक्षणाप्रयोजकानां सत्त्वे गौणी लक्षणेत्येव व्यवहारो युक्तः। गौण्या वृत्त्यन्तरव्यवहारस्तु निर्युक्तिक एवेति भावः। न सन्ति वेति द्वितीयविकल्पं दूषयति — न द्वितीय इति। तेषां सम्बन्धानुपपत्तिप्रयोजनानाम्। शङ्कते—नन्वत्रेति। समाधत्ते–कस्तवायमिति। 'न हि' इति 'निर्बन्धः' इत्य-

---

मन्दरः

एवं गुरूणामाचार्याणां च मतं प्रतिपाद्य परिहर्तुं पृच्छति — तान् पृच्छाम इत्यादिना। सादृश्यं त्विति। "अभिधेयेन सम्बन्धात् सादृश्यात् समवायतः। वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता॥" इति सादृश्यस्यापि सम्बन्धत्वेनाभ्युपगतत्वादिति भावः। 'एवं च सति' सम्बन्धप्रयोजनयोः सतोरित्यर्थः। अन्वयानुपपत्त्या मुख्यार्थान्वयानुपयोगेन। 'परत्र परशब्दप्रयोगसाम्ये' यथा तीरे गङ्गापदप्रयोगस्तथा सदृशेऽग्निपदप्रयोग इत्येवंरूपेणान्यत्रान्यशब्दप्रयोगतौल्ये, विद्यमानेऽपि। 'यत्किञ्चिदवान्तरवैषम्यावलम्बनेन' लक्षणायां पदप्रयोगाभावः, गौण्यां तत्सद्भावः, तत्र केवलसम्बन्धिप्रतीतिरत्र सादृश्यविशिष्टसदृशस्मृतिः, तत्र वाक्यतात्पर्यज्ञानानन्तरं पदप्रयोगज्ञानमत्र तु वाक्यतात्पर्यज्ञानसमय एवं तदुपयोग इत्यादिसूक्ष्मांशन्यूनाधिक्यश्र-

---

पाठ. १. न पठ्यते – ख.। २. '°स्तवाभिप्रायः' इत्येव – मन्दर°, °स्तवाभिप्रेतः – मधु.। ३. मास्तु – मधु.।

कार्यकारणभावादेरपि सम्बन्धस्य वक्ष्यमाणत्वात्। प्रयोजनं च तादृरूप्यप्रतिपत्तिः। एवं च सत्यन्वयानुपपत्त्या [1]परत्र [2]परशब्द-प्रयोगसाम्ये विद्यमानेऽपि यत्किञ्चिदवान्तरवैषम्यावलम्बनेन पदार्थ-जातिभेदाङ्गीकारेऽतिप्रसङ्गः स्यादिति यत्किञ्चिदेतदिति ॥

[3]द्वयीमुदाहरति। यथा —

---

**नौका**

नेनान्वेति। [1]भावादेरित्यादिना तादर्थ्यादिपरिग्रहः। [2]ताद्रूप्येति। तेन आरोप्यमाणरूपेण रूपवत्त्वं, रक्तपटवत् तदुपरक्तत्वमिति यावत्। न तु तादात्म्यम्, विषयनिगरणं विना विषयिण आरोपे तदसम्भवात्। तथा च – 'अग्निर्माणवकः' इत्यादिगौणस्थले सम्बन्धानुपपत्तिप्रयोजनानां लक्षणाबीजानां सत्त्वात् गौणी लक्षणैव, न वृत्त्यन्तरमिति भावः। उपसंहरति — यत्कि-ञ्चिदेतदिति ॥

द्वयीमिति। गौणसारोपां शुद्धसारोपां चेति द्वयीमित्यर्थः ॥

---

**मन्दरः**

वणेनेत्यर्थः। गौणीति पदार्थः, गौणत्वमिति जातिः, गौण्याख्यो वृत्तिभेद इति पदार्थजातिभेदानामङ्गीकारेऽतिप्रसङ्गः स्यात्। एवमीषद्वैषम्याश्रयणेन बहवः पदार्थादयः कल्प्या भवेयुरिति भावः। इति हेतोः। एतत् लक्षणायाः पृथग्भूता गौणी वृत्तिरिति वचनमित्यर्थः। यत्किञ्चित् असमालोच्योक्तत्वा-दनादरणीयम्। 'इति' परिहृत्येति शेषः ॥

द्वयीं द्विविधां सारोपाम् ॥

---

पाठ. तत्र – मधु.। २. पदप्रयोग° – मधु. ख.। ३. द्वय° – ख.।

---

१. भावादिरि° – मातृका.। २. ताद्रूवैति – मातृका.।

गौणशुद्धसारोपयोरुदाहरणम् –

छिन्नेन्द्रारिशिरोरसार्द्रवटकैस्तत्कन्धरो[1]त्थैरसृग्-
धारातैलघृतैस्तवासिरगदङ्कारः समृद्धो बभौ ।
किं ब्रूमो रघुराम ! वीर ! शुचिना दक्षेण येनाद्भुतं
दुर्वारो दशकन्धरः प्रशमितस्त्रैलोक्यतापज्वरः ॥६॥

---

नौका

छिन्नेन्द्रेति । हे वीर रघुराम ! छिन्नेन्द्रारीणां खण्डितदानवानां यानि शिरांसि तैरेव रसार्द्र[1]वटकैः तिक्तादिरसार्द्रघुटिकाभिः । तादृङ्मात्राभिरिति यावत् । तत्कन्धरोत्थैः तेषां दानवानां कन्धरोद्भवैः । 'कण्ठो गलोऽथ ग्रीवायां शिरोधिः [2]कन्धरेत्यपि' इत्यमरः । असृग्धाराः शोणितप्रवाहाः ता एव तैलानि घृतानि च तैः [3]समृद्धः तवासिः त्वत्सम्बन्धी खड्ग एव अगदङ्कारो वैद्यः बभौ प्रकाशते स्मेति किं ब्रूमः । [3]वक्तुमशक्ता इत्यर्थः । 'रोगहार्यगदङ्कारो भिषग् वैद्यश्चिकित्सकः' इत्यमरः (२.६.९७) । 'कर्मण्यण्' । 'कारे सत्यागदस्य' (पा. ६.३.७०) इति मुमागमः । (वैद्यत्वारोपे) हेतुमाह — शुचिनेत्यादिना । शुचिना शुद्धेन शुभ्रेण च दक्षेण समर्थेन येन

---

मन्दरः

छिन्नेति । छिन्नानि इन्द्रारीणां रक्षसां शिरांस्येव रसार्द्रवटकाः सद्यःकृतवटकाः तैः । तेषामिन्द्रारीणां कन्धरासम्बन्धिन्यो या उद्भवसृग्धारास्ता एव तैलानि घृतानि च तैः समृद्धः तव असिः असिरूपोऽगदङ्कारः 'रोगहार्यगदङ्कारभिषग्वैद्यचिकित्सकाः' इत्यमरः (२.६.९७) । किं ब्रूमः अस्यगदङ्कारसामर्थ्यं किं वर्णयामः । त्रैलोक्यस्य तापज्वरः, तापहेतुरित्यर्थः ॥६॥

---

पाठ. १. °कन्धरोत्थै° – नौका. ख. ।

---

१. °पटलैः – मातृका । २. कन्धरोऽस्त्रियाम् – मातृका । ३. समृद्धस्य– मातृका । ४. °मशक्या – मातृका. ।

अत्र पूर्वार्धे अगदङ्कारशब्देन [1]लक्ष्यमाणरसौषधवटकतैल-घृतसम्पत्तिज्वरनिवर्तकत्वादिवैद्यगतगुणसादृश्यनिमित्ता लक्षणा गौणी। [2]यथाहुः —

---

नौका

खड्गवैद्येन दुर्वारोऽ[1]निवार्यो दशकन्धरो रावण एव त्रैलोक्यतापज्वरः प्रशमितः शान्तिं प्रापितः। इदमद्भुतम्। त्रैलोक्यमित्यत्र — त्रयो लोकास्त्रैलोक्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। इह तावत् — 'अगदङ्कारोऽसिः' इत्युदाहरणम् ॥६॥

तत्र गौणीं व्युत्पादयति — अत्र पूर्वार्धे इत्यादिना। लक्षणा अगदङ्कार-शब्दस्य खड्गे लक्षणा[2] गौणीत्यर्थः। उक्तार्थे सम्मतिमाह — यदाहुरिति। अभिधेयेन स्रोतसा। (अविनाभूतः) [3]सम्बद्धः (तीररूपोऽर्थः) तत्प्रतीतिः [4]तत्प्रत्यायकस्रोतोधर्मः, उपचारामिश्रत्वेन शुद्धा लक्षणेत्यर्थः। उपचारमिश्रां गौणीमाह — लक्ष्यमाणेति। लक्ष्यमाणैः साधारण्येन उभयत्रापि दृश्यमानैः जात्यादिभिर्गुणैर्योगाद् गवादिशब्दानां वाहीकादौ प्रवृत्तिः गौणी लक्षणेत्यर्थः।

---

मन्दरः

ननु विसदृशयोरस्यगदङ्कारयोर्विषयविषयिभावाभावात् कथं सारोपात्व-मित्याशङ्क्य — अत्र गुणसादृश्यं विवक्षितमित्याशयेनाह — अत्रेति। 'अग-दङ्कार'शब्देन 'असिरगदङ्कारः' [5]इत्यत्रत्यागदङ्कारशब्दप्रयोगेणेत्यर्थः। लक्ष्य—

---

पाठ. १. रसगन्धवटकतैलघृतसम्पत्तिज्वरनिवर्तकत्वादिगुणसादृश्यनिमित्ता गौणी दर्शिता – मधु। २. यदाह–नौका 'यथा', इत्येव–मधु।

---

१. °निवार्या – मातृका। २. लक्षणां – मातृका°। ३. सम्बन्धः – मातृका। ४. तत्प्रत्यायकं – मातृका। ५. इत्यसावगदङ्कार – मातृका।

'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता ॥'
इति ।

---

नौका

लक्ष्यमाणगुणैरित्यत्र — 'स्वार्थसहचारिणो गुणा जात्यादयो लक्ष्यमाणा अपि गवादिशब्दानां [1]वाहीकादिरूपपरार्थाभिधाने प्रवृत्ति[2]निमित्तानीति तात्पर्यं केचिदूचुः । 'स्वार्थसहचारि[3]गुणाभेदेन परार्थगतगुणा एव लक्ष्यन्ते, न तु [4]परार्थोऽभिधीयते' इत्यन्ये । तद् द्वयं दूषयितुं प्रथमं स्वाभिमतं पक्षमाह — [5]गुणाश्चेति । लक्षणीया[6] इति । तथा च – 'गौर्वाहीकः' इत्यादौ गोवाहीकयोः साधारणगुणा जात्यादयः । तदाश्रयत्वरूपसम्बन्धेन गवादिशब्दे वाहीकादिकं [7]लक्ष्यत इति अन्यत्र गवादिशब्दप्रवृत्तौ साधारणगुणाश्रयत्वं निमित्तमिति भावः । एवं स्वमतमुपन्यस्य प्राथमिकं केषाञ्चिन्मतं दूषयति — अन्यथेति । स्वार्थेत्यादि । स्वस्य गोशब्दस्य अर्थो गोत्वं पिण्डाकृति वा

---

मन्दरः

माणाः साधारण्येन दृश्यमानाः । रसौषधवटकानां सद्यःकृतवटकानां तैलानां घृतानां च सम्पत्तिः समृद्धिः ज्वरनिवर्तकत्वं च आदौ येषां ते, ते च ते वैद्यगतगुणाश्च तैः सादृश्यं निमित्तं यस्याः सा तथोक्ता, लक्षणा सारोपलक्षणा । गौणी गुणसादृश्यमात्रप्रवृत्ता । अत्र सम्मतिं दर्शयति — अभिधेयेति । अभिधेयाविनाभूतस्य वाच्यार्थसम्बन्धिनोऽर्थस्य प्रतीतिः यस्यां सा तथोक्ता । 'प्रवृत्तिः' रिति पाठे — अभिधेयाविनाभूतविषयकव्यापार इत्यर्थः । वृत्तेः लक्षणावृत्तेः । गौणता तु लक्ष्यमाणगुणैर्योगाद् इष्टा । भवतीति शेषः । अविनाभावोऽत्र सम्बन्धमात्रं, न तु नान्तरीयकत्वम् । तथात्वे तु मञ्चमञ्चस्थितयोर्दैशिकस्य कालिकस्य वाऽविनाभावस्याभावान्मञ्चाः क्रोशन्ति'इत्यादौ लक्षणाभावप्रसङ्गात् । लक्ष्यमाणशब्दार्थमाह — गुणाश्चेति । लक्षणीया द्रष्टव्याः । पक्षद्वयस्यापि

---

१. वाहिकादि° – मातृका । २. °निमित्ताविति – मातृका । ३. गुणभेदेन – मातृका । ४. परार्थाभि° – – मातृका । ५. गौणाश्चेति – मातृका । ६. लक्षणाया – मातृका । ७. लक्षयति इति – मातृका ।

**गुणाश्च स्वपरसाधारण्येन लक्षणीयाः। अन्यथा [1]स्वार्थगतानामर्थान्तरप्रवृत्तिनिमित्तत्वे वैयधिकरण्यदोषः। परगतानां [2]तु स्वार्था-**

---

नौका

तद्गतानां गोशब्देन [1]लक्ष्यमाणानां गुणानां गवादिशब्दस्यार्थान्तरे वाहीकादौ प्रवृत्तिनिमित्तत्वाङ्गीकारे तद्गुणानां लक्ष्ये वाहीकादावभावात् वैयधिकरण्यं स्यादित्यर्थः। इदमुपलक्षणम्। प्रवृत्तिनिमित्तस्य लक्ष्यत्वं गवादिशब्दस्यासङ्केतितवाहीकाद्यर्थाभिधायकत्वं च स्यादिति। द्वितीयमन्येषां मतं दूषयति–[2]परगतानां त्विति। स्वार्थासम्बन्धानामिति हेतुगर्भितम्। परगतगुणानां स्वार्थासम्बन्धेन लक्ष्यत्वमनुपपन्नं स्यादित्यर्थः। लक्षकस्य गवाद्यर्थस्य लक्ष्यस्य वाहीकादिजात्यादेश्च लक्षणाबीजभूतसम्बन्धाभावादिति भावः। ननु तर्हि

---

मन्दरः

दोषदूषितत्वात् साधारण्यपक्ष एव समुचित इति भावः। प्रथमपक्षे दोष दर्शयति — अन्यथेति। 'अन्यथा' पक्षद्वयान्यतरावलम्बने त्वित्यर्थः। स्वार्थगतानां तल्लक्षितानां च गुणानामिति लभ्यते। अर्थान्तरस्य परार्थस्य प्रवृत्तिनिमित्तत्वे, तत्पक्षावलम्बन इत्यर्थः। वैयधिकरण्येति। तद्रूपो दोषः। स्वार्थगतानां गुणानां परार्थे अविद्यमानानामपि परार्थाभिधाने प्रवृत्तिनिमित्तत्वोक्तावन्यगुणानामन्यनिष्ठत्वापातात्। द्वितीयपक्षेऽपि दोषं दर्शयति–परगतानामिति। अत्र 'तु'शब्दः प्राथमिकपक्षाद् भेदं द्योयततिं। लक्ष्यत्वानुपपत्तिः। तादृशेषु लक्षणाया अप्रवृत्तेः। 'साधारण्ये तु' साधारणगुणाश्रयणपक्ष त्वित्यर्थः। अत्र मम्मटपादाः 'गौर्वाहीको, गौरयम्' इत्युदाहृत्य 'अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि

---

पाठ. १. स्वार्थ सम्बन्धाना° – मधु.। २. न पठ्यते – मधु.।

---

१. लक्षमाणानां – मातृका। २. पदगतानां – मातृका।

**सम्बन्धानां लक्ष्यत्वानुपपत्तिः। साधारण्ये तु न कश्चिद् दोषः ॥**

---

### नौका

गुणैक्यं सम्बन्धः स्यादिति चेत्, तद्धि (गुणयोः सतोरैक्यं वा) तुल्यगुणवत्त्वं वा। नाद्यः, [1]लक्षकस्य गवादेः द्रव्यत्वेन गुणत्वाभावात्। नापि द्वितीयः, लक्ष्यस्य जात्यादेः गुणत्वेन [2]गुणवत्त्वाभावात्। किञ्च [3]जात्यादिगुणमात्रप्रतीतौ [4]गोर्गौर्जाड्यमित्येव [5]पर्यायः स्यादिति तदेतदभिसन्धाय स्वमतस्यादुष्टतामाह — साधारण्ये त्विति। साधारणगुणाश्रयत्वस्य प्रवृत्तिनिमित्तत्वान्न कश्चिद् दोष इत्यर्थः ॥

---

### मन्दरः

गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयन्तीति केचित्। स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते, न तु परार्थोऽभिधीयत इत्यन्ये। साधारणगुणाश्रयणेन परार्थ एव लक्ष्यत इत्यपरे' (का. प्र. २.१२) इति। तद्व्याकर्तारो वरदार्यास्तु — 'गौर्वाहीकः' इत्यत्र गोशब्दो गोत्वसहचारिणो जाड्यमान्द्यादिगुणान् लक्षणया प्रतिपादयति। ततस्तान् प्रवृत्तिनिमित्तीकृत्य वाहीकमभिधत्ते – न तु वाहीकं लक्षयतीत्येकं मतम्। गोत्वसहचारिगुणाभेदेन वाहीकगतजाड्यादयो गोशब्देन लक्ष्यन्ते। न तु वाहीकोऽभिधीयत इति द्वितीयम्। गवि वाहीके च वर्तमानानां गुणानामाश्रयणेन परार्थो लक्ष्यत इति तृतीयम्। तत्र प्रथमपक्षे गोशब्दस्यैव जडिमादिगुणेषु लक्षणा। वाहीकशब्दार्थे पुनरभिधेति यत्नगौरवम्; असङ्केतितार्थे पुनरभिधायाः प्रवृत्तिरिति चास्वारस्यं बोध्यम्। इदं च 'लक्ष्यमाणा अपि'इत्यपिशब्देन परार्थाभिधान इत्यनेन च द्योतितम्। द्वितीये तु पक्षे जडिमादिगुणपरार्थप्रतीतिरनिबन्धना स्यादित्यस्वारस्यं बोध्यम्। इदं च गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयते इत्यनेन द्योतितम्। स्वार्थो गोत्वं तेन सह चरितुं शीलमेषामिति

---

१. लक्ष्यस्य – मातृका। २. गुणत्वाभावात् – मातृका। ३. जात्यादि– मातृका। ४. गौर्गोजाड्य – मातृका। ५. प्रयोगः – मातृका।

उत्तरार्धे तापहेतौ दशकन्धरे तापज्वरशब्दस्य प्रवृत्तिनिमित्तं [1]कार्यकारणभावसम्बन्ध इति शुद्धा लक्षणा। उभयत्रापि विषय-निगरणाभावात् [2]सारोपता। खड्गे रावणे च [3]क्रमाद् [4]वैद्यत्वेन तापज्वरत्वेन च प्रतीतिः प्रयोजनम् ॥

---

नौका

एवं पूर्वार्धे गौणसारोपां व्युत्पाद्य उत्तरार्धे शुद्धसारोपलक्षणां व्युत्पा-दयति — उत्तरार्ध इत्यादिना। उक्तलक्षणाद्वयस्य सारोपत्वे हेतुमाह-उभयत्रापीति। [1]गौण्यां शुद्धायां चेत्यर्थः। [2]निगरणाभावादिति। निग-रणमत्यन्तापलापः। उभयोः प्रयोजनमाह — [3]खड्गे चेत्यादिना ॥

---

मन्दरः

ताच्छीलिको णिनिः। परो वाहीकशब्दः तदर्थो वाहीकत्वम्। स्वार्थसह-चारिगुणेभ्यो योऽभेदः सजातीयत्वादभेदोपचारस्तेन। एवकारव्यवच्छेद्यमाह — न तु परार्थ इति। साधारणेति। गवि वाहीके च वर्तमानानां गुणा-नामाश्रयणेन। 'परार्थ एव'इति न तु जडिमादयो गुणाः, लक्ष्यत एवेति न कदाचिदभिधीयत इत्युभयमुखमवधारणम्। एवं च पूर्वपक्षद्वयोक्तदोषान-वकाश इति ध्वनितमिति ॥

एवं पूर्वार्धे गौणसारोपामुदाहृत्य उत्तरार्धे शुद्धसारोपां दर्शयति — उत्त-रार्ध इति। शुद्धत्वहेतुमाह — तापहेताविति। सारोपतां प्रति-पादयति — उभयत्रापीति। प्रयोजनं प्रतिपादयति-खड्ग इति ॥

---

पाठ. १. °भावादिसम्बन्धः – मधु.। २. सारोपा – मधु.। ३. क्रमेण–ख.।
४. वैद्यत्वतापज्वरत्वयोः प्रतीतिः – मधु.।

---

१. गौणायां – मातृका। २. निगरणभावा° – मातृका। ३. शुद्धे – मातृका।

इयं द्विविधाऽपि रूपकादेर्बीजम्। 'मुखं चन्द्रः 'नेत्रानन्द-श्चन्द्रः' इति चोभयमूलत्वेना[1]पि [2]रूपकस्योत्थितेः ॥

उपचारस्य वैविध्यम् -

उपचारश्च कार्यकारणभाव–तादर्थ्य–स्वस्वामिभाव–अवयवावयविभाव–तात्कर्म्यरूपनिमित्तानां पाञ्चविध्येन [3]पञ्चधा भवति।

१. तत्राद्य उदाहृतः।

---

नौका

अस्य लक्षणाद्वयस्य स्वशास्त्रोपयोगमाह — इयमिति। इयं द्विविधापि सारोपलक्षणेत्यर्थः। [1]उदाहरणानि प्रदर्शयन् तद्बीजत्वे हेतुमाह—मुखमिति। मुखं चन्द्रः इत्यत्र — आह्लादि(त्व) गुणसादृश्यनिमित्ता गौणसारोपा लक्षणा[2]। 'नेत्रानन्दश्चन्द्रः' इत्यत्र — आनन्दहेतुत्वलक्षणसादृश्येतर-कार्यकारण(भाव)सम्बन्धेन[3] शुद्धसारोपलक्षणेति विवेकः ॥

---

मन्दरः

इयं कस्यालङ्कारस्योपयुज्यत इत्यत्राह-इयमिति। रूपकादेः अपह्नवादिः'आदि'शब्दार्थः। द्विविधाया अपि रूपकोपकारकत्वं दर्शयति—मुखमिति। 'मुखं चन्द्रः'इत्यत्र मुखनिष्ठानां चन्द्रनिष्ठानां च वर्तुलत्वादीनां सादृश्याद् गौणसारोपात्वम्। 'नेत्रानन्दश्चन्द्रः' इत्यत्र कार्यकारणभावः इति शुद्धसारोपात्वमिति बोध्यम् ॥

---

पाठ. १. अपिर्न पठ्यते – मधु.। २. °स्योपस्थितिः – मधु.। ३. पञ्चविधो – ख.।

---

१. उदाहरणान् – मातृका। २. लक्षणनेत्रा° – मातृका। ३. °सम्बन्धेनाशुद्ध – मातृका।

**२. तादर्थ्येन यथा — 'इन्द्रार्था स्थूणा इन्द्रः' ।**

**३. स्वस्वामिभावेन यथा — 'राजकीयः पुरुषो राजा'**

**४. अवयवावयविभावेन यथा — 'अग्रहस्तो हस्तः' ।**

**५. तात्कर्म्येण यथा -- 'अतक्षा तक्षा' ।**

---

**नौका**

पूर्वं 'शुद्धा तु सादृश्येतरकार्यकारण[1]भावादिसम्बन्धनिबन्धना' इत्युक्तम् । तत्रादिशब्दग्राह्याणि सम्बन्धान्तराणि प्रदर्शयन् तन्निमित्तकमुपचारं पञ्चधा भिनत्ति – उपचारश्चेत्यादिना । [2]अतस्य तत्वेन व्यपदेशः उपचारः । 'तत्राद्य उदाहृतः' इति । 'दशकन्धरस्तापज्वरः' इत्यत्रेति शेषः । इतरसम्बन्धस्थला-न्युदाहरति – तादर्थ्येनेत्यादिना । हस्तसमानसामर्थ्यद्योतनाय हस्ताग्रे उप-लक्षणया हस्तशब्दप्रयोगः । [3]अग्रश्चासौ हस्तश्चेति समानाधिकरणसमासः । अत एव 'हस्ताग्राग्रहस्ता[4]दयो गुणगुणिनोर्भेदाभेदात्' (का .सू. ५.२.१९) इति वामनः । तात्कर्म्येण तत्कर्मनिपुणत्वेन । एतेषां व्यङ्ग्यार्थानाह—एषु क्रमादिति ॥

---

**मन्थरः**

ननु नेत्रानन्दहेतौ चन्द्रे 'नेत्रानन्दश्चन्द्रः' इति कार्यकारणयोरभेदो-पचारः कुतः कृत इत्याशङ्क्य तदादिनिमित्तवशादुपचाराः पञ्चधा भवन्तीत्याह—उपचारश्चेति । तत्रेति । 'त्रैलोक्यतापज्वरो दशकन्धरः' इत्यत्र कार्यकारण-भावादभेदोपचार उदाहृत इति भावः । द्वितीयमुदाहरति — तादर्थ्येनेति । इन्द्रः अर्थः प्रयोजनं यस्याः सा तथोक्ता स्थूणा स्तम्भः । इन्द्रप्रीत्यर्थमुपचा-रैरुत्सवं कर्तुं निखाते स्तम्भविशेषे तादर्थ्यनिमित्तवशादिन्द्र इत्युपचारः कृतः । अत्र ताद्रूप्यप्रतीतिः, तया च इष्टार्थदायित्वधीश्च प्रयोजनम् । तृतीयमुदाहरति-

---

१. कारणाभावा° – मातृका । २. अतः स्वतत्वेन – मातृका । ३. अग्रं चासौ – मातृका । ४. °हस्तयोः गुणगुणेनभेदाभेदाविति – मातृका ।

एषु क्रमादिष्टप्रदत्वानुल्लङ्घ्यत्वसामर्थ्यकौशलविशेषाः[1] प्रयोजनानि व्यङ्ग्यानि ॥

साध्यवसाना –

साध्यवसानां लक्षयति –

निगीर्णो विषयोऽन्येन यदि साध्यवसानिका ।
सा पूर्ववद् द्विधा तेन लक्षणाः सप्त[2] लक्षिताः ॥

अन्येन विषयिणा । विषयनिगरणेनाभेदप्रतिपत्तिरध्यवसायः । तेन सहिता साध्यवसाना ॥

---

नौका

अर्थक्रमागतां साध्यवसानलक्षणां वक्तुमाह — साध्यवसानामिति । निगीर्ण इति । अत्र पूर्वार्धं लक्षणपरम् । तृतीयपादो विभागपरः । चतुर्थपादो मतान्तरव्यवच्छेदार्थ इति विवेकः । तत्र लक्षणांशं विवृणोति-

---

मन्दरः

स्वेति । स्वं पुरुषः स्वामी राजा तयोर्भावः तद्रूपः सम्बन्धस्तेन । राजकीय इति । अत्रापि ताद्रूप्यप्रतीतिः तथा चानतिलङ्घनीयशासनत्वधीश्च प्रयोजनम् । तुरीयमुदाहरति — अवयवेति । 'हस्तोऽवद्यति' इत्यत्र अवदानस्य हस्ताग्रसाध्यत्वादग्रहस्ते एव हस्त इत्युपचारः कृतः । ताद्रूप्यप्रतीतिः सामर्थ्यातिशयधीश्च प्रयोजनम् । अन्तिममुदाहरति — तात्कर्म्येणेति । तत्सम्बन्धि कर्म यस्य स तत्कर्मा तस्य भावः तात्कर्म्यं तेन । अतक्षेति । 'मूलतस्तक्षा यूपमष्टाश्रिं करोति' इत्यत्र तत्कर्मकारित्वादध्वर्यौ तक्षेत्युपचारः कृतः । अत्रापि ताद्रूप्यप्रतीतिः कौशलातिशयधीश्च प्रयोजनम् ॥

---

पाठ. १. विशेषरूपप्रयोजनानि – मधु. । २. कीर्तिता – यधु. ।

गौणसाध्यवसाना –

तत्राद्या यथा – 'अयं कामधेनुः' इति। अत्र अनबरत-वितरणशीलत्वगुणसादृश्याद् *रामे कामधेनुरूपताध्यवसानम्। सर्वथैवाभिन्नत्वप्रतीतिः प्रयोजनम् ॥

---

नौका

अन्येनेति। विषयिणा आरोप्यमाणेन अग्न्यादिना विषयस्य आरोपाधिष्ठानस्य निगरणेन अत्यन्तापलापेनेत्यर्थः ॥

एवं लक्षणार्थमुक्त्वा सा च साध्यवसाना द्विधा सादृश्यनिमित्ता गौणी सम्बन्धान्तरनिमित्ता शुद्धेति गौणशुद्धभेदेन विभागं तृतीयपादे सिद्धवत्कृत्य गौणीमाद्यामुदाहरति -- तत्राद्या यथेति। 'अयं कामधेनुः' इत्युदाहरणम्। तत्र साध्यवसानां व्युत्पादयति---अत्रानवरतेति। अस्याः प्रयोजनमाह -- [1]सर्वथैवेति ॥

---

मन्दरः

एवं प्रासङ्गिकमुपचारनिरूपणं कृत्वा प्रकृतं साध्यवसानानिरूपणं प्रतिजानीते -- साध्यवसानामिति। निगीर्ण इति। अन्येन आरोप्येण विषयो निगीर्णः कवलितो यदि साध्यवसानिका। सा साध्यवसाना पूर्ववत् सारोपेव द्विधा 'गौणसाध्यवसाना शुद्धसाध्यवसाना च'इति। द्विधा भवति तेन हेतुना ॥

आद्यामुदाहरति -- अयं कामधेनुरिति। श्रीरामे कामधेनुत्वाध्यवसानहेतुमाह -- अनवरतेति। 'लक्ष्यमाणगुणैर्योगात्' इति गुणसादृश्यस्य सिद्धान्तितत्वादिति भावः। कामधेनुरूपतयाऽध्यवसानम् अभेदप्रतिपादनम्। फलं दर्शयति -- सर्वथैवेति ॥

---

टिप्प. *. रामे कामधेनुरूपताध्यवसानमिति। वस्तुतस्तु न तावद् 'अयं कामधेनुः' इत्यत्र रामे कामधेनुरूपताध्यवसानम्, येनेदं गौणसाध्यवसानाया उदाहरणं स्यात्। यदि नाम 'अयम्' इत्यनेन विषयिणी कामधेनुः परामृश्येत,

---

१. सर्वथैवेति – मातृका।

टिप्प. तर्ह्येवास्य तदुदाहरणत्वं युज्येत। न चैतदस्ति। 'अयं' 'कामधेनुः'–इत्यनयोर्भिन्नलिङ्गत्वेन सामानाधिकरण्याभावात्। किन्तु रामाख्यविषय एवात्र परामृश्यते।

तथा च विषयस्याभिहितत्वेन तन्निगरणपूर्वकाभेदप्रतिपत्तिरूपाध्यवसाया-भावान्नात्र साध्यवसाना, किन्तु सारोपैव।

तथापि 'अयम्'इत्यस्य कामधेनुपरामर्शकत्वे यद्याग्रहः, तर्हि भिन्नलिङ्गत्वे किं वा निमित्तं वाच्यं स्यात्।

[1]ननु भवतीदं निमित्तं भिन्नलिङ्गतायाम्। यथा अयमिति शब्दो न विषयं परामृशति, किन्तु विषयगतेदन्तामात्रम्। तदनु पुरोवर्त्यभेदाध्यवसायेन निगीर्णविषयां विषयिणीमिदन्तया विशिनष्टीति प्राथमिकांशमादाय इदमः पुंलिङ्गतया निर्देश इति चेन्,नैवम्। निगीर्णत्वाद् विषयस्य, विषयिण्या एवात्र प्राधान्येन तत्सामानाधिकरण्यपरित्यागे बीजाभावात्। मुख्यं परित्यज्य गौणानुधावनस्यान्याय्यत्वात्। विशेषणविशेष्ययोः समानलिङ्ग-विभक्त्यादिकत्वनियमात्। 'अनाकाशे कोऽयं गलितहरिणः शीतकिरणः' इत्यादाविदमो विषयिविशेषणत्वेनैव प्रयोगदर्शनाच्च।

एवं च यदीदमो विषयिविशेषणत्वं सम्पाद्य 'इयं कामधेनुः' इत्युदाह्रियेत, तर्हि भवेदिदमुदाहरणं साध्यवसानायाः। अन्यथा 'अयम्'इत्यनेन विषय-स्याभिहितत्वात् सारोपाया एवात्रावतारः स्यात्। तथा चोक्तं पण्डित-राजेन तदेतल्लक्षणामूलकातिशयोक्तिं लक्षयता ––

"कथं तर्हि 'कमलमिदमनम्बुजातं जयतितमां कनकलतिकायाम्' इत्यादा-विदन्त्वादेर्विषयतावच्छेदकस्योल्लेखान्निगरणमिति चेन्,न। इदमित्यस्य कमल-त्वविशिष्टे विशेषणत्व एवातिशयोक्तिः, उद्देश्यतावच्छेदकत्वे तु रूपकमेव' (रसगं. द्विती. अतिशयोक्तिः) इति।

1. पूर्वपक्षोऽयं – अत्रोभयत्रापि'अयं'शब्दो–इत्यादिमूलग्रन्थसारांशरूप इत्यव-धेयम्।

२. शुद्धसाध्यवसाना –

द्वितीया यथा – 'अयमभ्युदयो लोकानाम्' इति। अत्राभ्युदयहेतुत्वाद् रामेऽभ्युदयशब्दप्रवृत्तिः। अव्यभिचारेण कार्यनिष्पादकत्वमिहापि प्रयोजनम् ॥

---

नौका

उपचारामिश्रां [1]शुद्धामाह -- द्वितीया यथेति। अयमित्याद्युदाहरणम्। अत्र शुद्धां व्युत्पादयति अत्राभ्युदयेति। अत्र कार्यकारणभावसम्बन्धः। प्रयोजनमाह -- अव्यभिचारेणेति ॥

---

मन्दरः

द्वितीयामुदाहरति -- अयमिति। अव्यभिचारेण नियमेन ॥

---

१. शुद्धामाह – मातृका।

---

टिप्प. उक्तं चापिअ[1]'लङ्कारचन्द्रिकायाम् —

''ननूक्तोदाहरणेषु – अयमिति विषयस्योपादानात् कथमतिशयोक्तिरिति चेत्, अत्राहुः ''इदन्त्वस्य विषयिविशेषणत्वेन विवक्षायामतिशयोक्तिरेव। यदा तु विषयविशेषणत्वविवक्षा, तदा रूपकमिति व्यवस्था। अत एव प्रकाशकृता दशमे रूपकातिशयोक्त्यादिसन्देहसङ्करे 'नयनानन्ददायीन्दोर्बिम्ब–मेतत् प्रसीदति' (का. प्र. १०.५७४) इत्युदाहृतम्'' इति।

सति चैवम् – 'अयं कामधेनुः' इत्यस्य साध्यवसानालक्ष्यत्वेन समुदाहरणं तु विचारणीयमेव। 'इयं कामधेनुः' इति चेत् पाठः साधीयान् इति ॥

---

टिप्प. 1. सेयं रामभट्टात्मजवैद्यनाथविरचिता कुवलयानन्दव्याख्या।

२. उक्तोदाहरणेषु लक्षणसमन्वयः –

अत्रोभयत्राप्ययंशब्दो न रामाख्यविषयपरामर्शी। तदा सारोपात्वप्रसङ्गात्। किन्तु तद्गतेदन्तामात्रं परामृशन् विषयिणी-मारोप्यमाणां कामधेनुमेव पुरोवर्त्यभेदाध्यवसायेनेदन्तया विशिनष्टि। तद्विशिष्टा च विषयिणी कामधेनुर्निगीर्णविषयतया स्वतादात्म्येनैव प्रतीयते। एवम् – 'अयमभ्युदयः' इत्यत्राप्यूह्यम्।

इयमतिशयोक्तेर्बीजम्। 'अध्य[1]वसितप्राधान्ये त्वतिशयोक्तिः' (अलङ्कारसर्वस्वे पृ. ८३) इति लक्षणात्[2]।

---

**नौका**

अत्रोदाहरणद्वयेऽध्यवसायं द्रढयति — अत्रोभयत्रापीति। विषयिणी-मित्यस्य व्याख्यानमारोप्यमाणामिति। कामधेनुरित्यादौ केवलं सादृश्या(द)ध्यवसानम्; 'अभ्युदयः' इत्यादौ तु [1]सम्बन्धान्तरादिति भेदः। अत्रापि स्वशास्त्रोपयोगमाह — इयमिति। [2]उभयरूपापि साध्यवसानलक्षणेत्यर्थः। बीजमिति। तत् कथम्? तत्राह — अध्यवसितेति॥

---

**मन्दरः**

ननूभयत्राप्ययमिति – 'इदं'शब्देन विषयोपादानात् कथं साध्यवसाना-त्वमित्याशङ्क्य समाधत्ते–अत्रेति। किन्त्विति। अत्रायमित्यनुवर्तते। 'विष-यिणी'शब्दार्थमाह — आरोप्यमाणामिति। पुरोवर्तिना विषयभूतेन रामेण योऽभेदाध्यवसायस्तेन। इदन्तया विशिनष्टि — इदन्तारूपविशेषणविशिष्टां करोति। एवं चेत् किमित्यत आह — तद्विशिष्टेति। इदन्ताविशिष्टेत्यर्थः।

---

पाठ. १. °वसाना° – मधु.। २. लक्षणम् – मधु.।

---

१. निबन्धान्तरा° – मातृका। २. °रूपादि° – मातृका।

लक्षणायाः साकल्येन सप्तविधत्वम् –

**सप्तेति। *जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा, शुद्धसारोपा, शुद्धसाध्यवसाना चेति पञ्च शुद्धाः* *गौणसारोपा, गौणसाध्यवसाना चेति* द्वे गौण्यौ। तयोर्गुणयोगादेव शुद्धाभ्यो भेदः। शुद्धत्वं च तासामगौणत्वमेव[1]। [2]आरोपाध्यवसानाभ्यामेव**

---

नौका

यदुक्तं काव्यप्रकाशे (२.१७)—'लक्षणा तेन षड्विधा' इति, तत्र चतुर्थपादे [1]विप्रतिपत्तिरित्याशयेन [2]प्रतीकामादत्ते -- [3]सप्तेतीति। तानेव

---

मन्दरः

कामधेनुश्च निगीर्णविषयतया हेतुना। स्वेन तादात्म्यमभेदस्तेन प्रतीयते। स्वतादात्म्यं विना कथं विषयस्य निगरणं भवेदिति भावः। शुद्धसाध्यवसानायामेवं योज्यमित्याह — एवमिति। इयं कस्यालङ्कारस्य कारणमित्यत्राह-इयमिति। उपपत्तिमाह — अध्यवसितेति। 'अध्यवसितप्राधान्ये तु' शुद्धाध्यवसायप्राधान्ये त्वित्यर्थः॥

लक्षितानां लक्षणानामभिधानाख्यानपूर्वकं वैलक्षण्यं दर्शयति — सप्ते-(ती)ति। जहल्लक्षणेति। पञ्च शुद्धा इति। सादृश्येतरसम्बन्धमूलकत्वादिति भावः। द्वे गौण्याविति। सप्ताप्यभिहिता इति भावः। तयोरिति। गौणसारोपगौणसाध्यवसानयोः। 'शुद्धाभ्यः' जहदादिभ्यः पञ्चभ्य

---

पाठ. **जहदित्यारभ्य चेत्यन्तो ग्रन्थो न पठ्यते – मधु.। **गौणेत्यारभ्य चेत्यन्तं न पठ्यते – मधु.। १. 'न च सारोपसाध्यवसानाभ्यां साङ्कर्यशङ्का' – इतीयं पङ्क्तिरनन्तरं दृश्यते – मधु.। २. सारोपसाध्य° – मधु., ख.।

---

१. °पत्तीत्याशयेन – मातृका। २. प्रतीकमादते – मातृका। ३. सप्तेपीति – मातृका।

गौण्योर्मिथो भेदः। सारोप[1]साध्यवसानयोः[2] शुद्धयोश्च ताभ्यामेवान्योन्यभेदः। जहदादिशुद्धाभ्यस्तु कार्यकारणभावादिसम्बन्धनिबन्धनोपचाराद् भेद इति न कुत्रापि [3]साङ्कर्यशङ्कावकाशः॥

संसृष्टिसङ्कराभ्यां च तस्या एवानन्त्यम् –

एवं फलतो लक्षणायाः सप्तविधाया अपि त्रिविधसङ्करेणैकविधसंसृष्ट्या च मेलने प्रत्येकं चातुर्विध्येनाष्टाविंशतिभेदा भवन्ति।

---

नौका

सप्तभेदान् परस्परासाङ्कर्यपूर्वकं विशदयति — जहल्लक्षणेत्यादिना 'अवकाशः' इत्यन्तेन॥

इत्थं प्रयोजनलक्षणां सावान्तरभेदं निरूप्य तस्याः* साङ्कर्यादिना बहुविधतामाह— 'एवं [1]फलतः' इत्यादिना। फलतः प्रयोजनात्। एवम्

---

मन्दरः

इत्यर्थः। किंरूपं शुद्धत्वमित्यत्राह — शुद्धत्वं चेति। अगौणत्वं गुणयोगराहित्यमेव। शुद्धसारोपशुद्धसाध्यवसानयोरन्योन्यवैलक्षण्यमाह — सारोपेति। 'ताभ्याम्' आरोपाध्यवसानाभ्यामेवेत्यर्थः। जहदादिशुद्धाभ्यः कथमितरयोः शुद्धयोर्भेद इत्यत्राह — जहदादीति। कार्यकारणभावादीति। तादर्थ्यादिरादिशब्दार्थः। जहदादिशुद्धासु तिसृषु यथाक्रममविनाभावाश्रयाश्रयिभावाभेदरूपसम्बन्धा बोध्याः॥

---

पाठ. १. सारोपाध्यवसानयोः – मन्दर। २. °सानयोश्चैताभ्यामेव मिथो भेदः – मधु.। ३. 'साङ्कर्यम्' इत्येव – मधु., 'साङ्कर्यशङ्का' इत्येव – ख.।

---

१. फलते – मातृका। * तस्यासाङ्कर्या° – मातृका।

शुद्धभेदैरपि मेलने सप्ताधिक्यात् पुनः पञ्चत्रिंशत् प्रकाराः। [1]स्वप्रभेदैश्च सङ्कलने [2]तु सङ्ख्यातुमेव न शक्यन्ते तत्प्रकाराः। यथाहुः —

"सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।
अस्याः सङ्कलनेऽन्योन्यमष्टाविंशतिरीरिताः॥
पञ्चत्रिंशत् समाख्याताः शुद्धभेदैः समं पुनः।
स्वैः प्रभेदैरलङ्कारैर्ध्वनिभेदैश्च सङ्गता॥
[3]वितन्वती चमत्कारं सङ्ख्यामत्सरिणी[4] मता॥"

इति। (एकावली २.१०.१२)

---

नौका

उक्तरीत्या सप्तविधाया अपि। 'फलतो लक्षणायाः' प्रयोजनलक्षणाया इत्यर्थः। त्रिविधसङ्करेणेति। साङ्कर्यस्य त्रैविध्यं वक्ष्यति। शुद्धभेदैः सङ्करसंसृष्ट्यसङ्कीर्णैः जहदादिभेदैः समं सङ्करादिमिश्रितानामष्टाविंशतिभेदानां मेलने सति अष्टाविंशतेः[1] सप्ताधिक्यात् पञ्चत्रिंशद्भेदा इत्यर्थः। ननु व्यङ्ग्यस्य प्रयोजनस्य गूढत्वागूढत्वाभ्यां भेदान्तराणां सत्त्वात् कथं पञ्चत्रिंशत्सङ्ख्येत्याशङ्क्य — किं बहुना ? लक्षणाभेदा असङ्ख्येया इत्याह — स्वप्रभेदैस्त्विति। 'तु'[2]शब्देन लक्षणामूलकाः समासोक्त्याद्यलङ्कारभेदा ध्वनिभेदाश्च सूचिताः। तथा चेयं लक्षणा स्वप्रभेदैः जहदादिभेदैः स्वमूलकैः समासोक्त्याद्यलङ्कारभेदैः [3]स्वमूलकैः ध्वनिभेदैश्च सङ्गता सती सङ्ख्यातुं परिगणयितुं न शक्यत इत्यर्थः। उक्तार्थे विद्याधरसम्मतिमाह — यथाहुरिति। सङ्करेणेति। सार्धश्लोकद्वयमुक्तरीत्या व्याख्यातप्रायमेव। [4]व्याख्यातव्यं तु 'अस्या लक्षणायाः

---

पाठ. १. स्वप्रभेदैस्तु – नौका.। २. न पठ्यते – मधु. ख. नौका.। ३. विचिन्वति – मधु.। ४. मत्सरिणा मताः – मधु.।

---

१. विंशतैः – मातृका। २. तु शब्दो – मातृका। ३. समूलकैः – मातृका। ३. व्याख्यानां तु – मातृका।

शुद्धभेदैः असङ्कलितभेदैः। स्वैः प्रभेदैः लक्षणाभेदैः। 'सङ्ख्या-मत्सरिणी' असङ्ख्येत्यर्थः ॥

सङ्करस्य त्रैविध्यम् -

सङ्करश्चाङ्गाङ्गिभावेन संशयेनैकलक्षकानुप्रवेशेन चेति त्रिरूपः ॥

१. अङ्गाङ्गिभावसङ्करः -

तत्राद्यो यथा —

संवर्धयन्तं निजजीवनेन शुचिं सदा वाडवमम्बुराशिम्।

---

नौका

*सङ्कलने मेलने'। अत्र क्वचित् स्वयं व्याचष्टे — शुद्धभेदैरिति। असङ्कलितभेदैः सङ्कराद्यसम्मिलितैः जहदादिभेदैः ॥

त्रिविधसङ्करेणेत्युक्तम्। तत् त्रैविध्यं सङ्करस्याह — सङ्करश्चेति। [1]सङ्कस्वरूपं त्वग्रे वक्ष्यते ॥

तत्राङ्गाङ्गिभावलक्षणसङ्करमुदाहरति — [2]तत्राद्यो यथेति।

संवर्धयन्तमिति। अत्र शुचिं वाडवं वडवानलं निजजीवनेन संवर्धयन्तं पोषयन्तम् अम्बुराशिं समुद्रं विनाश्य नाशयित्वा। नशेर्ण्यन्तात् क्त्वा,

---

मन्दरः

एवं निरूपिताया लक्षणायाः सङ्करादिसम्मेलनवशादसङ्ख्यता भवतीत्याह-एवमिति। यथाहुरिति। आलङ्कारिका इति शेषः। सङ्करेणेति। अलङ्कारैर्ध्वनिभेदैश्च, स्वमूलै(लकै)रिति शेषः। व्याकरोति — शुद्धभेदैरिति ॥

---

१. सङ्करस्य रूपं – मातृका। * सङ्करे ··· सम्मे° –मातृका। २. तत्राद्ये– मातृका।

**विनाश्य रामस्य शरस्त्रपावान् निषङ्गगर्भं निभृतोऽधिशेते ॥७॥**

**[1]जीवनेन जलेन प्राणेन च। शुचिं वाडवं बडवाग्निं 'शुद्ध' ब्राह्मणं च।**

---

नौका

ल्यबादेशः। श्रीरामबाणः सेतुनिर्माणसमये समुद्धतमम्बुधिं शोषयित्वा पुनस्तूणीरमाविशदिति भावः। शिष्टं स्पष्टम्। निषङ्गगर्भमित्यत्र क्वचित् सप्तम्यन्तपाठस्तु प्रामादिकः। 'अधि[1]शीङ्स्थासां कर्म' (पा. १.४.४६) इत्याधारस्य कर्मत्वविधानात् ॥७॥

श्लोकमिमं क्वचित् स्वयं विवृणोति — जीवनेनेति। [2]जलेन प्राणेन चेति। 'जीवनं वर्तने जीवप्राणधारणयोर्जले' इत्युभयत्रापि मेदिनी[3]। शुचिं वडवं वडवात्मकं शुचिम्, अग्निमित्यर्थः। इममर्थमेवाह — वडवाग्निमिति। शुद्धब्राह्मणं चेति। 'शुचिर्ना शुक्रशृङ्गारचन्द्राषाढहराग्निषु'। ('वडवाऽश्वा-कुम्भदास्योः) योषिद्भेदे [4]द्विजस्त्रियाम्। वाडवो [5]'ब्राह्मणौर्वाग्न्योः' इति च

---

मन्दरः

दिक्प्रदर्शनार्थं कतिचित् सङ्कलितभेदानुदाहर्तुकामोऽङ्गाङ्गिभावसङ्करमादा-वुदाहरति — संवर्धयन्तमिति। शुचिम् अग्निम्। अन्यत्र शुचिं परिशुद्धम्। निभृतो निश्चलः ॥७॥

कतिपयशब्दव्याकरणपूर्वकमलङ्कारान् प्रतिपाद्य लक्षणयोरङ्गाङ्गिभावं दर्श-यति — जीवनेनेति। अत्रेति। श्लेषेति। श्लेषस्याभेदाध्यवसायहेतुत्वा-

---

पाठ. १. 'जीवनेने'त्यारभ्य 'ब्राह्मणं च'इत्यन्तो ग्रन्थो न पठचते – मधु।

---

१. °शीङ्गिस्थानां – मातृका। २. जीवेन – मातृका। ३. 'सलिलेऽपि च जीवनम्। ····· इत्युभयत्रापि रत्नमाला°' इति मातृका। ४–५. द्विजः स्त्रियाम्। वा वो व वा ग्न्योः' – मातृका।

अत्र जीवनादिशब्दश्लेष[1]मूलकाभेदाध्यवसायेन 'सागरः [2]स्वप्राणेन शुद्धब्राह्मणपोषकः' इति[3] प्रतीयते। [4]तद्विनाशनरूपानुचितकर्माचरण[5]जनित[6]लज्जा [7]रामशरस्य निषङ्गकोटरशयने[8] हेतुतयोत्प्रेक्ष्यते। [9]सा च वाचकपदाभावाद् गम्येति। [10]अत्र [11]श्लेषातिशयोक्त्युत्प्रेक्षाणां सङ्करः। लज्जायाः क्वचिच्छयनहेतुत्वेन तच्छेषतया तदङ्गत्वम्। लज्जानिद्रयोश्चेतनधर्मयोरचेतने रामबाणेऽसम्भवाल्लज्जाशब्देन तत्कार्यभूता समुद्रान्तरशोषणरूपानुचित[12]कर्मान्तराचरणान्निवृत्तिर्लक्ष्यते। 'लज्जितो हि निवर्तते'। शयनशब्देन

---

नौका

दण्डनाथीये। अत्र व्यङ्ग्यमाह — अत्रेत्यादिना प्रतीयत इत्यन्तेन। जीवना[1]दीत्यादिना [2]शुचिवाडवयोः परिग्रहः। तथा च जीवन–शुचि–वाडवशब्देषु [3]योऽर्थश्लेषः तन्मूलको योऽभेदाध्यवसायः अभेदप्रतिपत्तिः तेनेत्यर्थः। अलङ्कारानाह — तद्विनाशेत्यादिना। ब्राह्मणपोषकसमुद्रविनाशेत्यर्थः। सा च उत्प्रेक्षा च। गम्येति। 'मन्ये शङ्के ध्रुवं' (काव्या० २.२३४) इत्यादि-

---

मन्दरः

दतिशयोक्तेः श्लेषोऽङ्गम्। उत्प्रेक्षाया अतिशयोक्त्यनुगृहीतत्वात् तयोरप्यङ्गाङ्गिभाव इति विवेकः। लज्जाया इति। तच्छेषतया शयनाङ्गतया।

---

पाठ. श्लेषबलमूलक° – मन्दर. ख.। २. न पठ्यते – मधु.। ३. न पठ्यते– मधु.। ४. तद्विनाशरूपा° – मधु. नौका.। ५. जनिता – ख. ६. त्रपा शरस्य – मधु.। ७. न पठ्यते – ख.। ८. °शयनहेतुतयो° – मधु. ख.। ९. पङ्क्तिरियं न पठ्यते – मधु.। १०. न पठ्यते – मन्दर. ख.। ११. श्लेषमूलका° – मधु.। १२. कर्माचरणा° – मधु.।

---

१, जीवनादित्या° – मातृका। २. सूचितबाडबयोः – मातृका। ३. योऽर्थे श्लेषः – मातृका।

च तत्कार्यं निर्व्यापरत्वं लक्ष्यते। 'शयितो न व्याप्रियते'। इत्युक्तरीत्या[1]ऽनयोर्लक्षणयोरङ्गाङ्गिभावेन सङ्करः* ॥

---

**नौका**

वाचकाभावादिति भावः। सङ्कर इति। अतिशयोक्तेः श्लेषप्रतिभोत्थापितत्वाद् अतिशयोक्तिश्लेषयोः, तादृशातिशयोक्त्युत्थापितत्वादुत्प्रेक्षाया इति तयोश्चाङ्गाङ्गिभावेन सङ्कर इति भावः। अत्र का वा लक्षणा? कथं [1]चाङ्गाङ्गिभाव इत्यपेक्षायामाह — 'लज्जायाः' इत्यादिना 'सङ्करः' इत्यन्तेन। अनयोर्लक्षणयोरिति तथा च — 'त्रपावान्' इत्यत्र त्रपाकार्यनिवृत्ति[2]लक्षणा सादृश्येतरका-र्यकारणभावलक्षणसम्बन्धनिबन्धना साध्यवसाना। 'अधिशेते' इत्यत्र च शयनकार्यनिर्व्यापारलक्षणा साध्यवसाना। तत्र प्रथमलक्षणाया द्वितीयलक्षणाहेतुत्वादङ्गाङ्गिभावसङ्कर इति भावः ॥७॥

---

**मन्दरः**

'तदङ्गत्वं' निद्राङ्गत्वमित्यर्थः। भवतु किमित्यत आह — लज्जानिद्रयोरिति। 'तत्कार्यभूता' लज्जाकार्यभूतेत्यर्थः। समुद्रान्तराणामन्यसमुद्राणां शोषणरूपं यदनुचितकर्मान्तरं तस्याचरणान्निवृत्तिः। तत्रोपपत्तिं दर्शयति – लज्जित इति। शयनशब्देनेति। तत्राप्युपपत्तिमाह – शयित इति। इतीति। अत्र त्रपाशब्दलक्ष्यार्थभूताया अनुचितकर्मान्तराचरणनिवृत्तेः शयनशब्दलक्ष्यार्थभूतं निर्व्यापारत्वं प्रति उपोद्बलकत्वाद् (इत्यर्थः)। 'अनयोर्लक्षणयोः' शुद्धसाध्यवसानयोरित्यर्थः। 'सङ्करः' लक्ष्ययोरङ्गाङ्गिभावाल्लक्षणयोरप्यङ्गाङ्गिभाव इति भावः ॥७॥

---

पाठ. १. तयोर्लक्षणयोः – ख.।

---

१. चाङ्गीभावः – मातृका। २. निवृत्तिर्लक्षणा – मातृका।

---

टिप्प. * सङ्कर इति। वस्तुतस्तु न तावदत्र लज्जाशब्देन तत्कार्यभूता समुद्रान्तरशोषणरूपानुचितकर्मान्तराचरणान्निवृत्तिर्लक्षयितव्या भवति, येनास्यैतदुदाहरणत्वं सूपपादं स्यात्।

टिप्प. ननु अचेतनरामबाणगतत्वेन लज्जायाश्चेतनधर्मस्यानुपपद्यमानतया तदर्थमत्र विना लक्षणया न गत्यन्तरमिति चेत्, न। विनापि तयोपपत्तेः। लक्षणा-समाश्रयण एव प्रकृतोत्प्रेक्षाया असङ्गतेश्च।

यद्यनुचितकर्माचरणजनिता लज्जा रामबाणे उपपद्यमाना स्यात्, तर्हि तस्या शयनहेतुत्वं स्वत एवोपपद्यत इति तद्धेतुत्वसम्भावनमनुपपन्नमेव स्यात्। तदभाववत्त्वनिश्चये हि सति तद्वत्त्वसम्भावनं युज्यते।

तथा चोक्तं पण्डितराजैः ––

"तद्भिन्नत्वेन तदभाववत्त्वेन वा प्रमितस्य पदार्थस्य रमणीयतद्वृत्ति–तत्समा-नाधिकरणान्यतरतद्धर्मसम्बन्धनिमित्तकं तत्त्वेन तद्वत्त्वेन वा सम्भावनमुत्प्रेक्षा" (रसगं. द्विती. उत्प्रेक्षा.) इति।

तथा च नास्ति लज्जाया रामबाणगतत्वनिर्वाहावश्यम्भावः, येनात्र तदुपायत्वेन लक्षणा समाश्रयणीया स्यात्।

हेतूत्प्रेक्षायां हि निमित्तांश एव लक्षणावश्यम्भावः साधारण्यसम्पादनाय। यथोक्तं सर्वस्वकृद्भिः ––

"हेतूत्प्रेक्षायां यस्य प्रकृतसम्बन्धिनो धर्मस्य हेतुरुत्प्रेक्ष्यते, स धर्मोऽध्यवसाय-वशादभिन्न एव उत्प्रेक्षायां निमित्तत्वेनाश्रीयते" इति।

(अलङ्कारसर्वस्व. पृ. ७८)

हेत्वंशे तु न तथा। अन्यथा
'सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम्॥' (रघु. १३.२३)

इत्यत्रापि – अचेतने नूपुरे तादृशदुःखस्य चेतनधर्मस्यानुपपद्यमानतया लक्षणा समाश्रयणीया भवेदिति पूर्वेषामत्र तथा व्याख्यानमसङ्गतं स्यात्। यथा – 'अत्र दुःखं गुणः (हेतुत्वेनोत्प्रेक्ष्यते)' इत्यलङ्कारसर्वस्वकृतो व्याचख्युः। एवम् ––

'इति हेतूत्प्रेक्षोदाहरणे नूपुरगतेन दुःखिसाधारणेन मौनित्वेन निमित्तेन नूपुरे तद्धेतुभूतदुःखमेव धर्मतयोत्प्रेक्ष्यते' इति चित्रमीमांसाकृतः। तथा–– "अत्रापि मौनहेतुत्वेन नूपुरे विश्लेषदुःखमुत्प्रेक्ष्यते। अत्र निश्चलत्वनिमि-

त्तकनिःशब्दत्वाध्यवसितं मौनं निमित्तम्। विश्लेषदुःखसमानाधिकरणत्वे सति नूपुरवृत्तित्वात्" इति रसगङ्गाधरकृतः। स्पष्टीचक्रुश्च तदेतत् त एव सर्वस्वकृतं प्रत्याचक्षाणाः —

'न हि दुःखगुणोत्प्रेक्षायामभेदगर्भोऽध्यवसायोऽस्ति। मौनांशे सन्नप्यध्यवसायः सिद्धत्वादतिशयोक्तेरेव विषयो भवितुमर्हति, नोत्प्रेक्षायाः' (रसगं. द्वि. उत्प्रेक्षा,) इति।

अत एव —

"आलिङ्गनाद् रघुपतेरवनीसुताया हारेषु भूरिकुचमण्डलमाश्रितेषु।

उत्सूत्रतामुपगतेषु भयेन नूनं क्षीणं वलग्नममुचत् स्वत एव नीवी।"

(सा. र. अर्था.)

इति हेतूत्प्रेक्षोदाहरणे 'अत्र नीवीगलने भयगुणस्य हेतुत्वम्' इति ग्रन्थकृतो वित्तरणमपि सङ्गच्छते। अन्यथा अचेतननीव्यां चेतनधर्मस्य भयस्यानुपपद्यमानतयाऽत्रापि अध्यवसायविषयोऽन्वेष्यः स्यात्।

अतश्च सिद्धं 'यन्निमित्तांश एवाध्यवसायो न हेत्वंशः' इति।

ननु निमित्तांशगताध्यवसायस्यातिशयोक्तिविषयत्वेन, सम्भावनाविषये हेत्वंशे तु नाध्यवसाय इति सिद्धान्तिततत्वेन च कथमुत्प्रेक्षायां साध्यवसानत्वव्यवहारः प्राचामिति चेत्,

उच्यते, सर्वत्रोत्प्रेक्षासु तादात्म्येनैव सम्भावनमिति मतमनुसृत्येति यथाकथञ्चित् समाधेयम्। हेतुफलोत्प्रेक्षयोरपि ते तादात्म्येनैव सम्भावनमिति मन्यन्ते। यथात्र हेतूत्प्रेक्षोदाहरणे —

"उन्मेषं यो मम न सहते जातिवैरी निशाया —
मिन्दोरिन्दीवरदलदृशस्तस्य सौन्दर्यदर्पः।

नीतः शान्ति प्रसभमनया वक्त्रकान्त्येति हर्षाल्
लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः।"

'अत्र पद्मलक्ष्म्याः कामिनीचरणयोः स्वभावलग्नत्वं यथोक्तहर्षहेतुकलग्नत्वतादात्म्येन सम्भावितम्' इति विवृतं प्रदीपकृद्भिः।

स्पष्टीकृतं चापि काव्यप्रकाशव्याख्यायां बालबोधिन्याम् –

"अत्र 'लग्ना'पदेन लक्षणया पृथगुपस्थिते स्वाभाविकशोभासम्बन्धे यथोक्त-हर्षहेतुकपद्मलक्ष्मीलग्नत्वतादात्म्यसम्भावना, तात्पर्यानुपपत्त्यैव च लक्षणा, लक्ष्यगतातिशयप्रतीतिश्च प्रयोजनम् । एतावतैव उत्प्रेक्षायां साध्यवसान-त्वव्यवहारः प्राचामिति बोध्यम्" (का. प्र. १०.४१६) इति ।

अप्पयदीक्षितैरपि – 'यद्वा हेतुफलधर्मस्वरूपोत्प्रेक्षोदाहरेणेष्वपि तादात्म्येनैवो-त्प्रेक्षा'इति महता ग्रंथसन्दर्भेण तमिमं पक्षं समर्थयद्भिः ––

"अत्र हेतुतया हर्षोत्प्रेक्षां प्रति तत्फलत्वाभिमतं पादयोः पद्मलक्ष्म्या लगनं निमित्तं वाच्यम् । तच्च सर्वथैवासिद्धम् । अतस्तत्र पादयोर्यः स्वाभाविक-शोभासम्बन्धः, स एव पद्मलक्ष्मीलग्नत्वेनाध्यवसितो निमित्तमिति समर्थनी-यम् । एवं निमित्तांशे तादात्म्याध्यवसानावश्यम्भावे तत्रैवोत्प्रेक्षाविश्रान्ति-रस्तु' इत्युपपादितम् । (चित्र. उत्प्रेक्षा. पृ. ७९)

एवं च 'सर्वत्र तादात्म्येनैव सम्भावनम्'इति पक्षमवलम्ब्योत्प्रेक्षायां साध्य-वसानत्वव्यवहार इति न काचिदनुपपत्तिः ।

अतश्च सिद्धं 'यद्धेतूत्प्रेक्षायां निमित्तांश एवाध्यवसायो न हेत्वंशः' इति ।

किञ्च प्रवृत्तेरिव निवृत्तेरपि चेतनधर्मत्वेन कथं सा त्रपाशब्देन लक्षणीया स्यात् ।

अपि च नात्र त्रपाया हेतुत्वेनोत्प्रेक्षा, तत्प्रतिपादकपञ्चम्याद्यश्रवणात् । किन्तु त्रपावत्तादात्म्यमेवोत्प्रेक्ष्यते । त्रपाशब्दोपरि मतुबः श्रवणात् ।

तथा चोक्तं चित्रमीमांसायाम् (पृ. ९४) ––

"यत्र हेतुत्वप्रतिपादकः शब्दो नास्ति, तत्र हेतुभवनक्षमस्यापि स्वरूपोत्प्रेक्षैव" इति ।

यदि 'त्रपावान्'इत्यस्य स्थाने 'त्रपातः' इति पठचेत, तर्हि भवेदियं हेतूत्प्रेक्षेति । सा च वाचकाभावाद् गम्येति तु व्यक्तमेव ।

यद्यपि 'विनाश्य'इत्यनेन 'समुद्रान्तर'इत्याद्यग्रिमविवरणानुरोधात् निःशेषतया समुद्रशोषणे विवक्षिते रामायणविरोधः समापतति । तत्र हि वाल्मीकीये[1] –

1. दृश्यतां सुन्दरकाण्डे एकविंशो द्वाविंशश्चेति सर्गद्वयम् ।

२. सन्देहसङ्करः -

**संशयेन यथा —**

**सचेतना काञ्चनपुत्रिका वा शरीरिणी मन्मथचातुरी वा ।**
**सौदामिनी स्थैर्यवती किमेषा का वा न जाने रघुवीरपार्श्वे ॥८॥**

---

**नौका**

सन्देहसङ्करमुदाहरति — [1]सचेतनेति । चेतनं ज्ञानं तेन सहिता सचेतना । सप्राणेत्यर्थः । तादृशी काञ्चनपुत्रिका सुवर्णप्रतिमा[2] वा । सुदाम्ना अद्रिणा एकदिक् सौदामिनी विद्युत् । 'तडित् सौदामिनी विद्युत्' इत्यमरः (१.२.१०) । 'तेनैकदिक्' (पा. ४.३.११२) इत्यण् । 'टिड्ढाणञ्' (पा. ४.१.१५) इत्यादिना ङीप् ॥८॥

---

**मन्दरः**

सन्देहसङ्करमुदाहरति — सचेतनेति । स्पष्टम् ॥८॥

---

१. न चेतनेति – मातृका । २. °प्रतिमामाह – मातृका ।

---

रामो हि निःशेषतया सागरं शोषयितुं ब्रह्मास्त्रेण संयोज्य धनुषि समारोपितं शरं सागरप्रार्थनया न तस्मिन् चिक्षेप, किन्तु तदुत्तरेण 'द्रुमकुल्य' इति पापसमाक्रान्ते देश' इत्युपपादितम् । तथापि तत्रैव कैश्चित शरैः सागरः संक्षोभित इति पूर्वं वर्णितत्वाद् 'विनाश्य'इत्यनेन संक्षोभ्येति विवक्षणीयमिति न कश्चिद् विरोधः ।

तथा च नात्र लक्षणावश्यम्भाव इति शुद्धसाध्यवसानलक्षणयोरङ्गाङ्गिभावसङ्करोदाहरणत्वेनैतत्पद्योदाहरणं तु चिन्त्यमेवेति ॥

अत्र काञ्चनपुत्रिकेत्यादौ कमनीयकान्तिगुणयोगात् सादृश्य-[1]गुणनिमित्ता गौणी लक्षणेति[2] तावदविवादम्। तत्र 'एषा' इति सर्वनाम्नः [3]एतत्ताविशिष्टसीतारूपविशेष्यनिष्ठत्वे विषयानिगरणाद् 'अग्नि[4]र्माणवकः' इतिवत् सारोपा स्यात्। [5]एतत्तामात्रानिष्ठत्वे तु विषयनिगरणाद् 'अयमग्निः' इतिवत् साध्यवसाना[6] स्यात्। अत्रान्यतरनिश्चायकाभावेन 'एषा' इत्येकस्मिन् सन्देह[7]ज्ञाने विषयतया सङ्कीर्यमाणत्वात् [8]सन्देहसङ्करः॥

३. एकलक्षकानुप्रवेशसङ्करः -

एकलक्षकानुप्रवेशेन यथा —

संवर्तावसरप्रसारिदिनकृत्सर्वस्वपाटच्चरो
दैत्यध्वान्तहरः प्रतापतपनो रामस्य कोऽप्युद्भवन्।

---

**नौका**

अत्र का लक्षणा ? कथं सन्देहः ? इत्याकाङ्क्षायामाह — 'अत्र काञ्च-नेत्यादिना 'इत्यर्थ' इत्यन्तेन। अयं च व्याख्यातप्राय एव॥

---

**मन्दरः**

अत्र सन्देहसङ्करं विवृणोति — अत्रेति। तावत् तावत्पर्यन्तम्। 'गौणी लक्षणा'इत्युक्तताविति यावत्। अविवादं विवादो नास्ति। सन्देह-सङ्कर इति। गौणसारोपगौणसाध्यवसानयोरिति भावः॥

---

पाठ. १, '°गुण°' - न पठ्यते - मधु° ख°। २. 'लक्षणा तावदिति' इत्येव-मधु°। ३. इदन्ता° - मधु° ख°। ४. 'अयमग्निर्माणवक' - मधु°। ५. इदन्ता° - मधु° ख°। ६. वा स्यात् - मन्दर°। ७. °ज्ञानविषय-तया - मधु°। 'इत्यर्थः' इत्यधिकम् - नौका° ख°॥

भूमिं द्यामपि कौशिकोत्सववतीं चक्रेऽद्भुतं वर्धयन्
तारानेतरि [1]नूतनां श्रियमधात् पौरस्त्यदेशे तमः ॥९॥

कोऽप्यलौकिकः। अलौकिकत्वमेवाह त्रिभिर्विशेषणैः। भूमिं [2]कौशिकोत्सववतीं [3]विश्वामित्रोन्नतयज्ञवतीम्। [4]द्यां स्वर्गं कौशिकोत्सववतीम् इन्द्रप्रहर्षवतीम्। प्रसिद्धतपनोदये[5] कौशिकानां

---

**नौका**

तृतीयमुदाहरति — एकलक्षकेति ॥

संवतंति। संवर्तावसरः प्रलयसमयः। संवर्तः प्रलयः[1] कल्पः' इत्यमरः (१.३.२२)। पाटच्चरः चोरः। हंतेति यावत् ॥९॥

इमं श्लोकं स्वयं क्वचिद् विवृणोति — कोऽपीत्यादिना। घूकानामिति 'महेन्द्र[2]गुग्गुलूलूकव्यालग्राहिषु कौशिकः' इत्यमर उभयत्रापि (३.३.१०)। तारानेतरीति। तारायास्तारानाम्न्याः स्त्रियो भर्तरि सुग्रीवे, ताराणां नक्षत्राणां नेतरि चन्द्रे च। 'तरणे चाथ तारा स्यात् सुग्रीवगुरुयोषितोः। कनीनिकर्क्षयोस्त्वेष (नद्योस्तारं तु रूप्यके)' इति रत्नमालायाम्।

---

**मन्दरः**

एकलक्षकानुप्रवेशसङ्करमुदाहरति — संवर्तेति। संवर्तावसरे प्रसारिणो दिनकृतः सूर्यस्य सम्बन्धिनः सर्वस्वस्य तेजःसमृद्धिरूपसमस्तधनस्य पाटच्चरश्चोरः। ततोऽप्यतितीक्ष्ण इत्यर्थः ॥९॥

---

पाठ. १. नूतनीं – मन्दर. ख.। २. न पठ्यते – मधु.। ३. °मित्रोत्सव° – मधु.। ४. 'स्वर्गं इन्द्रप्रहर्षवतीम्' इत्येव – ख., द्यामिन्द्रप्रहर्षवतीं च इत्येव – मधु.। ५. °नोदये च – मधु.।

---

१. प्रलयमेघः – मातृका। २. महेन्द्रे – मातृका।

[1]घूकानामुत्सवो नास्ति, अस्मिंस्तु न तथेति भावः। तारानेतरि सुग्रीवे चन्द्रे च। [2]प्रसिद्धतपनस्तारापतौ श्रियं हरति। अयं तु वर्धयति। प्रसिद्धसूर्यस्तु [3]पौरस्त्यदेशे पूर्वदिग्भागे तमो हरतिः [4]अयं तु रलयोरभेदात् पौलस्त्यदेशे[5] तत् करोतीति सर्वत्र श्लेषानुप्राणितौ व्यतिरेकविरोधाभासौ। [6]अत्र — 'पाटच्चरः [7]प्रतापनतपन' इति विषयनिगरणं विना [8]प्रतापे [9]चोरत्वारोपणात् सारोपेयं लक्षणा गौणी। सर्वस्वपदेन [10]चात्र [11]तत्तेजःसमृद्धिर्लक्ष्यते [12]तद्ग-

---

नौका

व्यतिरेकविरोधाभासाविति। प्रसिद्धतपनादुपमानात् प्रतापतपनस्योपमेयस्याधिक्यवर्णनात् व्यतिरेकालङ्कारः। कौशिकादिपदेषु प्रतीयमान[1]विरोधस्याभासीकरणात् विरोधाभासालङ्कार इत्यर्थः। तत्र का लक्षणेत्याशङ्क्य प्रथमं सारोपामाह — अत्र पाटच्चर इति। गौणी हरणादिरूपगुणसादृश्यनिमित्ता। साध्यवसानामाह — सर्वस्वपदेनेति। तद्गर्भीकारेण तस्याः समृद्धेः गर्भीकारेण क्रोडीकारेण, निगरणेनेति यावत्। ननु कथमनयोरेकपदे सङ्कर इत्यपेक्षायामाह — अनयोरिति। समस्तपदस्येत्यादि। इह 'समर्थः पदविधिः' (पा. २.१.१) इति समर्थयोः पदयोः समासः। सामर्थ्यं च द्विविधम् — व्यपेक्षालक्षणम्, एकार्थीभावलक्षणं चेति। तत्राद्यं वाक्यविष-

---

पाठ. १. उलूकाना° – मधु.। २. प्रकृततपनस्तु तारापतेः श्रियं – मधु.। ३. पौलस्त्यदेशे – मधु.। ४. अयं तु पौलस्त्यस्य रावणस्य देशे दक्षिणदिशि-मधु.। ५. '°देशे अत्र सर्वत्र' इत्येव। ६. न पठ्यते -- मधु.। ७. 'प्रताप' इत्येव -- मधु. ख.। ८. प्रतापस्य -- मधु.। ९. चौरत्व-निरूपणात् -- मधु.। १०. 'चात्र' न पठ्यते -- मधु.। ११. '°समृद्धिः' न पठ्यते -- मधु. ख.। १२. °गर्भकत्वेन -- मधु.।

---

१. प्रतीयमानाविरोध° -- मातृका.।

**र्भीकारेण प्रवृत्तत्वात् साध्यवसाना। अनयोर्भिन्नपदस्थयोरपि समस्तपदस्यैकत्वात् तद्गतत्वेन—एकलक्षकानुप्रवेशेनायं [4]सङ्करः॥**

---

नौका

यम्। द्वितीयं समासगोचरम्। एवं सति — '[1]सर्वस्वपाटच्चर' इति समासे '[2]सर्वस्व' 'पाटच्चर' पदयोः एकार्थीभावलक्षणसामर्थ्यात् [3]क्षीरनीरवदेकलीभावेनैकपदे[3] तत्रैकत्र समासपदे द्वयोः समावेशादेकलक्षकानुप्रवेशसङ्कर इत्यर्थः॥

---

मन्दरः

अलौकिकत्वमिति। 'विशेषणैः' उत्तरार्धस्थैरिति भावः। सर्वत्रेति। तद्गर्भीकारेणेति। तेजःसमृद्धिकवलनेनेत्यर्थः। अनयोर्लक्षणयोः गौणसारोपागौणसाध्यवसानयोः॥

---

टिप्प. ४. सङ्कर इति। अत्रेदं चिन्त्यम्। वस्तुतस्तु न तावदत्र प्रतापे चोरत्वारोपणम्; येनात्र गौणी सारोपा लक्षणा समुदाहरणीया स्यात्। अथापि युज्येत; यद्यत्र किमपि हृद्यं साधर्म्यमुपनिबद्धं स्यात्। यथात्र

बद्धा यदर्पणरसेन बिमर्दपूर्वमर्थान् कथं झटिति तान् प्रकृतान् न दद्युः।
चोरा इवातिमृदवो महतां कवीनामर्थान्तराण्यपि हठाद् वितरन्ति शब्दाः।
(भल्लट. श्लो. २)

न तथात्र किमपि हृद्यं साधर्म्यमुपनिबद्धमिति न चोरसादृश्यं विवक्षितम्। विवक्षितं तु प्रलयकालीनतपनसादृश्यम्। तत्सर्वस्वचौर्यकथनेन हि तत्सादृश्यस्य प्रतीतेः। तदुक्तं दण्डिना –

---

१-२. सर्वस्य -- मातृका। ३. °नैकपद्ये -- मातृका।

टिप्प. 'तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ।
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ।।
तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः ।।' (काव्यादर्शे २.६३,६५)

उक्तं चाप्यलङ्कारकौस्तुभे –

"बन्धुश्चोरः सुहृद् वादी कल्पः प्रख्यः समप्रभः ।
देशीयदेश्यहृद्याभसोदराद्या इवार्थकाः ।" (उपमाप्रकरणे)

इति । अत एव –

"संवर्तेति । संवर्तावसरे प्रसारिणो दिनकृतः सूर्यस्य सम्बन्धिनः 'सर्वस्वस्य तेजःसमृद्धिरूपसमस्तधनस्य पाटच्चरश्चोरः । ततोऽप्यतितीक्ष्ण इत्यर्थः" इति मन्दरकृतां व्याख्यानं सङ्गच्छते ।

यच्चात्र चोरत्वारोपं समर्थयद्भिः नौकाकृद्भिरभ्यधीयत –

"तत्र का लक्षणेत्याशङ्क्य प्रथमं सारोपामाह–अत्र पाटच्चर इति । गौणी हरणादिरूपगुणसादृश्यनिमित्ता" इति । तन्न; हरणादेरहृद्यत्वेन सादृश्य-प्रयोजकधर्मत्वाभावात् । सर्वस्वहरणयोगेन हि चोरत्वमेव प्रतापस्य सम्भव-तीति न तत्सादृश्यकल्पनापेक्षा । यथात्र –

"साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः ।
यदस्य दैत्या इव लुण्ठनाय काव्यार्थचौराः प्रगुणीभवन्ति ।"

(विक्रमाङ्क. १.११)

यथा वा –

"छंदावलिवृतैव नः सपदि काचिदेका व्रजं
प्रविश्य जरतीरिहानयतु घोरकर्मोद्धताः ।

अयं गुणनिधिस्तयोरुपरि ताभिरभ्यर्च्यता –
मुमाव्रतकुमारिका पटलचेलपाटच्चरः ।।" (उज्वल. सम्भो. ४९)

इति । चोरादयः शब्दाः पाचकपाठकादिवदवयवशक्तिमाश्रित्यैव प्रवृत्ता भवन्ति । न पुनश्चन्द्रादिपदवत् क्वचनार्थविशेषे रूढाः ।

तथा च प्रवृत्तिनिमित्तस्य हरणादिकस्य साधारणधर्मतामाश्रित्य सादृश्यप्रकल्पनमसमञ्जसमेव सत् सहृदयानामुद्वेजकमेव स्यात् ।

ननु दृष्टान्तदार्ष्टान्तिकयोः दिनकृदादिसादृश्यप्रतीत्यप्रतीतिकृतं महद् वैलक्षण्यं समुल्लसतीति चेन्, मैवम् । चोरसादृश्यप्रतीतेस्तूभयत्राप्यभावेन वैलक्षण्याभावात् दिनकृदादिसादृश्यप्रतीतेरत्राप्रयोजकत्वात् । तावन्मात्रस्यैवात्र विवक्षितत्वात् ।

ननु कृष्णादौ दुकूलादिचौर्यं सम्भवतीति न तत्र चोरत्वारोपोऽपेक्षितः । अत्र तु प्रतापे सर्वस्वहरणं न सम्भवतीति तत्त्वेनारोपो युक्त एवेति चेत्, न । स्वाभाविकपरतापनत्वादिधर्मसम्बन्ध एव तदीयसर्वस्वहरणत्वेनाध्यवसित इति । अत एवात्र दिनकृत्सादृश्यमर्थात् प्रतीयते । तथा चोक्तं काव्यादर्शव्याख्यायां प्रभाख्यायाम् –

"तत्र इवादयो वाचकाः । तत्रापि यथेवादिशब्दप्रयोगे सादृश्यं वाच्यम् । तत्रैव तेषां शक्तेः । तुल्यसदृशादिपदानां प्रयोगे साधर्म्यमार्थम् । तेषां सादृश्यवति शक्तेरिति बोध्यम् । 'स्पर्धते' इत्यादयो लक्षकाः । तेषां सादृश्ये शक्त्यभावात् । "तस्य मुष्णाति सौभाग्यम्" (काव्या. २.६३) इत्यादीनि वाक्यानि व्यञ्जकानि" इति । (काव्या. २.६५)

अन्यथा–विवक्षिताप्रतिपत्तिरविवक्षितप्रतिपत्तिश्च स्याताम् । यत्र तु हृद्यंसाधर्म्यमालम्ब्य चोरसादृश्यं विवक्षितम्; 'यथा–'चोरा इवातिमृदवो' (भल्लट. श्लो. २) इत्यादौ, तत्र तु भवेदेवेति निवेदितपूर्वमेव । तस्मान्नात्र चोरसादृश्यं सम्भवतीति ।

तथा चात्रस्था नौकाकृतो न श्रद्धेया एव ।

अतश्च सिद्धम्–यदत्र प्रतापे न चोरत्वारोपो, नापि गौणसारोपलक्षणावश्यम्भावो वेति ।

किञ्च–'प्रतापतपन' इत्यनेनैव प्रतापे तपनसादृश्यस्य प्रतिपत्तिर्गौणसारोपलक्षणया भवत्येवेति पुनस्तदर्थं 'संबर्ताबसर' इत्यादिविशेषणकल्पनमनर्थकमेव ।

ननु–'कोऽपि प्रतापतपन' इत्यभेदालीढव्यतिरेकमुखेन वैधर्म्यस्यैव प्रतिपत्तिर्भवति । तत्रैव कविसंरम्भविश्रान्तेः । अतस्तत्सादृश्यप्रतिपत्त्यर्थं 'संवर्ताबसर'इत्यादिविशेषणमुचितमेवेति चेत्, सत्यम् । तथापि तत्र गुणान्तरप्रयुक्तसादृश्यप्रत्ययो नेति दुर्वचत्वात् । उक्तं हि पण्डितराजैः –

टिप्प. "यद्गुणपुरस्कारेण यस्य यत्सादृश्यनिषेध उत्कर्षपर्यवसायी तस्य तद्गुणपुरस्कारेण तत्सादृश्यस्य अप्रतिष्ठानेऽपि गुणान्तरेण सादृश्यप्रत्ययस्य दुर्वारत्वात् । यदि च तत्सादृश्यसामान्यनिषेधो विवक्षितः स्यात्, गुणविशेषपुरस्कारोऽनर्थकः स्यात् । 'धनेनायमस्मादधिक' इत्युक्ते विद्यया रूपेण कुलेन च सम इति सर्वजनीनप्रत्ययात्' (रसगङ्गाधरे द्विती. व्यति.) इति । तथा च गुणान्तरप्रयुक्तसादृश्यप्रत्ययस्य दुरपह्नवत्वेन तदर्थमुपात्तं 'संवर्तावसर'इत्यादिविशेषणमनर्थकमेव ।

---

न च तपनस्य प्रलयकालीनत्वेन विलक्षणत्वेन च भेदः शङ्क्यः । वैलक्षाण्यस्य विशेषणत्रयप्रतिपादितवैधर्म्यमात्रकृतस्यैवात्र विवक्षितत्वात् । अन्यथा सर्वथैव सादृश्यनिषेधः पर्यवस्यतीति सिद्धान्तभङ्गप्रसङ्गात् । अत एव– "कोऽप्यलौकिकः । अलौकिकत्वमेवाह त्रिभिर्विशेषणैः" इत्यादि ग्रंथकृतां–विवरणं सङ्गच्छते ।

तथा च गुणान्तरप्रयुक्तं प्रसिद्धतपनसादृश्यं समुल्लसत्येवेति न तदर्थं पूर्वविशेषणावश्यम्भावः ।

न च प्रतापे चण्डतातिशयद्योतनाय तपने प्रलयकालीनत्वं विशेषितमिति विशेषसद्भावान्नानर्थक्यं तस्येति वाच्यम् । तावन्मात्रस्य प्रकृतेऽनुपयुक्तत्वात् । 'दैत्यध्वान्त'इत्यत्र उपमितविशेषणसमासयोः सांशयिकत्वापत्तेश्च । तथा हि –

'दैत्यध्वान्त' इत्यत्र 'संवर्तावसरे'त्यादिविशेषणावगतदिनकृत्सादृश्यानुरोधादुपमितसमासो वा 'प्रतापतपन' इति तपनाभेदारोपानुसारेण विशेषणसमासो वेति सहृदयानां धीरद्यापि न निश्चयमनुधावतीति ।

किञ्च एकत्रैव तत्सादृश्यतदभेदारोपौ हि निबद्धावलङ्कारजीवातुभूतचमत्कारविशेषानाधायकत्वेन महद् वैरस्यं रसिकचेतःसु समुदञ्चयतः ।

ननु 'सवंर्तावसर' इत्यादि विशेषणमस्तु, प्रतापे तपनत्वारोप एव निरस्यतामिति चेत्; न । उत्तरार्धासङ्गतेः । 'अद्भुत' पदवैयर्थ्यापत्तेश्च । प्रतापे तपनत्वारोपे हि 'तपनः सन्नप्ययं तद्विरुद्धमाचरत्यहो' 'इत्यद्भुतपदं' सामञ्जस्यमाधत्ते । व्यतिरेकस्यानुल्लासापत्तेश्च ।

तथा च 'संवर्तावसर' इत्यादिविशेषणमेव प्रकृतेऽनुपयुक्तमिति सिद्धम् ।

संसृष्टि :—

**संसृष्टिर्यथा —**

आम्रेडितं सुरतरोः प्रतिबिम्बमिन्दोर्
भेदः सुपर्वसुरभेर्विकृतिर्निधीनाम् ।

---

किञ्चात्र न विरोधाभासालङ्कारोऽपि । विरोधस्य प्रतीयमानत्वेऽपि अर्थान्तरप्रतिपत्त्या तत्समाधानेन स विरोधो न परिजिहीर्षित इति । यत्र च स विरोधः परिहृतो भवति, तत्रैव विरोधाभासालङ्कार इति नियमात् । यथोक्तं रसगङ्गाधरे –

"विरोधप्रतीत्यनन्तरं यत्रार्थान्तरप्रतिपत्त्या विरोधस्य समाधानं, तत्र विरोधाभास इष्यते" (रसगङ्गा. द्वितीय. विरोधा.) इति ।

उक्तं चापि ग्रंथकृता स्वयमेव –

'यत्रापाततो विरोधः प्रतीतः पर्यवसाने परिह्रियते, तत्र विरोधालङ्कारः' (सा. र. अर्था.) इति ।

यदि तपने समुपनिबद्धस्य स्वविरुद्धाचरणस्य तदनुकूलाचरणतां सम्पाद्य विरोधः परिह्रियेत, तदा तु भवेदेव विरोधाभासालङ्कारोऽत्र । न चैतदस्ति । अर्थान्तरप्रतिपत्तिस्तु श्लेषभित्तिकाभेदाध्यवसायमुखेन तपनवैधर्म्य-सम्पादनाय एवानुकूलेति न विरोधपरिहारार्था । व्यतिरेकजीवातुभूतवैधर्म्य एव कविसंरम्भविश्रान्तेर्दर्शनात् । तस्यैव चमत्कारविशेषाधायकत्वात् । तथापि यद्यत्र विरोधाभास इत्याग्रहस्तर्हि तादृशविबोधस्य सर्वत्रैव प्रतीयमानत्वेन रूपकादेरलङ्कारवर्गस्यापि तथात्वं प्रसज्येत ।

तथा च नात्र विरोधाभास इति निर्विवादम् ।

एवं च नात्र गौणसारोपक्षणावश्यम्भाव इति निवेदितपूर्वत्वेन पद्यमिदं गौणसारोपासाध्यवसानयोरेकलक्षकानुप्रवेशसङ्करविषयत्वेनोदाहृतं सन्न साम-ञ्जस्यमाधत्त इति ॥

द्वित्वं रवेः परिणतिः प्रसवायुधस्य
मूर्त्यन्तरं मुररिपोर्जयतीह रामः ॥१०॥

यथा वा —

शिष्टानां पारिजातो जडिमकठिनताव[1]क्रतास्पर्शशून्यो
दुष्टानां कालवह्निर्जलभयभसिताच्छादनातुच्छमूर्तिः ।

---

**नौका**

संसृष्टिमुदाहरति — संसृष्टिर्यथेति । आम्रेडितमिति । द्विस्त्रिरुक्तमित्यर्थः । 'आम्रेडितं द्विस्त्रिरुक्तम्' इत्यमरः (१.६.१२) । सुगममन्यत् ॥१०॥

उदाहरणान्तरमाह --- यथा वेति ॥

शिष्टानामिति । स्पर्शशून्यः सम्बन्धरहितः । कालवह्निः प्रलयानलः । जलभयेन [1]भसिताच्छादनेन च अतुच्छा अशून्या;

---

**मन्दरः**

अथ संसृष्टिमुदाहरति–आम्रेडितमिति । आम्रेडितम् आम्रेडनम् । पौनरुक्त्यमिति यावत् । सुपर्वसुरभेः कामधेनोः । 'सुरभिर्गवि च स्त्रियाम्' इत्यमरः (३.३.१३६) । अत्रौदार्यगुणयोगाद् रामः सुरतरोराम्रेडितमिति विषयारोप्ययोरनपह्नुतभेदयोः सामानाधिकरण्येनोपादानाद् गौणसारोपा । एवमुत्तरत्रापि तत्तद्गुणयोगाद् गौणसारोपात्वमूह्यम् । अत्र सप्तानां गौणसारोपाणां परस्परनैरपेक्ष्येणोपादानात् सजातीयसंसृष्टिः ॥१०॥

---

पाठ. °वक्रिम° – मधु. ।

---

१. भसिताबाधमेन च – मातृका ।

सीतायाः पञ्चबाणो हरनयनशिखा[1]प्लोषशून्यः प्रजानां
पूर्णेन्दुर्निष्कलङ्को जगति विजयते रामचन्द्रो महीन्द्रः ॥११॥

अत्रोभयत्रापि गौणसारोपाणां संसृष्टिः सजातीयानाम् ॥

---

**नौका**

नाशरहितेति यावत् । मूर्तिः स्वरूपं यस्य स तादृशः । शिखाप्लोषः [1]शिखया दहनम् । 'प्लुष दाहे' भावे घञ् ॥११॥

अत्र सजातीयसंसृष्टिमाह —- अत्रेति । उभयत्रापि उदाहरणद्वयेऽपि । 'अत्र सुरतरुप्रभृतिगुणयोगेन आम्रेडितादिशब्दानां विषयनिगरणं विना श्रीरामे प्रयोगात् सादृश्यनिमित्ता गौणसारोपा' इत्याशयेनाह — गौणसारोपाणामिति । सजातीयानामेषां निरपेक्षत्वात् संसृष्टिरित्यर्थः ॥

---

**मन्दरः**

उदाहरणान्तरमाह — शिष्टानामिति । जडिमकठिनतावक्रतानां जडत्वकाठिन्यकौटिल्यानां स्पर्शेन सम्बन्धेन शून्यः । जलभयेन भसिताच्छादनया भस्मावरणेन च तुच्छा रिक्ता मूर्तिः यस्य स तथोक्तः । अत्राप्यौदार्यगुणयोगाद् 'रामचन्द्रः पारिजात' इति गौणसारोपा । एवमुत्तरत्रापि तत्तद्गुणयोगाद् गौणसारोपात्वमूह्यम् । अत्र चतसृणां गौणसारोपाणां संसृष्टिः ॥११॥

अमुमेवार्थमाह — अत्रेति ॥

---

१. °शिखि° – मधु. ।

---

१. शिखाया – मातृका ।

सजातीयानां शुद्धसारोपाणां यथा —

> कल्याणकेलिकलना [1]कविपुङ्गवानां
> कौतूहलं किमपि कञ्जविलोचनानाम् ।
> [2]कीर्त्युद्गमः कमलबन्धुकुलोद्भवानां
> कस्योत्सवं न कुरुते भुवि कोसलेन्द्रः ॥१२॥

अत्र कल्याणादिपदानां तद्धेतौ रामे विषयनिगरणं विना सादृश्येतरकार्यकारणभावसम्बन्धनिमित्तप्रवृत्तत्वाच्छुद्धसारोपाणां सजातीयानामेव संसृष्टिः ॥

---

**नौका**

[1]शुद्धसारोपासंसृष्टिमाह — सजातीयेति ॥

कल्याणेति । कल्याणकेलिकलना मङ्गलविलासानामाकलनम् । कञ्जविलोचनानां स्त्रीणाम् । कमलबन्धुः सूर्यः । कोसलेन्द्रः श्रीरामः ॥१२॥

संसृष्टिमुपपादयति — [2]अत्रेत्यादिना ॥

---

**मन्दरः**

केवलशुद्धसारोपाणामुदाहरति — कल्याणेति । कल्याणानां केलयो लीलास्तासां कलना प्राप्तिः । शिष्टं स्पष्टम् ॥१२॥

सजातीयसंसृष्टिं विवृणोति — अत्रेति । तद्धेताविति । कल्याणादिहेताविल्यर्थः ॥

---

पाठ. १. कविकोविदानां – मधु. । २. कीर्त्युद्भवः – मधु. ।

---

१. °सारोपसंसृष्टि° – मातृका । २. त्रित्वेत्या° – मातृका ।

सजातीयविजातीयसंसृष्टिर्यथा —

सतां सुरतरूद्यानं चिन्तामणिमहीधरः
सम्पत् सुपर्वणां रामो विपद् विबुधवैरिणाम् ॥१३॥

एवमेव [1]सर्वत्र [2]सङ्करसंसृष्टी द्रष्टव्ये ॥

इति श्रीमत्त्रिभुवनपवित्राहरित( स- )गोत्रावतंसवाराणसी-वंशपद्माकरप्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्या-

---

**नौका**

सजातीयविजातीय[1]संसृष्टिमाह – सजातीयेत्यादिना ॥

सतामिति । सतां सत्पुरुषाणां सुरतरूद्यानं कल्पवृक्षवनम् । 'चिन्तामणिमहीधरः' चिन्तामण्याकारपर्वतश्चेत्यर्थः । विबुधवैरिणां राक्षसानाम् ॥१३॥

एवमन्यत्राप्युदाहरणीयमित्याह — एवमेवेति ॥

---

**मन्दरः**

सम्मेलनसंसृष्टिमुदाहरति – सतामिति । अत्राप्यौदार्यगुणयोगाद् रामः सुरतरूद्यानमिति चिन्तामणिमहीधर इति च गौणसारोपे । रामः सुपर्वणां सम्पदिति विबुधवैरिणां राक्षसानां विपदिति च तद्धेतौ तदुपचाराच्छुद्धसारोपे इति चतसृणां सङ्कलनात् सजातीयविजातीयसंसृष्टिः ॥१३॥

एवमेव भेदान्तराणि स्वयमूह्यानीत्याशयेनाह — एवमेवेति ॥

---

पाठ. १. न पठ्यते – मधु. । २. सङ्करसजातीयसंसृष्टी – मधु. ।

---

१. °संसृष्टमाह – मातृका ।

यपर्वतनाथसूरिपण्डितमण्डलेश्वरसूनुना श्रीयल्लमाम्बागर्भरत्नाकर-पारिजातेन निर्मलाचारपूतेन चतुर्दशविद्याविभूषणवता धर्मसङ्ख्यावता विरचिते श्रीमद्रघुकुलतिलकयशोघनसारसुरभिते साहित्यरत्नाकर -

नामन्यलङ्कारशास्त्रे

लक्षकशब्दार्थवृत्तिनिरूपणं नाम

तृतीयस्तरङ्गः ।

[1]आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मनः ।
त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरैरङ्गीकृताडम्बरः ।
तादृङ्निर्मलधर्मसूरिकविताकल्लोलिनीवेल्लनैः
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः ॥

---

नौका

इतीत्यादि व्याख्यातम् ॥

---

मन्दरः

इतीति ॥

आस्थामन्दिरमिति । तादृश्यो निर्मलाश्च या धर्मसूरिकवितास्ता एव कल्लोलिन्यो नद्यस्तासां वेल्लनैः मेलनैः ॥

---

पाठ. १. पद्यमिदं न पठ्यते – मधु. नौका. ।

[1]धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातः पर्वतेशाच्छुभगुणगणभूर्यल्लमाम्बासुगर्भः।
व्याख्याविख्यातकीर्तिर्विवरणगुरुवाक्साङ्ख्यमुख्यागमानां
तस्यालङ्कारशास्त्रे रघुपतिचरिते त्रित्वसङ्ख्यस्तरङ्गः ॥

---

नौका

अथ स्वकीर्त्यनुवृत्तये स्वप्रभाववर्णनपुरःसरं स्वग्रन्थस्याशिषं प्रयुङ्क्ते-धर्मान्तर्वाणीति। अन्तः वाणी येषां तेषु वर्यः श्रेष्ठः धर्म इत्यन्तर्वाणिवर्यः, धर्माख्यपण्डितश्रेष्ठ इत्यर्थः। 'अन्तर्वाणिस्तु शास्त्रवित्' इत्यमरः (३.१.९)। पर्वतेशात् पर्वतेशाख्यपण्डितात् सञ्जातः समुत्पन्नः। [1]यल्लमाम्बासुगर्भः यल्लमाम्बायाः सुपुत्रः। [2]'कुक्षिभ्रूणार्भका गर्भाः' इत्यमरः। विवरणं विवरणाख्यग्रन्थः, गुरुवाक् प्राभाकरं, साङ्ख्यं साङ्ख्यशास्त्रम्, एतानि मुख्यानि आदीनि येषामागमानामिति विवरणगुरुवाक्साङ्ख्यमुख्यागमानाम्। विवरणादिसकलग्रन्थानामित्यर्थः। एतेषां व्याख्याभिः व्याख्यानकरणैरित्यर्थः। विख्याता लोकप्रसिद्ध(द्धा)सर्वव्यापिनी कीर्तिर्यस्येति व्याख्याविख्यातकीर्तिः य एवंविधः तस्यालङ्कारशास्त्रे त्रित्वसङ्ख्यस्तरङ्गः तृतीयस्तरङ्गः, जीयादिति शेषः। शिष्टं स्पष्टम् ॥

---

मन्दरः

धर्मान्तर्वाणिवर्य इति। काव्यानां हंससन्देशादीनाम्। अलङ्काराणाम् अलङ्कारप्रबन्धानाम्। कृष्णास्तुतेः रविशतकस्य उन्नाटकानां कंसवधाद्युत्कृष्टनाटकानाम्। आदिशब्देन नरकध्वंसादिव्यायोगादीनां च प्रणेतुः निर्मातुः ॥

---

पाठ. १. पद्यमिदमित्थं पठ्यते –
"धर्मान्तर्वाणि वर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातो यल्लमाम्बाकृतसुकृतफलं पर्वतेशस्य भाग्यम्।
काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतु-
स्तस्यालङ्कारशास्त्रे रघुपतिचरितेऽयं तृतीयस्तरङ्गः॥" इति। मधु. मन्दर.

---

१. °सुगर्भः–मातृका। २. 'गर्भोऽप ... रकेऽन्नेग्नौ सुते पवनसंकटे' इत्यमरः–मातृका।

नौका

इति श्रीमत्त्रिभुवनपवित्रविचित्रचरित्रचर्लान्ववाय -
सुधासिन्धुसुधामयूखायमानश्रीमद्ब्रह्मान्तर्बाणि -
पौत्रस्य श्रीसूरमाम्बासहचरलक्ष्मणाख्यसूरि -
सूनोः श्रीमद्वेङ्कटसूरिणः कृतौ साहित्य -
रत्नाकरव्याख्याने नौकाख्याने
तृतीयो लक्षणातरङ्गः ॥

श्रीचर्लान्वयलक्ष्मणाख्यविबुधः श्रीसूरमाम्बापतिः
श्रीमद्वेङ्कटनामसूरिणममुं प्रासूत सूनुं च यम् ।
नौकां तेन कृतामिमां च विवृतिं साहित्यरत्नाकरे
तार्तीयीकतरङ्गके विहरतामालम्ब्य निर्मत्सरः ॥

मन्दरः

इति श्रीमल्लादिलक्ष्मणसूरिविरचिते साहित्यरत्नाकरव्याख्याने मन्दराख्याने
तृतीयः प्रस्थः ॥

इति तृतीयो लक्षणातरङ्गः ॥

# साहित्यरत्नाकरे

## चतुर्थः व्यञ्जनातरङ्गः

अथ [1]निष्प्रयोजनलक्षणाभावात् सर्वत्र प्रयोजनं वाच्यमित्यपेक्षायां तस्य व्यञ्जकशब्दैकगम्यत्वात् क्रमप्राप्तत्वाच्च व्यञ्जकं निरूपयति —

१. व्यञ्जकम् --

स व्यञ्जकोऽर्थं यः शब्दो व्यञ्जनेनैव बोधयेत् ।

---

**नौका**

एवं वाचकलक्षकशब्दौ निरूप्य व्यञ्जकशब्दनिरूपणाय सङ्गतिं प्रदर्शयति — अथेत्यादिना । निष्प्रयोजनेति । 'रूढितोऽथ प्रयोजनात्' (का.प्र.२.१२) इति प्रयोजनस्य लक्षणाबीजत्वकथनादिति भावः । तस्य प्रयोजनस्य । निरूपयतीति । तथा चावसरसङ्गत्या तन्निरूपणमिति भावः । 'प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तौ (सत्याम्) [1]अवश्यवक्तव्यत्वमवसरः' इत्यभियुक्ताः ॥

---

**मन्दरः**

एवं लक्ष्यलक्षकतद्वृत्तीर्निरूप्यात्र व्यङ्ग्यव्यञ्जकतद्वृत्तिनिरूपणाय सङ्गतिं दर्शयति — अथेति । निष्प्रयोजनायाः प्रयोजनशून्यायाः लक्षणाया अभावाद्धेतोः । सर्वत्र लक्षणास्विति शेषः । तस्य प्रयोजनस्य । क्रमप्राप्तत्वाच्च । लक्षकानन्तर्यादिति भावः ॥

---

पाठ. १. निष्प्रयोजने लक्षणाया अभावात् - मधु. ।

---

[1] अशक्यवक्तव्यत्वमवसरम् - मातृका ।

२. व्यञ्जना --

अन्वितेषु पदार्थेषु [1]योऽस्यार्थान्तरगोचरः।
वाक्यार्थोपस्क्रियायै स व्यापारो व्यञ्जनं भवेत्॥

व्यञ्जनव्यापारवान् शब्दो व्यञ्जकः। पदार्थेष्वन्वितेषु [2]वाक्यार्थोपस्कारार्थमर्थान्तरविषयः शब्दव्यापारो व्यञ्जनेत्युच्यते॥

---

**नौका**

व्यञ्जकशब्दस्य लक्षणमाह — स व्यञ्जक इति। ननु 'व्यञ्जनेनैव' इत्यत्र किं नाम व्यञ्जनम्? तत्राह — अन्वितेष्विति। अस्य शब्दस्य। वाक्यार्थस्योपस्क्रियायै शोभार्थम्। 'व्यञ्जनवृत्त्यार्थबोधकः शब्दो व्यञ्जकः' इत्याशयेन व्यञ्जकलक्षणं व्याचष्टे — पदार्थेष्विति। पदार्थेषु पदैरन्वितेषु अभिहितेषु आकाङ्क्षादिवशान्मिथःसम्बद्धेषु सत्सु समन्वयशक्त्या वाक्यार्थः प्रतीयत इत्यर्थः। यद्वा अर्थप्रकरणादिना प्राकरणिकार्थे[1] पर्यवसिते त्वित्यर्थः। तेन अभिधान्वयशक्त्योः, सति सम्भवे लक्षणायाः, या अनन्तरभाविनी, सा व्यञ्जनव्यापार इति सूचितम्। लक्षणा तु समन्वयशक्तिसमर्पितान्वयविधुरीकरण(प्रवृत्तत्वा)दन्वयशक्त्यनन्तरभाविन्येवेत्यवोचन्नभिनवगुप्तपादाः। वाक्यार्थस्य काव्यशरीरभूतस्य उपस्कारार्थं शोभार्थम्। व्यङ्ग्यरहितस्य काव्यस्यानात्मकशरीरवदचारुत्वादिति भावः। [2]वाच्यलक्ष्याभ्यामतिरिक्तोऽर्थो ऽर्थान्तरं[3] व्यङ्ग्यं तद्गोचरः शब्दव्यापारो व्यञ्जनव्यापार इत्यर्थः। अत्र शब्दग्रहणमर्थस्याप्युपलक्षणम्। अज्ञातार्थस्य शब्दस्य विशिष्टशब्देनाभिधेयस्य चार्थस्य व्यञ्जकत्वायोगेनोभयव्यापारत्वाङ्गीकारात्। किन्तु शब्दार्थशक्तिमूलयोः यथायोगमेकस्य प्राधान्यमितरस्य सहकारित्वम्, उभयशक्तिमूले च तत्तदंशयोरेवमेव विभागो द्रष्टव्यः॥

---

पाठ. १. योऽन्योऽर्था° – मधु.। २. °र्थोपस्क्रियार्थ° – मधु.।

---

१. °कार्थापर्यव° – मातृका। २. वाक्य° – मातृका। ३. °र्थान्तरैः – मातृका।

**व्यञ्जनायास्त्रैविध्यम् --**

**[1]स त्रिविधः - शब्दोर्थोभयशक्तिमूलत्वेन ॥**

---

**नौका**

व्यञ्जनव्यापारं विभजते – स इति । व्यापाराभिप्रायेण पुंलिङ्गनिर्देशः । शब्दशक्तिमूलकोऽर्थशक्तिमूलक उभयशक्तिमूलकश्चेति त्रिप्रकार इत्यर्थः । अत्रानेकार्थस्य शब्दस्यार्थप्रकरणादिभिःप्रकृतार्थवाचकत्वे विभाविते सति तत्प्रतीतिर्यत्प्रसादबललभ्या, [1]स शब्दशक्तिमूल[2]:, वक्तृबोद्धव्यादिवशात् सहृदयानामर्थान्तरप्रतीतिहेतुत्वात् वाच्यार्थव्यापारोऽर्थशक्तिमूल[3]:; [4]उभयसम्बन्धहेतुस्तूभयशक्तिमूल[5] इति विवेकः । शब्दशक्तिमूलं व्यञ्जनं विभजते – शब्दशक्तीति । द्वैविध्यमेवाह — अभिधेति ॥

---

**मन्दरः**

स इति । व्यञ्जनेनैवेति । वृत्त्यन्तरव्यवच्छेदोऽवधारणार्थः । ननु किमिदं व्यञ्जनम् ? यद्योगाद् शब्दस्य व्यञ्जकतेत्यपेक्षायां व्यञ्जनलक्षणमाह- अन्वितेष्विति 'अन्वितेषु पदार्थे'ष्वित्यनेन अभिधालक्षणाव्यावृत्तिः । 'अर्थान्तरगोचर' इत्यनेन तात्पर्यव्यवच्छेदः । 'वाक्यार्थोपस्क्रियाया' इत्यनेन आवश्यकत्वम् । व्यञ्जकलक्षणं व्याकरोति – व्यञ्जनव्यापारवानिति । व्यञ्जनलक्षणं व्याकरोति – पदार्थेष्विति । वाक्यार्थस्य उपस्कारार्थं शोभार्थम् । 'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्' (का.प्र. १.२), इति 'अव्यङ्ग्यमधमं स्मृतम्' (का.प्र. १.४) इति च मम्मटपादोक्तेस्तेन तदुपस्कारः समुचित एवेति भावः ॥

तं विभजते — स इति । त्रैविध्यं दर्शयति — शब्देति ॥

---

पाठ. १. स च – मधु. ।

---

१. सा–मातृका । २, ३, ५. °मूला – मातृका । ४. °हेतूभय–मातृका ।

शब्दशक्तिमूलाया द्वैविध्यम् --

शब्दशक्तिमूलो द्विविधः – अभिधामूलो लक्षणामूलश्चेति ॥

लक्षणामूला व्यञ्जना --

तत्र यः पूर्वोदाहृतप्रयोजनलक्षणानां प्रयोजनप्रतीतिकृद् व्यापारः स लक्षणामूलो व्यञ्जनव्यापारः ॥

व्यञ्जनाया व्यवस्थापनम् --

[1]इदं तावदिह विचार्यते — 'गङ्गायां घोषः' इत्यादौ तीरगतात्यन्तपावनत्वादिकं [2]प्रयोजनत्वेन प्रतीयते। तत्र शब्दान्वयव्यतिरेकानुविधायितया [3]तत्प्रतीतिः शाब्दीत्यवश्यमाश्रयणीयम्।

---

नौका

तत्र शब्दशक्तिमूलकयोर्द्वयोर्मध्ये ॥

ननु इदं व्यञ्जनव्यापाराश्रयणमयुक्तम्। अर्थान्तरप्रतीतेरभिधादिव्यापारेणापि सम्भवादित्याशङ्क्य अभिधादीनां बाधात् तत्र व्यञ्जनमेव प्रगल्भत इति वक्तुं प्रतिजानीते।

---

मन्दरः

तत्रेति। तयोर्मध्ये। लक्षणा मूलं यस्य स तथोक्तः ॥

ननु शास्त्रेषु वाचकलक्षकयोरेवाभ्युपगमादभिधाद्यन्यतमव्यापारेण प्रयोजनप्रतीतिरस्तु, किं व्यञ्जनेनेत्याशङ्क्य — तस्य व्यापारान्तरानिर्वर्तनीयत्वात् तदावश्यकत्वं प्रदर्शयितुं प्रतिजानीते।

---

पा०. १. इदमत्र विचार्यते – मधु.। २. प्रयोजनं तावत् – मन्दर. ख.। ३. तत्प्रतिपत्तिः – मन्दर. ख.।

न *हि यं कञ्चन व्यापारमनवलम्ब्य शब्दो[1] बोधयितुमीष्टे। तत्र किमभिधया [2]बोधयति ? लक्षणया वा ? किं वा तात्पर्येण ॥

**प्रयोजनबोध्यत्वे अभिधाया निरास :—**

न तावदभिधया [3]बोधयति। तस्याः [4]सङ्केतितार्थैकविषयत्वात्। न हि गङ्गादिपदानां पावनत्वादौ सङ्केतो दृष्टचरः ॥

---

**नौका**

इदं तावदिति। नन्वर्थान्तरप्रतीतेः शब्दजन्यत्वे हि तद्व्यापारविचारणा युज्यते। तदेव नास्तीत्याशङ्क्य — अर्थान्तरप्रतीतेः शब्दजन्यत्वं प्रथममुपपादयति — 'गङ्गायां घोषः' इत्यादावित्यादिना। तत्प्रतीतिः प्रयोजनप्रतीतिः। शाब्दी शब्दजन्या। नन्वास्तां शाब्दत्वम्; ततः किमत आह — न च यं कञ्चनेति। [1]ईष्ट इति। तथा च शब्दस्य कञ्चन व्यापारोऽङ्गीकरणीय इति भावः। ननु स च व्यापारोऽभिधा लक्षणा तात्पर्यं वा स्यात्, किमप्रसिद्धेन व्यञ्जनव्यापारेणेत्याशङ्क्य तान् विकल्प्य क्रमेण दूषयति — तत्र किमित्यादिना ॥

---

**मन्दरः**

इदं तावदिति। 'इदं तावत्' व्यञ्जनमन्तरेण प्रयोजनप्रतिपादनमेवेत्यर्थः। गङ्गायामिति। प्रतीयते तावत् प्रतीयत एव। भवतु किं तत इत्यत्राह -- तत्रेति। तत्र 'गङ्गायां घोषः' इत्यादौ। शब्देति। 'तादृशशब्दप्रयोगे प्रयोजनप्रतीतिः', 'तदभावे तदभावः' इत्यन्वयव्यतिरेकाभ्यां शब्दानुसारितयेत्यर्थः। तत्प्रतिपत्तिः प्रयोजनप्रतीतिः शाब्दी शब्दसम्बन्धिनी। अस्तु किं तत इत्यत्राह – न हीति। किन्तु अवलम्ब्य बोधयितुमीष्ट इत्यर्थः। तत्र तेषु व्यापारेषु ॥

---

पाठ. १. शब्दार्थ – मधु.। २. न पठचते – मधु.। * 'च' – नौका – मधु.ख.
३. न पठचते – मधु.। ४. '°एक°' – न पठचते – मधु. ख.।

---

१. इष्ट – मातृका।

लक्षणाया अपि तद्बोध्यत्वनिरासः

नापि लक्षणया। मुख्यार्थबाधाद्यभावात्। न हि तटं मुख्यार्थः, न [1]वा तस्य बाधः न [2]नापि तस्यात्यन्तपावनत्वादिना सम्बन्धः, नापि [3]प्रयोजनलक्ष्यतायां किञ्चित् प्रयोजनम्। स्वस्यैव

---

नौका

तत्राभिधां प्रतिक्षिपति — न तावदिति। सङ्केतितार्थेति तथा चार्थान्तरे सङ्केताभावात्, न, न तत्राभिधा प्रगल्भत इति भावः। एतदेवाह—न हि गङ्गादीति॥

लक्षणां वारयति — नापि लक्षणयेति। तत्र सम्बन्धानुपपत्तिप्रयोजनानामभावादिति हेतुमाह — मुख्यार्थेति। एतदेव स्फुटयति — न हि तटमित्यादिना। नापि प्रयोजनलक्षणायामिति। प्रयोजने लक्षणा तस्याम्। प्रयोजनस्य [1]लक्ष्यत्वमिति यावत्। प्रयोजनलक्ष्यतायामित्येव क्वचित् पाठः।

---

मन्दरः

न तावदिति। तत्र हेतुं प्रतिपादयति — तस्या इति। असङ्केतिते अर्थान्तरे तदप्रवृत्तेरिति भावः। तामेव विवृणोति — न हीति। तस्मान्न तावदभिधया बोधयतीति पूर्वेण सम्बन्धः॥

नापीति। बोधयतीत्यनुवर्तते। लक्षणयापि न बोधयतीत्यन्वयः। कुत इत्यत्राह — मुख्यार्थेति। अत्र – 'आदि'शब्देन सम्बन्धप्रयोजने गृह्येते। तदभावमेवोपपादयति — न हीति। अत्र गङ्गापदस्येति प्रकरणाल्लभ्यते। तटं मुख्यार्थश्चेत् पावनत्वादिर्लक्ष्यार्थो भवेदिति भावः। 'तुष्यतु

---

पा. १. पठ्यते – मधु.। २. न हि – मधु.। ३. प्रयोजनस्य लक्षणायाम् – मधु., प्रयोजनलक्षणायाम् – नौका.।

---

१. लक्षत्व° – मातृका।

**प्रयोजनत्वे [1]आत्माश्रयता। अन्यस्य प्रयोजनत्वे तस्यापि लक्षणामात्रशरणतया प्रयोजनान्तरावश्यम्भावेन[2] प्राचीनप्रयोजनापेक्षायां परस्पराश्रयता। अन्यापेक्षणे तु तस्यापि लक्ष्यत्वेन प्रथमापेक्षणे चक्रकापत्तिः। द्वितीयापेक्षणेऽन्योन्याश्रयता। तृतीयापेक्षणे[3]**

---

नौका

ननु स्वस्यैव प्रयोजनत्वं किं न स्यादत आह – स्वस्यैवेति। स्वस्मिन् स्वप्रवेश आत्माश्रयः, अव्यवहितस्वापेक्षणं स इति केचित्। नन्वेतद्दोषवारणाय स्वान्यस्यैव प्रयोजनत्वं स्यात्, अतस्तद् दूषयति — अन्यस्येति। लक्षणामात्रेति। प्रयोजनमात्रस्य [1]लक्ष्यत्वादिति भावः। अवश्यम्भावे सतीति सतिसप्तमी। प्राचीनप्रयोजनं प्राथमिकं पूर्वं प्रयोजनम्। परस्परा-

---

मन्दरः

दुर्जनः' इति न्यायेन गङ्गापदस्य तटं मुख्यार्थोऽप्यस्तु। तस्य तटरूपमुख्यार्थस्य बाधः न वा नैव। घोषाधिकरणत्वसिद्धेरिति भावः। 'वा स्याद् विकल्पोपमयोरेवार्थे च समुच्चये' इति रत्नमाला (पं. १४८)। अस्तु कश्चिद् बाधोऽपि। नापीति। तस्य तटरूपमुख्यार्थस्य अत्यन्तपावनत्वादिना तद्रूपलक्ष्यार्थेन सम्बन्धः' अविनाभावसम्बन्धोऽपि न। अस्तु यः कश्चित् सम्बन्धोऽपि। नापीति। प्रयोजनस्य पावनत्वादिरूपस्य लक्ष्यतायां किञ्चित् प्रयोजनमपि नास्ति। अस्तु स्वयमेव प्रयोजनमपीत्याशङ्क्य लक्ष्यभूतस्य स्वस्य प्रयोजनत्वं न सम्भवतीत्याह — स्वस्यैवेति। स्वस्य लक्ष्यभूतस्य पावनत्वादेरेव। आत्माश्रयता आत्माश्रयाख्यदोषापत्तिः। तर्हि प्रयोजनान्तरं प्रतिपाद्यत-

---

पाठः १. आत्माश्रयात् – मधु.। २. °वश्यम्भावे – मधु. नौका. ३. °पेक्षणे तु – मधु.।

---

१. लक्षत्वा° – मातृका।

**आत्माश्रयता। चतुर्थाकाङ्क्षणे[1] तु तस्यापि प्रयोजनान्तराकाङ्क्षित्वं नियतमित्युत्तरोत्तरमाकाङ्क्षायाः क्वचिदप्यविश्रान्तेः प्रथमप्रयोजनप्रतीतिरेव न स्यादिति ज्ञप्तिप्रतिबन्धिकाऽनवस्था॥**

---

नौका

श्रयतेति। अव्यवहितान्यान्यापेक्षणं परस्पराश्रयः। अथैतद्दोषपरिहारायास्य प्रयोजनापेक्षणे चक्रकापत्तिरित्याह — अन्यापेक्षणे त्विति। चक्रकापत्तिरिति। एकद्वित्र्यादिव्यवहितस्वापेक्षणं चक्रकम्। चतुर्थप्रयोजनापेक्षणे अ(न)वस्थेत्याह — चतुर्थेत्यादिना। अनवस्थेति। न चेष्टापत्तिः। 'मूलक्षयकरीं प्राहुरनवस्थां हि दूषणम्' इत्येतन्न्यायाद् अङ्गीकार्यत्वादिति भाव॥

---

मन्दरः

मित्याह — अन्यस्येति। लक्षणामात्रेति। प्रयोजनलक्ष्यतावशाल्लक्षणैकाश्रयेत्यर्थः। प्राचीनप्रयोजनस्य पावनत्वादिरूपस्य अपेक्षायामाकाङ्क्षायाम्। अयं भावः – 'लक्ष्यभूतस्यान्यस्य पावनत्वादिः पावनत्वादिरूपस्य लक्ष्यस्यान्यत् प्रयोजनमित्यन्योन्याश्रयः। तर्हि ततोऽप्यन्यस्य प्रयोजनत्वं प्रतिपाद्यतामित्याशङ्क्य – नोपपद्यत इत्याह — अन्येति। अन्यस्यापेक्षणे प्रयोजनत्वापेक्षायां तु। प्रथमस्य पावनत्वादेरपेक्षणे प्रयोजनत्वापेक्षायां चक्रकापत्तिः चक्रकाख्यदोषापत्तिः। तृतीयस्य द्वितीयमतिक्रम्य प्रथमाकाङ्क्षणे तस्यापि तदंशत्वेन नाभिस्थानीयं द्वितीयं चक्रभ्रमणेनातीत्य तृतीयाकाङ्क्षित्वेन चक्रस्यैवाचक्रकम्। तर्हि द्वितीयमेवोपेक्ष्यतामित्याशङ्क्य तत्रापि दोषापत्तिमतीत्याह – द्वितीयेति। अन्योन्याश्रयता। अव्यवहितयोस्तयोस्तथाविधत्वेन परस्पराकाङ्क्षित्वादन्योन्याश्रयाख्यदोषापत्तिः स्यादिति भावः। तर्हि स्यैव प्रयोजनत्वमप्यस्त्वित्यत्राह–तृतीयेति। अयं भावः—पावनत्वापेक्षया तीयस्य प्रयोजनलक्षणावशाल्लक्ष्यस्य स्वस्यैव प्रयोजनत्वापेक्षायामेकस्यैव

---

ठ. १. °पक्षणे – मधु.।

ननु गङ्गापदेन सप्रयोजनमेव तटं [1]लक्ष्यतामिति चेत्, मैवम्। प्रमाणविषयातिलङ्घित्वात् प्रयोजनस्य। प्रमाणस्य हि

---

**नौका**

ननु तर्हि पावनत्वादिधर्मविशिष्टमेव तटं लक्ष्यताम्, किमन्तर्गडुना व्यञ्जनव्यापारेण कल्पनागौरवकलङ्कितेनेति शङ्कते – ननु गङ्गापदेनेति। परिहरति – मैवमिति। कुत इत्यत आह – प्रमाणेति। भावसाधने प्रमितिः प्रमाणं प्रमेत्यर्थः। [1]तद्विषयातिलङ्घित्वात् [2]तद्विषयभिन्नत्वनियमात् प्रयोजन-स्येत्यर्थः। सर्वत्र हि ज्ञानस्यान्यो विषयः अन्यच्च फलापरपर्यायं प्रयोजनमि-त्यविवादम्। सप्रयोजनस्य तटादेर्लक्ष्यत्वे प्रयोजनस्यापि लक्ष्यत्वमायाति। तच्च विरुद्धम्। लक्ष्यत्वप्रयोजनत्वयोः भिन्नविषयकत्वेनैकत्रासम्भवादिति भावः। ननु कुत्रेदं दृष्टम्? तत्राह – प्रमाणस्य हीति। ज्ञानस्येत्यर्थ।

---

**मन्दरः**

लक्ष्यत्वं प्रयोजनत्वं चेत्यात्माश्रयाख्यदोषापत्तिरिति। तर्हि चतुर्थमन्यत् प्रयोजनमपेक्ष्यतामित्यत्राह – चतुर्थेति। चतुर्थस्याकाङ्क्षणे प्रयोजनत्वेन-काङ्क्षायां तु। 'तस्यापि' – अत्र लक्ष्यत्वेनेत्यनुवर्तते। प्रथमप्रयोजनस्य पावनत्वादेः प्रतीतिरेव न स्यात् मिथ्याप्रयोजनपरम्परासम्पर्कवशात् सत्यप्रयो जनप्रतीतिस्तिरोहिता भवेदिति, ज्ञप्तेः प्रथमप्रयोजनज्ञानस्य प्रतिबन्धिका प्रति बन्धकारिणी अनवस्था मूलक्षयकारिण्यनवस्थाख्यदोषापत्तिः॥

तर्हि लक्षणयैव पावनत्वादिविशिष्टतटप्रतीतिर्भवतु, किं व्यञ्जनेनेत्याशये-नाह - नन्विति। लक्ष्यतां लक्षणया प्रतिपाद्यताम्। किमप्रसिद्धेन व्यञ्जने-नेति भावः। परिहरति–मैवमिति। विशिष्टलक्षणा नाङ्गीकार्येत्यर्थः। कुत

---

पाठ. १. 'इति चेत्' न पठ्यते – मन्दर.।

---

१. तद्विषयीति – मातृका। २. °भिन्नत्वे प्रयोजनेनेत्यर्थः – मातृका।

प्रत्यक्षादेर्घटादिकं विषयः। फलं तु ज्ञाततादिकम्। तथा चायं प्रयोगः — 'गङ्गायां घोषः' इत्यादौ पावनत्वादिकं [1]न विषयज्ञानगोचरं फलत्वात् ज्ञाततादिवत् इति ॥

---

**नौका**

प्रत्यक्षादेः [1]प्रत्यक्षाद्यात्मकस्य। फलं तु प्रयोजनं तु। ज्ञातता नाम प्राकट्यापरपर्यायो धर्मविशेषः। [2]स च ज्ञानजन्यो ज्ञानानुमापको[3] विषयजन्यो वा, यत्प्रसादात् ज्ञातो [4]घट इति विशिष्टव्यवहारो जायत इति ज्ञाततावादिनः। प्रयोजनस्य ज्ञानविषयभिन्नत्वे अनुमानं दर्शयति – तथा चायमिति। प्रयोगः अनुमानप्रयोगः। ज्ञाततावदिति। अन्यथा ज्ञाततया अपि घटादिज्ञानगोचरत्वप्रसङ्गः। प्रयोजनस्यापि लक्ष्यत्वे तस्यापि प्रयोजनान्तरापेक्षेति पूर्वोक्तानवस्थादिकं स्यादिति। तथा च बाधकस्तर्क इति भावः ॥

---

**मन्दरः**

अत्राह – प्रमाणेति। प्रमाणविषयाभ्यामतिलङ्घित्वात्। फलापरपर्यायस्य प्रयोजनस्य प्रमाणविषयभिन्नत्वनियमात् पार्थक्येन भाव्यमिति भावः। तदेव स्फुटयति – प्रमाणस्येति। 'ज्ञाततादिकम्' संवित्तिरादिशब्दार्थः। फलितार्थं प्रयोगेन प्रतिपादयति – तथा चेति। प्रयोगोऽनुमानरचना। गङ्गायामिति। अत्र पावनत्वादिकं पक्षः। विषयज्ञानगोचरत्वाभावः साध्यः। फलत्वं हेतुः। यत्र फलत्वं तत्र विषयज्ञानगोचरत्वाभाव इति व्याप्तिः। ज्ञाततावदिति दृष्टान्तः। ज्ञातता प्राकट्यम्। ततश्च –

'प्रयोजनेन सहितं लक्षणीयं न युज्यते।
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्॥
विशिष्टे लक्षणा नैवम्' (का. प्र. २.१७.१८)

इति काव्यप्रकाशकारवचनाच्च लक्षणायाः प्रयोजनप्रतिपादनाक्षमत्वान्नापि लक्षणयेति पूर्वेण सम्बन्धः ॥

---

पाठ. 'न गोचरं' इत्येव – मधु.।

---

१. °द्यात्मकश्च – मातृका। २. न च – मातृका। ३. माषकौ – मातृका। ४. पाल इति – मातृका।

प्रयोजनस्य तात्पर्यवृत्तिबोध्यत्वनिरासः --

**नापि [1]तात्पर्यवृत्तिगम्यता। पदार्थावगमसमनन्तरभाविनी समन्वयशक्तिस्तात्पर्यं नाम वृत्तिरित्यलङ्कारसर्वस्व*सञ्जीविनी[2]कारादयः [1]न च पावनत्वादिरन्योन्यान्वयरूपः॥**

---

नौका

किं वा तात्पर्येणेति तृतीयविकल्पं दूषयति- नापि [1]तात्पर्यवृत्तिगम्यतेति। अनुवाद्यानामर्थानां [2]विधेयार्थपरत्वे तात्पर्यं नाम वृत्त्यन्तरं सर्वैरङ्गीकृतम्। तत्र सार्थकं पुनर्वचनमनुवादः, सोऽर्थः [3]प्रयोजनं येषां ते अनुवाद्याः तेषामि त्यर्थः। तच्च प्रयोजनमप्राप्तस्यार्थस्य प्राप्तसम्बन्धितया [4]वाक्यान्तरप्राप्तानुवादस्य तदेव तात्पर्यम्। यथा – 'दध्ना जुहोति' इत्यत्र 'अग्निहोत्रं जुहोति'इ वाक्यान्तरप्राप्तो यो होमः तदनुवादस्य दधिहोमसम्बन्धविधानार्थं तदे तात्पर्यम्। लोकेऽपि – 'उमां स पश्यन् ऋजुनैव चक्षुषा प्रचक्रमे वक्तुमनु ज्झितक्रमः (कुमा. ५.३२) इत्यत्र यद् दर्शनं तच्चक्षुषेति व्याप्त्या प्राप्तस् चक्षुषोऽनुवादो ऋजुनेत्यार्जवरूपविशेषणार्थः। न च विधानार्थमनुवादो न विशेषणार्थमिति शङ्क्यम्। तद्विशेषणमार्जवमेवात्र विधेयम्। विशेष्यस्य चक्षुष प्राप्तत्वात्। यथा–लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यत्र लोहितोष्णीषत्वं

---

मन्दरः

ततः किं वा तात्पर्येणेति विकल्पं परिहरति – नापीति। पावनत्वादिप्रयोजनस्य तात्पर्यबोध्यतापि न सम्भवतीत्यर्थः। ननु तात्पर्यस्वरूपपरिज्ञानमन्तरेण तदबोध्यता न बुध्यत इत्याशङ्क्य तत्स्वरूपं प्रतिपादयति—

---

पाठ. १. तात्पर्यगम्यता – इत्येव – मन्दर.। २. °कारः इत्येव – मधु. ख.।
* सञ्जीवनकारा° – नौका. मधु.।

---

१. गम्येति – मातृका। २. °परत्वं – मातृका। ३. प्रयोजनो – मातृका। ४. ताव(द)र्थ्य – मातृका।

तात्पर्यस्य वृत्त्यन्तरत्वनिरासः –

किञ्च तात्पर्यं नाम वृत्त्यन्तरं न सम्भवति[1]। वृत्तित्रयानुस्यूतस्य तस्य वृत्त्यन्तरत्वानुपपत्तेः। क्लृप्तेनैव वृत्तित्रयेण सकल-

---

नौका

तद्वत्। तथा च विधेया(र्थ)पर्यवसितत्वं तात्पर्यम्। एतदुक्तं भवति—पदार्थज्ञानानन्तरं तेषामाकाङ्क्षादिवशादन्वये पदार्थातिरिक्तवाक्यार्थरूपो विशेषात्मा तात्पर्यार्थो यद्बलात् समुल्लसति, तत् तात्पर्याख्यं वृत्त्यन्तरमस्तीति। तदेतदभिसन्धाय सञ्जीवनीकारमतेन तात्पर्यलक्षणमाह – [1]पदार्थावगमेति। एतेन तात्पर्यार्थस्य क्वचिद् व्यञ्जकत्वमपीष्टम् इत्यवधेयम्। अत एव तात्पर्यं निरूप्योक्तं काव्यप्रकाशे 'सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते' (२.८) इति। अस्त्वेवं प्रस्तुते किमायातं तत्राह – न च पावनत्वादिरिति। एवं च पावनत्वादेः प्रयोजनस्य अन्वयरूपत्वाभावेन तात्पर्यार्थत्वासम्भवात् न [2]तात्पर्यगम्यतेति भावः॥

वस्तुतस्तु कैश्चित् तात्पर्याख्यं वृत्त्यन्तरमेव नाभ्युपगतमिति तद्गम्यत्वं प्रयोजनस्य दूरापास्तमेवेति तदनङ्गीकर्तॄणां मतमाह – किं (च) तात्पर्य-

---

मन्दरः

पदार्थेति। आकाङ्क्षायोग्यतासन्निधिवशात् समन्वये सति पदार्थज्ञानानन्तरभाविनी समन्वयशक्तिः पदार्थसमूहसङ्घटनाशक्तिरेव तात्पर्यम्। अस्तु, किं तत इत्यत्राह – न चेति। अयं भावः – प्रतीयमानस्य पावनत्वादेः अन्योन्यान्वयरूपत्वाभावेनातात्पर्यार्थत्वान्न तात्पर्यगम्यतेति॥

---

पाठ. १. सम्भवतीति – मधु.।

---

१. परार्था° – मातृका। २. तात्पर्यं गम्यतेति – मातृका।

**व्यवहारोपपत्तौ बाह्येन्द्रियसहकारिणो मनस इन्द्रियान्तरत्वकल्पनावत् तस्य वृत्त्यन्तरत्वकल्पनमयुक्तमेवेति [1]केचित् – इत्यलं विस्तरेण ॥**

**व्यञ्जनाव्यवस्थापनत्वोपसंहारः --**

**तदेवं प्रयोजनप्रतीतेरभिधालक्षणातात्पर्यवृत्त्यनिर्वर्तनीयत्वेन**

---

### नौका

मित्यादिना । वृत्तित्रयानुस्यूतस्य अभिधालक्षणाव्यञ्जनाख्यवृत्तित्रयानुस्यूतस्य[1] तस्य तात्पर्यस्य । ननु व्यवहारानुरोधेन तदभ्युपगम्यताम्, तत्राह — क्लृप्तेनैवेति । तत्र दृष्टान्तमाचष्टे—बाह्येन्द्रियेति ॥

उक्त[2]वृत्तित्रयीभावमुपसंहरति — तदेवमिति । अभ्युपगन्तव्यमिति । तथा च प्रयोगः — विमतमर्थान्तरम् अभिधादि[1]त्रयातिरिक्त[3]गोचरम्, [4]तद-भावेऽपि प्रतीयमानार्थत्वात् । यदुक्तसाध्यं न भवति तदुक्तसाधनं न भवति,

---

### मन्दरः

किञ्च तात्पर्यस्य वृत्त्यन्तरत्वमेवासदित्याह—किञ्चेति । कुत इत्यत्राह— वृत्तीति । अभिधादिवृत्तित्रयानुगतस्य तस्य तात्पर्यस्य । ननु केश्चि-दभ्युपगतत्वात् तात्पर्यस्य वृत्त्यन्तरत्वमस्तु, को दोष इत्याशङ्क्य — अता-त्पर्यतत्त्वज्ञानां केषाञ्चिद् भ्रान्तिमूलं तत्कल्पनमिति दृष्टान्तप्रतिपादनपूर्वकं परिहरति — क्लृप्तेनैवेति । अयं भावः — यथा मनस इन्द्रियान्तरत्वं सर्वानभ्युपगतं, तथैव तात्पर्यस्य वृत्त्यन्तरत्वमपीति तस्य तत्कल्पनमनुचित-मिति ।

---

पाठ. १. यत् किञ्चित् – ख. ।

---

१. °नुस्यूतस्येति तात्पर्यस्य – मातृका । २. उक्तमुक्ति° – मातृका । ३. °गोचरः – मातृका । ४. तथाभावेऽपि – मातृका ।

---

टिप्प. 1. अभिधादीति । आदिना लक्षणातात्पर्ययोः परिग्रहः ॥

**तदर्थं व्यापारा[1]न्तरमवश्य[2]मभ्युपगन्तव्यं भवताऽपि। वयं तु तत्रैव ध्वननव्यञ्जनद्योतनादिसंज्ञा[3] निवेश्य व्यवहरामः॥**

---

**नौका**

यथा – अभिधेयादि[1], इति। [2]व्यतिरेकी[1] न च [2]विशेषणासिद्धो हेतुः। अभिधाद्य[3]भावस्य साधितत्वादिति। तदर्थं पावनत्वादिप्रयो(ज)नप्रतीत्यर्थम्। तत्रैव व्यापारान्तर एव। द्योतनादी[4]त्यादिना व्यक्त्यादिपरिग्रहः॥

---

**मन्दरः**

उपसंहरति — तदिति। एवं प्रतिपादितप्रकारेण। तदर्थं प्रयोजनप्रतीत्यर्थम्। वयमिति। तत्र व्यापार एव। ध्वननेति। व्यक्त्यादिरादिशब्दार्थः॥

---

पाठ. १. व्यापारोऽवश्यमभ्युपगन्तव्यो – ख.। २. °वश्यं भवताङ्गीकार्यम् – मधु.। ३. संज्ञा – मन्दर।

---

१. अभिधेयादिति – मातृका। २. व्यतिरेकि – मातृका। ३. अभिधात्वाभावस्य – मातृका। ४. द्योतनादित्या° – मातृका।

---

टिप्प. १. व्यतिरेकीति। केवलव्यतिरेकी सोऽयं हेतुरित्यर्थः। साध्याभावसाधनाभावयोः साहचर्यं व्यतिरेकः। तेनैव व्याप्तिरस्मिन्निति बोध्यम्। व्यतिरेकव्याप्तिं दर्शयति – यदुक्तसाध्यं न भवतीत्यादिना। अत्र वृत्तित्रयातिरिक्तगोचरत्वं साध्यम्। तदभावो गोचरत्वाभावः। साधनाभावश्च – तदभाव(वृत्तित्रयाभाव)विशिष्टप्रतीयमानार्थत्वाभावः। (प्रतीयमानत्वं चात्र ज्ञानविषयत्वं विवक्षितम्)। स च वृत्तित्रयान्यतमप्रतीयमानार्थत्वरूप एव। उक्तयोः साध्याभावसाधनाभावयोः साहचर्यमभिधेयादौ दृष्टमिति तत् सपक्षः। अभिधेयादेः वृत्तित्रयान्यतमगोचरत्वेन तदतिरिक्तागोचरत्वात्। अभिधेयादीत्यादिपदेन लक्ष्यतात्पर्यार्थौ गृह्येते। न तु व्यङ्ग्योऽर्थः। तस्य व्यञ्जनाधीनत्वेन तदर्थमेवायमारम्भ इति॥

**व्यङ्ग्यस्य द्वैविध्यम् —**

**तच्च व्यङ्ग्यं प्रयोजनं द्विविधम् — गूढमगूढं च। गूढं यथा —**

---

**नौका**

एवं व्यञ्जनाव्यापारं प्रसाध्य तद्गम्यव्यङ्ग्यस्य द्वैविध्यमाह — तच्च व्यङ्ग्यमिति। तत्र यन्निधिवद् गुप्तं विदग्धैकवेद्यमुद्घाटितं सत् चमत्करोति तद् गूढम्। [1]यश्च वाच्यायमानतया बहिष्ठ[2] इवार्थो झटिति स्फुरति, [3]तदगूढमिति विवेकः। तत्र तावत् प्रथमोद्दिष्टामपि अभिधामूलव्यञ्जनां बहुवक्तव्यत्वादुपेक्ष्य सूचीकटाहन्यायेन प्रथमं लक्षणामूलव्यञ्जनामुदाहरति — गूढं यथेति॥

---

**मन्दरः**

तच्चेति। प्रयोजनं प्रयोजनरूपम्॥

---

१. यस्य – मातृका। २: बहिष्ठमिहार्थो – मातृका। ३. तदगूढं यथेति विवेकः – मातृका।

---

टिप्प. २. विशेषणासिद्ध इति। विशेषणेन असिद्ध इति विग्रहः। यो हेतुः स्वघटकविशेषणविशिष्टः सन् पक्षे न तिष्ठति न सिद्धयति च, स विशेषणासिद्धः स्वरूपासिद्धप्रभेदोऽयं हेत्वाभासः। प्रकृते — 'तदभावेऽपि प्रतीयमानार्थत्वात्' इति हेतुः। तदभावे वृत्तित्रयाभावः प्रतीयमानश्चासावर्थश्चेति प्रतीयमानार्थः तस्य भावः तत्त्वमिति विग्रहः। तथा च वृत्तित्रयाभावविशिष्टप्रतीयमानार्थत्वं हेतुरिति फलितम्। अत्र हेत्वंशे वृत्तित्रयाभाववैशिष्टयं विशेषणम्। तच्च पक्षे न सिद्धयतीति सोऽयं विशेषणासिद्धो हेत्वाभासो न साध्यं साधयितुमलं भवेदिति शङ्कितुरभिप्रायः तदभावस्य प्रागेव – 'न तावदभिधया' इत्यादिग्रन्थसन्दर्भेण साधितत्वान्नायं विशेषणासिद्ध इति सिद्धान्तिनः समाधानमित्यवधेयम्। अर्थान्तरे पक्षे तदभावो नाम बाधकतासम्बन्धेन तत्र वृत्तित्रयस्य अविद्यमानत्वम्॥

१. गूढम् --

वीर ! श्रीरघुरामभद्र ! भवतो धाटीसमाटीकने
भेरीभूरिविरावडम्बरभरैराखण्डलश्रीश्चिरात् ।
निद्राणा यदजागरीत् तदुचितं दैतेयभूतिश्चिरा—
दुन्निद्रा कथमाशु मुद्रणमगादक्षुद्रनिद्राकृतम् ॥१॥

---

नौका

वीरश्रीति । 'शत्रुदेशावमर्शाय [1]सद्यः सुभटवोटकैः । विजिगीषोः प्रवृत्तिर्या सा धाटीति निगद्यते' इत्युक्तलक्षणासु धाटीषु यत् समाटीकनं सम्यक् गमनं तस्मिन्, तत्काल इत्यर्थः । 'टीकृ गतौ' । भेरीणां वाद्यविशेषाणां ये भूरिविरावाः अधिकनिनादाः त एव डम्बराः गर्जितानि तेषां भरैरतिशयैः करणैः । 'आडम्बरः समारम्भे गजगर्जित[2]तूर्ययोः' इति विश्वः (२६.२३८) । निद्राणा चित्तनिमीलनात्मकनिद्राविशिष्टा । आखण्डलश्रीः इन्द्रसम्पत् चिरात्[3] अजागरीदिति यत् तदुचितम् । लोके निद्राविष्टा हि [4]भेरीध्वनिश्रवणेन उत्थिता भवन्तीत्येतत् युक्तमेवेत्यर्थः । 'जागृ निद्राक्षये' (धा.पा. १०७२) [5]लुङि'जाग्रोऽविचिण्णल्ङित्सु' (पा. ७.३.८५) इति गुणः । इदं तु चित्रमित्याह — दैतेयेति । [6]अक्षुद्रनिद्राकृतं तादृङ्निद्राख्यं

---

मन्दरः

गूढमुदाहरति — वीरेति । धाटीसमाटीकने 'शत्रुदेशावमर्शाय सद्यः सुभटघोटकैः । विजिगीषोः प्रवृतिर्या सा धाटीति निगद्यते' इत्युक्तलक्षणलक्षितजैत्रयात्रोद्यमे । चिरान्निद्राणा । चिरादुन्निद्रा जाग्रति । मुद्रणं सङ्कोचम् । कथमित्याश्चर्ये ॥१॥

---

१. सत्युद्भटघोटकैः – मातृका । २. सूर्ययोः – मातृका । ३. 'यत्' इत्यधिकं – मातृका । ४. भूरि° – मातृका । ५. °णल्ङिद्भ्योऽन्यस्मिन् – मातृका । ६. अक्षुद्रं – मातृका ।

अत्र निद्राजा[1]गरणयोश्चेतनधर्मयोरचेतनसुरासुरविभूत्यो-रसम्भवात् तत्कार्यं सङ्कुचितत्वमसङ्कुचितत्वं च लक्ष्यते। तेन सकलसुरासुररक्षणशिक्षणे व्यज्येते ॥

अगूढं यथा —

---

**नौका**

मुद्रणं मुद्रां [1]चिह्न, [2]निद्राव्याजेन [3]लाञ्छनमित्यर्थः। कथमगात् [4]केन हेतुना प्राप, न वेद्मीत्यर्थः। प्रबुद्धानां निद्रामुद्राभावादिदं चित्रमिति भावः ॥१॥

अत्र लक्षकशब्दौ काविल्यपेक्षायां तावाह — अत्र निद्राजागरयोरिति। लक्षणाबीजमनुपपत्तिमाह — चेतनधर्मयोरिति। सम्बन्धमाह — [5]तत्कार्य-मिति। लक्ष्यद्वयमाह — सङ्कुचितत्वमसङ्कुचितत्वं[6] चेति। लक्ष्यत इति। यथा च सादृश्येतरकार्यकारणभावसम्बन्धनिबन्धनत्वात् सङ्कुचितत्वा-सङ्कुचितत्वरूपविषयनिगरणाच्च शुद्धसाध्यवसानलक्षणाद्वयमत्रे[7]ति भावः। तन्मूलके गूढव्यङ्ग्ये विविनक्ति — तेन चेति ॥

---

**मन्दरः**

योजयति — अत्रेति। असम्भवादनुपपत्तेः। कार्यकारणभावः सम्बन्धः। प्रयोजनमाह – तेनेति। सङ्कुचितत्वासङ्कुचितत्वाभ्यामित्यर्थः। अत्र व्यङ्ग्ययोर्विदग्धमात्रवेद्यत्वाद् गूढत्वम्। लक्षणे तु शुद्धसाध्यवसाने ॥

---

पाठ. १. °जागरयोः – नौका. ख.।

---

१. चिह्नम् – मातृका। २. मुद्राव्याजे च – मातृका। ३. लाञ्छन-मित्यमरः – मातृका। ४. तेन – मातृका। ५. तत्काव्य° – मातृका। ६. °त्वमिति – मातृका। ७. मात्रेति – मातृका।

२. अगूढम् —

त्रुट्यच्चण्डीशकोदण्डं रामदोर्दण्डचण्डताम् ।
व्याचष्ट विष्टपस्पष्टघोषणैः शत्रुभीषणैः ॥२॥

अत्र अचेतने कोदण्डे चेतनधर्मस्य व्याख्यानस्यानुपपन्नतया तत्कार्यं[1] ज्ञापनमात्रं लक्ष्यते । तेन च [2]परमोत्कर्षो व्यज्यते ।

---

**नौका**

अथागूढव्यङ्ग्यमाह — अगूढं यथेति ॥

त्रुटयदिति । [1]त्रुटयत् [2]भज्यत् । [3]व्याचष्ट व्याख्यातवान् । 'चक्षिङ् व्यक्तायां वाचि' (धा.पा. १०१७) ङित्वात् तङ् ॥२॥

अत्र लक्षकलक्ष्यसम्बन्ध[4]व्यङ्ग्यान्युपपादयति 'अत्राचेतने'[5] इत्यादिना । तत्र — 'व्याचष्ट'पदं लक्षकम् । ज्ञापनं लक्ष्यम् । [6]कार्यकारणभावः सम्बन्धः । उत्कर्षो व्यङ्ग्यः । लक्षणा चेयं स्वार्थबाधेन परार्थत्वात्,

---

**मन्दरः**

अगूढव्यङ्ग्यमुदाहरति — त्रुटयदिति । त्रुटयत् भङ्गेन द्विधाभवत् । चण्डीशस्य कोदण्डं कर्तृ । व्याचष्ट व्याख्याति स्म ॥२॥

योजयति — अत्रेति । व्याख्यानस्य 'पदच्छेदः पदार्थश्च समासो [1]विग्रहस्तथा । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्'' ।

---

पाठ. १. तत्कार्यज्ञापन° – मधु. ख. । २. परमत्वं – ख. ।

---

१-२-३. तृण्यत् भुज्यत् । व्याचष्टे – मातृका । ४. व्यङ्ग्यानुप° – मातृका । ५. °चेतनेत्या° – मातृका । ६. कव्यकारण° – मातृका ।

---

पाठ. १. 'विग्रहो वाक्ययोजना' इति पठयते बहुत्र ।

एतत्सर्वं कविभिरुच्यमानत्वाद्[1] वाच्यायमानतया अगूढम् । तदेवं लक्षणामूला व्यञ्जनोक्ता ॥

२. अभिधामूलव्यञ्जना --

अधुनाभिधामूला निरूप्यते । अत्र काव्यप्रकाशकारः —

'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥'

(का. प्र. २. ३२)

इत्यभिधामूलव्यञ्जनालक्षणमुक्तवान् ।

संयोगादयः --

संयोगादयो भर्तृहरिणा ग्रथिताः —

---

नौका

स्वार्थाविनाभूतज्ञापनलक्षणात्[1] जहत्स्वार्थेति द्रष्टव्यम् । अत्रागूढत्वमाह — एतत्सर्वमिति । तदेतदुपसंहरति — तदेवमिति । एतेन गूढागूढव्यङ्ग्यतया पूर्वोक्त'फलतो[2]लक्षणा'भेदानां सप्तानामपि प्रत्येकं द्वैविध्ये चतुर्दशविधत्व-मित्यनुसन्धेयम् ॥

---

मन्दरः

इति लक्षणलक्षितविवरणविशेषस्य । अत्रापि शुद्धसाध्यवसाना लक्षणा ॥

---

पाठ. १. °मानत्वेन – मधु. ख. ।

---

१. °लक्षणा – मातृका । २. फलतालक्षणा – मातृका ।

सं-ोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥
इति । (वाक्यपदीये २.३१५.३१६)

---

**नौका**

अथाभिधा[1]मूलव्यञ्जनां वक्तुं प्रतिजानीते — अधुनेति । अनेकार्थस्येति । अनेके[2] अर्था वाच्यत्वेन यस्य तस्य शब्दस्य संयोगाद्यैः वक्ष्यमाणैर्वाचकत्वे वाचिकायां शक्तौ (नियन्त्रिता) नियमिता इत्यर्थः ॥ [3]के ते संयोगादय इत्यतस्तानाह — संयोगादय इति । संयोगः संश्लेषः । विप्रयोगो विश्लेषः । अर्थः प्रयोजनम् । लिङ्गं चिह्नम् । व्यक्तिः स्त्रीपुन्नपुंसकम् । स्वर उदात्तादिः एते चार्थविशेषस्या[4]वधारणे[5] हेतव इत्यर्थः ॥

---

**मन्दरः**

नन्वभिधामूलो लक्षणामूलश्चेत्युद्दिश्य तत्क्रमोल्लङ्घनेन कथं निरूपणमित्याशङ्क्य अभिधामूलस्यातिबहुलत्वात् सूचीकटाहन्यायेन तन्निरूपणावसरोऽद्येत्याशयेनाह—अधुनेति । अत्रेति । काव्यप्रकाशकारः उक्तवानिति सम्बन्धः । अनेकार्थस्येति । शब्दस्य हरिरामादिशब्दस्य । संयोगाद्यैर्वक्ष्यमाणैः वाचकत्वे नियन्त्रिते सति, एकार्थमात्रस्मृतिजनकत्वे कृत इत्यर्थः । अवाच्यार्थधीकृत् अर्थान्तरज्ञानहेतुः व्यापृतिः व्यापारः । अयं भावः — अनेकार्थशब्दप्रयोगस्थले शक्तेः प्रकृतार्थमात्रस्मृतौ नियमितत्वाद् अप्रकृतार्थस्यानुभूयमानस्य अगतिकत्वेनान्यथानुपपत्त्या व्यञ्जना समाश्रयणीयेत्यर्थापत्तिरेव तत्र प्रमाणमिति ॥

---

पाठ. १. संसर्गः – इति वाक्यपदीयपाठः (२.३१५.३१६)

---

१. °मूला° – मातृका । २. अनेका – मातृका । ३. केन – मातृका
४. °स्यानवधारणे – मातृका । ५. 'अवधारण°–' इत्यधिकम् – मातृका ।

संयोगादीनामुदाहरणानि –

**तत्र संयोगेनाभिधानियन्त्रणं यथा —**

१. संयोगः –

'कृष्णः कौस्तुभभूषितः' इति कौस्तुभसंयोगाद्[1] वासुदेवे, नार्जुने[2] ॥

२. विप्रयोगः –

'कृष्णः कौस्तुभवर्जितः' इति विप्रयोगात् तत्रैव ॥

३. साहचर्यम् –

'रामलक्ष्मणौ' इति साहचर्याद् दाशरथौ ॥

---

नौका

तत्र संयोगस्यार्थनिश्चायकत्वमुदाहरति — तत्र संयोगेनेत्यादिना । वासुदेव इति । तथा च कौस्तुभसंयोगात् कृष्णपदस्य वासुदेवे अभिधा नियम्यते । न त्वर्जुन इत्यर्थः । विप्रयोगस्योदाहरणमाह — कृष्ण इति ।

---

मन्दरः

संयोगादीनां शक्तिनियामकत्वं हरिणोक्तमनुवदति — संयोग इति । 'शब्दार्थस्य' अनेकार्थो यः शब्दः तदर्थस्येत्यर्थः । अनवच्छेदे सर्वस्याप्यविशेषेण स्मरणे सति संयोगादयः विशेषस्य — एकार्थमात्रस्य स्मृतेर्हेतवः ॥

संयोगादिभिराभिधानियमनं क्रमेणोदाहरति — कृष्ण इति । कृष्णशब्दस्यार्जुनादिसाधारणस्य कौस्तुभसम्बन्धेन वासुदेवेऽभिधा नियम्यते ।

---

पाठ. १. 'कृष्णशब्दो' इत्यधिकं पठ्यते – मधु. । २. 'वर्तत' इत्यधिकं पठ्यते – मधु. ।

४. विरोधिता –

'रामरावणौ' इति विरोधात् तत्रैव ॥

५. अर्थः –

रामं मोक्षाय चिन्तयेत् इति प्रयोजनात् तत्रैव ॥

६. प्रकरणम् –

देवः प्रमाणम् इति[1] प्रकरणाद् युष्मदर्थे ॥

७. लिङ्गम् –

कुपितो गरुडध्वज इति[2] कोपचिह्नस्याचेतने ध्वजभेदेऽसम्भवाद् विष्णौ ॥

---

नौका

तत्रैव वासुदेव एव। तथा च कौस्तुभ[1]संयोगवता तेनैव विप्रयोगोऽपि न्याय्य इति कृष्णपदस्य वासुदेवार्थपरत्वनिश्चय इत्यर्थः। सामर्थ्याद् वसन्त इति। कोकिल[2]मादनसामर्थ्यं वसन्तस्यैव न मद्यादेरित्यर्थः। स्वरस्योदात्तादेरर्थनिश्चायकत्वमाह — इन्द्रशत्रुरित्यत्रेति। इन्द्रः शत्रुः शातयिता यस्येति

---

मन्दरः

तदेवाह — वासुदेव इति। नियन्त्रणशब्दार्थमाह — नार्जुन इति। विप्रयोगेनाह — कृष्ण इति। अयं भावः — प्रतिषेधस्य प्रसक्तिपूर्वकत्वात् वासुदेवादन्यस्मिन् कौस्तुभभूषणप्रसक्त्यभावेन प्रतिषेधासम्भवादिति। साहचर्येणाह — रामलक्ष्मणाविति। बलभद्रादिसाधारणस्य रामशब्दस्य सौमित्रि-

---

पाठ. १. इत्यत्र – मधु.। २. इत्यत्र – मधु.।

---

१. संयोगवतः – मातृका। २. °मदन° – मातृका।

८. शब्दान्तरसन्निधिः -

**देवस्य रमापतेः [1]इति शब्दान्तरसान्निध्यात् तत्रैव ॥**

९. सामर्थ्यम् -

**मधुना मत्तः कोकिलः इति सामर्थ्याद् वसन्ते ॥**

---

### नौका

बहुव्रीहौ 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा. ६.२.१) इति प्रकृतिस्वरे पूर्वनिघाते आद्युदात्तत्वम्। ततो बहुव्रीहिनिश्चयः। इन्द्रस्य शत्रुरिति तत्पुरुषे समासे अन्तोदात्तत्वं शेषनिघातः। ततस्तत्पुरुषनिश्चयः। वेद एव न काव्य इति।

---

### मन्दरः

साहचर्याद् दाशरथावभिधानियमनम्। विरोधितयाऽऽह — रामरावणाविति। विरोधित्वं नाम सहानवस्थितिर्वध्यघातुकभावो वा। द्वितीयस्योदाहरणमिदम्। दिनं निशा च इत्याद्यस्योदाहरणम्। हरिद्रासाधारणस्य निशाशब्दस्यात्र रात्रावभिधानियमनम्। अर्थेनाह — अर्थः प्रयोजनम्। राममिति। प्रयोजनात् मोक्षरूपात्। प्रकरणेनाह — प्रकरणं श्रोतृबुद्धिस्थता। देव इति। लिङ्गेनाह — लिङ्गं नाम स्ववाच्यार्थान्तरव्यावृत्त एकमात्रनिष्ठो धर्मः। कुपित इति। शब्दान्तरसन्निधिनाऽऽह — देवस्येति। सामर्थ्येनाऽऽह — सामर्थ्यमत्र कारणत्वम् – मधुनेति। मकरन्दादिसाधारणस्य मधुशब्दस्य कोकिलमदकारणत्वसामर्थ्येन वसन्तेऽभिधानियमनम्। औचित्याऽऽह — अत्र औचिती अन्वययोग्यता। पात्विति। 'पा रक्षणे' (धा.पा. १०५६) इति धातुनिष्पन्नस्य सुखदान-दुःखनिवर्तन-तदुभयानुकूलव्यापारसाधारणस्य तस्य दयितामुखरूपेण सुखसम्पादकत्वायोगात् तदनुकूलव्यापारे साम्मुख्यरूपे समभिव्याहृतपदान्वययोग्यतारूपेण औचित्येन अभिधानियमनम्। देशेनाह — अत्र देशो नगरादिः। भातीति। परमेश्वरशब्दः शम्भ्वादिसाधारणः। कालेनाह-

---

पाठ. १. इत्यत्र – मधु.।

१०. औचिती –

पातु वो दयितामुखम् इत्यत्र[1] औचित्यात् साम्मुख्ये ॥

११. देशः –

भात्यत्र परमेश्वरः इति[2] राजधानीरूपाद् देशाद् राज्ञि ॥

१२. कालः –

विरोचनो भाति दिवा इति [3]दिवाकरे, 'रात्रौ'[4] चन्द्रे वह्नौ वा ॥

---

**नौका**

इदं चोदात्तादिस्वरापेक्षयोक्तम्। 'मन्थामि कौरवशतम्' (वेणी. १.१९) इत्यादौ काव्ये काकुस्वरेणापि अर्थावगतेरिष्टत्वात्। स्वरादय इत्यत्रादिशब्दार्थमाह — आदिशब्दादिति। अभिनयादय इति। अत्रादिशब्देन अपदेश-

---

**मन्दरः**

अत्र कालोऽहरादिः। विरोचन इति। अत्र दिनरूपेण कालेन चन्द्रादिसाधारणस्य विरोचनशब्दस्य सूर्येऽभिधा नियमनम्। रात्राविति। 'चन्द्राग्न्यर्का विरोचनाः' इत्यमरः (३.३.१०८)। व्यक्त्याऽऽह — अत्र व्यक्तिर्लिङ्गम्। मित्रमिति। अत्र नपुंसकलिङ्गेन मित्रशब्दस्य सुहृद्यभिधानियमनम्। पुंलिङ्गेन सूर्ये। स्वरेणाभिधानियमनं वेद एव न लौकिक इति संयोगाद्यपेक्षया विशेषः। अत्र स्वर उदात्तादिर्न काक्वादिः। इन्द्रशत्रुरिति। यदब्रवीत् – 'स्वाहेन्द्रशत्रुर्वर्धस्वेति तस्मादस्येन्द्रः शत्रुरभवत्' इत्यत्र – शत्रुशब्दः शातयित्रर्थकः। तथा च इन्द्रशत्रुपदे यदीकारस्योदात्तत्वं तदा बहुव्रीहिः। अत्र इन्द्रस्य शातयितृत्वम्। यद्युकारस्योदात्तत्वं तदा षष्ठीतत्पुरुषः।

---

पाठ. १. 'अत्र' न पठ्यते – मन्दर.। २. 'इत्यत्र – अत्रेत्यस्य राजधानीरूपार्थपरत्वात् परमेश्वरो राजनि – मधु.। ३. दिनकरे – मधु.। ४. रात्रावित्युक्ते वह्नौ चन्द्रे वा – मधु.।

१३. व्यक्तिः –

मित्रं दृश्यताम् इति [1]नपुंसकरूपया व्यक्त्या सुहृदि, मित्रो दृश्यताम् इति[2] रवौ ॥

१४. स्वरः –

इन्द्रशत्रुः इत्यत्र [3]पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थनिश्चयः। [4]द्वादशाहीनस्य इत्यत्र द्वादशशब्दस्य सङ्ख्यास्वरेण द्वन्द्वार्थनिश्चयः। [5]अहीनशब्दस्य मध्योदात्तेन[6] अहर्गणार्थनिश्चय इति। स्वरेणार्थनिश्चयो वेद एव न काव्ये ॥

आदिशब्देन[7] अभिनयादयः सङ्गृहीताः ॥

---

नौका

निर्देशयोः सङ्ग्रहः। तत्राभिनयोऽर्थव्यञ्जकचेष्टा। अपदेश उपदेशः। निर्देशोऽङ्गुल्यादिना प्रदर्शनम्। एतेषामुदाहरणान्येकावल्यादौ द्रष्टव्यानि, विस्तरभयान्नोच्यन्त इत्याशयः ॥

---

मन्दरः

तत्र वृत्रस्य शातयितृत्वमिति स्वरभेदेनार्थभेदे सिद्धे – 'इदि परमैश्वर्ये' (धा.पा. ६३) इति धातोः इन्द्रशब्दस्याद्युदात्तत्वेन निष्पन्नत्वात् – 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा. ६.२.१) इति इन्द्रपदस्थेन प्रकृतिस्वरेण बहुव्रीहिविधानादिन्द्रस्य शातयितृत्वम्, न वृत्रस्य। अन्तोदात्तत्वाभावेन तत्पुरुषाभावादित्याशयेनाह–बहुव्रीह्यर्थनिश्चय इति। द्वादशेति। 'तिस्र एव साह्नस्योपसदो

---

पाठ. १. पुंनपुंसक° – मन्दर°। २. इत्युक्ते तु – मधु.। ३. पूर्वपदे – मन्दर°। ४. द्वादशाहस्येत्यत्र – मधु.। ५. अहन् शब्दस्य – मधु.। ६. °दात्तत्वेन – मधु.। ७. °शब्दात् – मधु. नौका.।

उपसंहारः --

**एवं संयोगादिभिरभिधायां नियमितायां यदनेकार्थ[1]स्य शब्दस्यार्थान्तरमपि यत्र क्वचन प्रतीतिगोचरीभवति, तत्र–[2]व्यञ्जन व्यापार एव प्रगल्भते । लक्षणातात्पर्ययोः सामग्र्यभावेन अन्योन्यान्वयैकविषयत्वेन च प्रकृते[3]ऽनवकाशपराहतत्वात् ॥**

---

नौका

एवं संयोगादिपदार्थान् व्याख्याय प्रकृतमनुसरति — एवं संयोगादिभिरित्यादिना । व्यञ्जनाव्यापार एवेत्येवकारेण वृत्त्यन्तरं व्यवच्छिद्यते । नन्वेतदनुपपन्नम्, लक्षणातात्पर्ययोः सत्त्वादित्यत आह — लक्षणातात्पर्ययोरिति । लक्षणायाः प्रकृतानवकाशे सामग्र्यभावेनेति हेतुः । सामग्री च सम्बन्धानुपपत्तिप्रयोजनानि, तेषामभावेनेत्यर्थः । तात्पर्यस्यानवकाशे अन्योन्यान्वयैकविषयकत्वेन चेति हेतुः । तथा च अर्थान्तरस्य अन्योन्यान्वयरूपत्वाभावेन अन्योन्यान्वयविषयकस्य तात्पर्यस्यार्थान्तरप्रतीतिहेतुत्वं न सम्भवतीति भावः ॥

---

मन्दरः

द्वादशाहीनस्य यज्ञस्य' (तै.सं.६.३.९.१) इत्यत्र द्विशब्दस्योदात्तत्वेन निष्पन्नत्वात् 'सङ्ख्यावाचि पूर्वपदं प्रकृत्या द्वन्द्वे' इति द्विशब्दस्थेन प्रकृतिस्वरेण द्वे च दश चेति द्वन्द्वार्थनिश्चयः । न द्विरावृत्ताश्च ता दश चेति । अहीनशब्दस्येति । 'अह्नः खः' (कात्या. वा. २७२२) इति विहितस्य खस्य 'आयन्' (पा. ७.१.२) इत्यादिना ईनादेशे 'आद्युदात्तश्च' (पा. ३.१.३) इति प्रत्ययादेरीकारस्योदात्तत्वेन अहीनपदस्य मध्योदात्तत्वादनेकैरहोभिः साध्यः क्रतुरहीन इत्यहर्गणार्थनिश्चयः । न हीनः अहीनः इति न नञ्तत्पुरुषार्थ इत्याशयेनाह — अहर्गणेति । वेद एवेत्यवधारणार्थमाह न काव्य इति । स्वरादय इत्यत्रादिशब्दार्थमाह -- आदिशब्देनेति । अत्र अपदेशनिदशादय आदिशब्दार्थः ॥

---

पाठ. १. °कार्थशब्दस्या° – मधु. । २. व्यञ्जना° – नौका° । ३. °नवकाशः इत्येव – मधु. ।

अभिधामूलव्यञ्जनाया उदाहरणम् --

**यथा —**

> अत्यर्जुनयशोराशिः कृतसंरक्तर्पणः।
> एकवीरोपतापश्च रामो राजति राजघः ॥३॥

अत्र दाशरथिपक्षे अत्यर्जुनोऽतिधवलो[1] यशोराशिर्यस्येति विग्रहः। जामदग्न्यपक्षे तु[2] अर्जुनः कार्तवीर्यस्तस्य यशोराशिमतिक्रान्तवान् नाशितवानिति विग्रहः। कृतसंरक्ततर्पणः कृतं संरक्तानां स्वस्मिन् सम्यगनुरागवतां तर्पणं प्रीणनं येनेति प्रकृते

---

**नौका**

इत्थं प्रसाधितां व्यञ्जनावृत्तिमुदाहरति – यथेति। अत्यर्जुनेति ॥३॥

श्लोकं स्वयं विवृणोति – अत्र दाशरथिपक्ष इति। 'अवलक्षो धवलोऽर्जुनः (अमरः १.४.१३) इति कोशमभिप्रेत्याह–अतिधवल इति। सम्यगित्यत्र सम्यक्पदार्थमाह – यथाप्रतिज्ञमिति। एकवीरामिति। [1]एकः स्वरूपो वीरो

---

**मन्दरः**

एवं संयोगादीनुदाहृत्य तत्र व्यञ्जनेनैवार्थान्तरप्रतीतिरित्याह — एवमिति। ननु कथं व्यञ्जनव्यापार एवेति, लक्षणातात्पर्ययोरनुरूपयोर्विद्यमानत्वादित्याशङ्क्य तयोर्नात्रावकाश इत्याह – लक्षणातात्पर्ययोरिति। अयं भावः – सम्बन्धानुपपत्तिप्रयोजनरूपसामग्र्यभावेन लक्षणायाः पदार्थावगमसमनन्तरभाविसमन्वयमात्रविषयत्वेन तात्पर्यस्य च प्रकृते प्रसक्त्यभावादिति ॥

अभिधामूलामुदाहरति — अतीति ॥३॥

---

पाठ. १. 'निष्कलङ्को' इत्यधिकं पठ्यते – ख.। २. कार्तवीर्यार्जुनस्तस्य यशोराशीन (न्ना) (शित) वानिति विग्रहः – ख.।

---

१. एकस्वरूपो – मातृका।

अन्यत्र कृतं सम्यग्[१] रक्ततर्पणं शोणितेन[२] निवापो येनेति। सम्यक्त्वं च यथाशास्त्रां यथाप्रतिज्ञं वाऽनुष्ठितत्वम्। एकवीरः अपतापः इति पदद्वयं प्रकृते, अन्यत्रैकपदम् एकवीरा[३]नुपतापयतीति। राज्ञो हन्तीति राजघः। 'राजघ'[४](कात्या. वा. २०२२) इति निपातनात् साधुः[५]। अत्र[६] दाशरथिराम एवाभिधायाः प्रकरणादिना [७]नियन्त्रितत्वादप्रकृतजामदग्न्य[८]रूपार्थप्रतीतिस्तु[९] व्यञ्जनव्यापारकृतैव। [१०]नन्वत्र श्लेषमहिम्नाऽर्थान्तरप्रतीतिर[११]स्त्विति चेत्, न।

---

**नौका**

यस्यास्तां स्वमातरं रेणुकादेवीं शिरश्छेदेन सन्तापयतीति तादृश इत्यर्थः। शत्रून् राज्ञो [१]हन्तीति [२]राजघः। इदमुभयत्र समानम्। ननु [३]राजघशब्दः कथं निष्पन्न इत्यत आह – [४]राजघ इति। अत्रार्थान्तरप्रतीतिः व्यञ्जनेनैवेत्युपपादयति – अत्र दाशरथीति। नन्वत्र श्लेषेणैवार्थान्तरं प्रतीयतां किं व्यापा-

---

**मन्दरः**

व्याकरोति --- अत्रेति। वृत्त्यर्थबोधकं वाक्यं विग्रहः। श्लेषस्येति। अयं भावः- केवलप्रकृतयोर्वा केवलाप्रकृतयोर्वा श्लेषः सम्भवति, न प्रकृताप्रकृतयोः इत्यलङ्कारतरङ्गे (७.७१) वक्ष्यमाणत्वादप्रकृतार्थप्रतीतिर्व्यञ्जनाव्यापाराय-त्तैवेति॥

---

पाठ. १. न पठ्यते – ख.। २. शोणितनिवापो – ख.। ३. एकवीरामुप° – नौका.। ४. 'राजघश्च' – मन्दर°। ५. अत्र दाशरथिपक्षे इत्यारभ्य साधुः इत्यन्तो ग्रन्थो न पठ्यते – मधु.। ६. अत्र राम एव – मधु.। ७. नियमितत्वा° – ख.। ८. °जामदग्न्यप्रतीति° – मधु.। ९. 'तु' न पठ्यते – मधु.। १०. न चात्र – मधु.। ११. °प्रतीतिरिति शङ्कनीयम् – मधु.।

---

१. हन्तेति – मातृका। २-३-४. राजाघ – मातृका।।

श्लेषस्य [1]प्राकरणिकगतत्वेन वा [2]अप्राकरणिकगतत्वेन वा नियमनात् । तदेवं द्विविधोऽपि शब्दशक्तिमूलो व्यञ्जनाव्यापारो निरूपितः ॥

अर्थशक्तिमूलाया उदाहरणम् --

[4]अर्थशक्तिमूला यथा —

अभिषिषेणयिषौ रघुपुङ्गवे मुदमविन्दत देववरूथिनी ।
क्षितिसुता भयमम्बुधिमेखला[5]कलशसिन्धुसुते तु तदोभयम् ॥४॥

---

नौका

रान्तरेणेति शङ्कते – नन्वत्रेति । दूषयति – नेति । तत्र हेतुमाह – श्लेषस्येति । तथा च केव(ल)प्रकृतयोः केवलाप्रकृतयोर्वा श्लेषः; न तु प्रकृताप्रकृतयोरित्यलङ्कारतरङ्गे ( ७.७१ ) वक्ष्यमाणत्वान्नात्र श्लेषावकाश इति भावः । उपपादितां शब्दशक्तिमूलां व्यञ्जनामुपसंहरति – तदेवमिति ॥

[1]अर्थशक्तिमूलां व्यञ्जनामाह – अर्थशक्तिमूला यथेति ॥

---

मन्दरः

अर्थशक्तिमूलामुदाहरति — अभिषिषेणयिषाविति । देववरूथिनी देवसेना ॥४॥

---

पाठ. १. प्रकृतगतत्वेन – मधु. । २. अप्रकृतगतत्वेन – मधु. । ३. 'अपि'र्न पठ्यते – मधु. । ४. वाक्यमिदं न पठ्यते – मधु. । ५. °ऽलभत सिन्धुसुता च – मधु. ।

---

१. अर्थश्लेष° – मातृका ।

[1]अभिषिषेणयिषौ सैन्यैः सह शत्रुमभिगन्तुमिच्छति सति। 'यत्सेनयाभिगमनमरौ तदभिषेणनम्' (अमर. २.८.९६) इत्युक्तत्वात्।

अत्र सुरसेनामोदरूपवस्तुशक्त्या तत्कारण[2]भूतो दैत्यानामत्ययो भविष्यतीति [3]व्यज्यते। क्षितिसुताभयरूपार्थशक्त्या तु तद्धेतुभूतरामचमूचरणाभिघातादवन्याः सीताजनन्याः [4]भाविन्यार्तिरिति व्यज्यते। [5]अब्धिमेखलाक्षीराब्धिसुतयोः खेदमोदरूपवस्तुशक्तिभ्यां [6]रामचमूचरणरजसा सागरशोषणे सति [7]भुवो भूषणहानिः, सपत्नी[8]पितृहानिश्चेति खेदमोदहेतू। [9]लक्ष्म्यास्तु खेदमोद-

---

नौका

[1]अभिषिषेणेति। वरूथोऽस्यामस्तीति वरूथिनी, देवानां वरूथिनी देवसेना। 'रथगुप्तिर्वरूथो ना' इत्यमरः (२.८.९८)। मुदं सन्तोषम् अविन्दत, प्रापेत्यर्थः। 'विद्लृ लाभे'। क्षितिसुता जानकी भयम् अविन्दत। अम्बुधिमेखला भूमिः। 'भूतधात्र्यब्धिमेखला' इत्यमरः। कलशसिन्धुसुता लक्ष्मीः, ते उभे तु उभयं खेदमोदौ अविन्दतामिति वचनविपरिणामेनान्वयः ॥४॥

---

मन्दर

अर्थशक्तिमूलव्यङ्ग्यानि विवृणोति — अत्रेति। 'वस्तुशक्ति'रर्थशक्तिरित्यर्थः। अत्ययो नाशः। शिष्टं स्पष्टम् ॥

---

पाठ. १. अभिषिषेणेत्यात्यारभ्य इत्युक्तत्वादित्यन्तो ग्रन्थो न पठ्यते – मधु.। २. न पठ्यते – मधु.। ३. द्योत्यते मन्दर। ४. भाविनी भीरिति द्योत्यते – मधु.। ५. पृथ्वीक्षीरा° – मधु. ६. °चमूरजसा इत्येव–मधु ख.। ७. निजस्य – मधु.। ८. पितुश्चेति भुवः खेद° – मधु.। ९. तथा लक्ष्म्यास्तु – मधु.।

---

१. अभिषयेणेति – मातृका।

हेतू – निजपितृहानिः सपत्न्या [1]भुवो भूषणहानि[2]श्चेति द्वे भविष्यत इति ध्वन्यत इत्यर्थशक्तिमूलो व्यञ्जनाव्यापारो [3]दर्शितः ॥

उभयशक्तिमूलाया उदाहरणम् —

उभयशक्ति[4]मूला यथा —

परशुगतिभीषणात्मा सङ्गरलीलासुबाहुजक्षोभम् ।
सोढा रामो रेमे पितृभक्तो विप्रदत्तभूवलयः ॥८॥

---

नौका

अभिषिषेण[1]यिषावित्यस्यार्थमाह — सैन्यैरिति । तत्र सम्मतिमाह— यत्सेनयेति । अभिषिषेणयिषावित्यत्र — अभिपूर्वात् सेनाशब्दात् 'सत्यापपाश' (पा. ३.१.२५) इत्यादिना ण्यन्तात् सनि – 'उपसर्गात् सुनोति' (पा. ८.३.६५) इत्यनुवृत्तौ – [2]'स्थादिष्वभ्यासेन' (पा. ८.३.६४) इति षत्वम् । 'आदेशप्रत्यययोः' (पा. ८.३.५९) इति सनः सस्य षत्वम् । 'सनाशंस' (पा. ३.२.१६८) इत्युप्रत्ययः । अत्र व्यङ्ग्यानि विविनक्ति – अत्र[3] सुरसेनेत्यादिना 'व्यापारो निर्णीतः' इत्यन्तेन । गतार्थमेतत् । सपत्नीपितृहानिरिति । सपत्न्याः लक्ष्म्याः पितुः समुद्रस्य हानिरित्यर्थः ॥

उभयशक्तिमूलामुदाहरति – उभयशक्तिमूला यथेति । परशुगतीति ॥९॥

---

मन्दरः

उभयशक्तिमूलामुदाहरति – परशुगतीति ॥९॥

---

पाठ. १. न पठ्यते – मधु. । २. '°श्चेति ध्वन्यते' इत्येव – मधु. । ३. निरूपितः – मधु., निर्णीतः ख. नौका. । ४. °मूलो – मन्दर° मधु° ख° ।

---

१. °यिषामित्य° – मातृका. । २. स्थातिष्विति – मातृका । ३. अत्र सुसेने° – मातृका ।

[1]'अत्र प्रकृते दाशरथिरामे 'परशुगतिभीषणात्मा' परेष शिष्टानां शुचो दुःखस्यातिभयङ्करं' स्वरूपं यस्येति विग्रहः । 'सङ्गरलीलासुबाहुजक्षोभं सोढा' युद्धकेल्यां सुबाहुजक्षोभं सुबाहुनामकासुरजनितविमर्दं सोढा शमितवानित्यर्थः । अत्र 'सोढा'इत्यस्य तृन्नन्तत्वात् – 'न लोका° (पा. २.३.६९) इत्यादिना [2]षष्ठीप्रतिषेधे 'कर्मणि द्वितीया'इति वेद्यम् । जामदग्न्यरामपक्षे – परशुगत्या कुठारव्यवहारेण भीषणात्मा, 'सङ्गरलीलासु'इति सप्तम्यन्तं भिन्नं पदम्; बाहुजाः क्षत्रियाः । उत्तरार्धमुभयत्राप्यविशेषम् । अत्र

---

**नौका**

श्लोकं स्वयं विवृणोति — अत्र प्रकृत इत्यादिना । इदं च मात्राच्छन्दस्यार्यावृत्तम् । 'लक्ष्मैतत्सप्तगणा गोपेता' (वृ. र. २.१) इत्यादि तल्लक्षणात् । इह व्यङ्ग्यमुपपादयति — अत्र पूर्वार्धे इति । अत्रालङ्कारमाह— अत्रेति । 'परशुगती'त्युदाहरण इत्यर्थः । पूर्वत्र च पूर्वस्मिन 'अत्यर्जुनयशोराशिः' (सा. र. ४.४) इत्युदाहरणे च ॥

---

**मन्दरः**

व्याकरोति — अत्रेति । अत्र पूर्वार्धे इति । जतुकाष्ठन्यायेन शब्दानां परस्परविलक्षणं भङ्गमवलम्ब्य अर्थद्वयप्रतिपादकत्वाच्छब्दशक्तिमूलकत्वम् । उत्तरार्ध इति । एकनालावलम्बिफलवत् पदभङ्गमन्तरेण अर्थयोरेव श्लिष्टत्वादर्थशक्तिमूलत्वमित्युभयशक्तिमूलत्वम् । अत्रेति । अस्मिन्नुदाहरणे । पूर्वत्र अभिधामूलोदाहरणे च । 'व्यज्यते' उपमालङ्कारध्वनि[1]रुभयत्रेत्यभ्युच्चय इत्याशयः ॥

---

पाठ. १. 'अत्र प्रकृते' इत्यारभ्य -- उभयत्राप्यविशेषम्' इत्यन्तो ग्रन्थो न पठ्यते -- मधु. । २. °निषेधे – ख. ।

पूर्वार्धे शब्दशक्तिमूल उत्तरार्धेऽर्थशक्तिमूल इत्युभयशक्तिमूलो [1]व्यञ्जनाव्यापारः। अत्र [2]पूर्वत्र च रामो राम इवेत्युपमा[3]लङ्कारो व्यज्यते ॥

उभयशक्तिमूलत्वसमर्थनम् --

न च शब्दशक्तिमूलध्वनावपि शब्दस्यार्थव्यतिरेकादर्शनाद-र्थस्यैव[4] व्यञ्जकत्वमस्त्विति[5] वाच्यम्। तत्र [6]शब्दस्यैव प्राधान्या-दर्थस्य सहकारिमात्रात्वात्। यथाहुः —

'अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥' (का. प्र. २.२०) इति

---

नौका

ननु सर्वत्र अर्थस्यैव व्यञ्जकत्वमास्ताम्; किं शब्दस्येत्याशयेन शङ्कते -- न च शब्दशक्तीति। सहकारिमात्रत्वादिति। अत्रार्थे काव्य-प्रकाशकृत्सम्मतिमभिधत्ते — यथाहुरिति। तत्र शब्दशक्तिमूले। ननु कथमेकस्य शब्दस्य प्राकरणिकार्थे अभिधादिवृत्तिः, अर्थान्तरे च व्यञ्जनावृत्तिरिति; सकृदुच्चरितः शब्दो न वृत्तिद्वयमर्हति' इति निषेधादेकस्य एकदा वृत्तिद्वयानङ्गी-कारादितीमां शङ्कां 'सकृदि'ति निषेधस्य व्यवस्थाकथनेन वारयति — सकृदुच्च-रित इति। तत्र हेतुमाह — अनन्यथासिद्धेति। अनन्यथासिद्धकार्यं च

---

मन्दरः

नन्वर्थशक्तिमूलध्वनाविव शब्दशक्तिमूलध्वनावपि अर्थस्यैव व्यञ्जकत्वोक्तौ लाघवं स्यादित्याशङ्क्य परिहरति — न चेति। अर्थव्यतिरेकस्य अर्थाभावस्य

---

पाठ. १. व्यञ्जन° -- ख.। २. 'सर्वत्र रामो' इत्येव - मधु.। ३. ३. उपमा व्यज्यते' इत्येव - मधु.। ४. °र्थस्यापि - मधु.। ५. °मस्तीति - मधु.। ६. शब्दप्राधान्यादन्यस्य - मधु.।

एवमेवार्थशक्तिमूल[1]ध्वनावपि शब्दस्य सहकारिमात्रत्वं द्रष्टव्यम् । 'सकृदुच्चरितः शब्दो न वृत्तिद्वयमर्हति' इति निषेधः केवलयोरभिधयोर्लक्षणयो[2]रभिधालक्षणयोर्वा भवति । न त्वभिधाव्यञ्जनयोर्लक्षणाव्यञ्जनयोर्वा स्यादिति [3]मन्तव्यम् । अनन्यथासिद्धकार्यबलेनाभिधायकलक्षकयोर्व्यञ्जनव्यापारवत्त्वस्य पूर्वमुपपादितत्वात् ।

तदेवं वाचक–लक्षक–व्यञ्जक–रूपास्त्रिविधाः शब्दास्तद्व्यापारा अभिधालक्षणाव्यञ्जनात्मका वाच्यलक्ष्यव्यङ्ग्यरूपास्तदर्था अपि व्याख्याताः ॥

---

नौका

अप्राकरणिकार्थप्रतीतिरेव । तत्राभिधादीनामसम्भवादगत्या 'सकृदि'ति निषेधस्य व्यवस्थां प्रकल्प्य अभिधायकलक्षकयोरपि व्यञ्जनवृत्त्याश्रयणमावश्यकमेवेत्यर्थः । इत्थं तरङ्गत्रयोपपादितमर्थं निगमयति — तदेवं वाचकेति ॥

---

मन्दरः

अदर्शनात् । अत्र सम्मतिं दर्शयति — यथाहुरिति । मम्मटपादा इति शेषः । एवमेवेति । अयं भावः — 'यथा शब्दशक्तिमूलध्वनौ शब्दस्य प्राधान्यमर्थस्य सहकारित्वं तथैवार्थशक्तिमूलध्वनावर्थस्य प्राधान्यं शब्दस्य सहकारित्वम्'इति । ननु तत्र तत्रोदाहरणेषु लक्षणाव्यञ्जनयोरभिधाव्यञ्जनयोश्च कथमेकत्र समावेश इत्याशङ्क्य – तयोः तयोश्च न विरोध इत्याह — सकृदिति । कुत इत्यत्राह — अनन्यथासिद्धेति । अनन्यथासिद्धं व्यञ्जनं विना वृत्त्यन्तरासिद्धं यत् कार्यं प्रयोजनप्रतीतिरूपं तद्बलेन तत्सामर्थ्येन । 'पूर्वमुपपादितत्वात्'

---

पाठ. १. °मूले -- मधु. । २. 'लक्षणयोर्वा भवति' इत्येव -. मधु. । ३. ज्ञेयम् -- मधु. ।

काव्यप्रकाशकारस्तु सर्वेषामेतेषामर्थानां व्यञ्जकत्वमभिदधौ
“वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः।
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम्।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा॥ (का.प्र. ३.२१,२२)
इति।

व्यक्तिर्व्यञ्ज[1]नम्। अर्थस्य व्यञ्जकत्वे शब्दोऽपि सहकारितया व्यञ्जक एव। न हि शब्दस्पर्शं विनान्तरोपनीताना[2]मर्थानां व्यञ्जकत्वमवगतचरम्। प्रपञ्चितं चैतदुदाहरणमुखेन तेनैव स्वग्रन्थे॥

---

नौका

अत्र काव्यप्रकाशे ‘सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते’ (२.८) इत्युक्तम्। तन्मतमाह – काव्यप्रकाशकारस्त्विति। तदीयं वाक्यमुदाहरति– वक्तृबोद्धव्येति। वक्ता वक्तृविशेषः। बोद्धव्यो बोधयितव्यः, प्रतिपाद्यो

---

मन्दरः

‘प्रयोजनप्रतीतेरभिधालक्षणातात्पर्यवृत्त्यनिर्वर्तनीयत्वेन’इत्यादिना प्रतिज्ञाय- ‘अत्यर्जुन’ (सा. र. ४.४) इत्युदाहरणेऽभिधायकेषु, ‘वीर श्रीरघुराम’ (सा. र. ४.२) इत्यादिषु लक्षकेषु व्यञ्जनाव्यापारवत्त्वस्योक्तत्वात्। तरङ्गत्रय- प्रतिपादितांशं स्मारयति —- तदेवमिति। व्याख्याता निरूपिताः॥

काव्यप्रकाशकारेण तु — ‘अर्थव्यञ्जकतोच्यते’ (३.३६) इत्यर्थत्रयस्यापि व्यञ्जकत्वमुक्तमिति तल्लक्षणमाह — वक्तृबोद्धव्येति। बोद्धव्यो बोधयितव्यः। श्रोतेति यावत्। अयं सार्धकारिकार्थः —- वाक्यार्थज्ञानानन्तरं वक्तादिवैल-

---

पाठ. १. व्यन्जना -- मन्दर। २. °नीतानामेव -- मन्दर. ख.।

**नौका**

जन इत्यर्थः। अन्तर्णीतणिजर्थः प्रायेणायं [1]बुधिर्धातुः, यथा[2] 'एकश्रुति दूरात्सम्बुद्धौ' (पा. १.२.३३) इत्यत्र सम्बुद्धिशब्दे[3]। काकुः स्वरविकारः। वाक्यं वाक्यविशेषः। वाच्यं वाच्यार्थविशेषः। अन्यसन्निधिः जनान्तरसन्निकर्षः। प्रस्तावः प्रकरणम्। देशः विविक्तादिः[4]। तथा कालश्च। आदिशब्दात् अभिनयादिसङ्ग्रहः। एतैः सहकारिभिर्वैशिष्ट्यात् सहकारादर्थस्यापि व्यञ्जकत्वमस्त्येवेत्यर्थः। अत्र व्यक्तिशब्दार्थमाह — व्यक्तिर्व्यञ्जनमिति। एवमर्थव्यञ्जकत्वेऽपि तत्र शब्दस्यापि सहकारित्वमस्त्येवेति सोपपत्तिकमाह — अथस्येति। नन्वेतत् सर्वं कुत्र दृष्टम्? तत्राह— प्रपञ्चितं चेति। स्वग्रन्थे काव्यप्रकाशे॥

**मन्दरः**

क्षण्यज्ञानवतां प्रतिभावतामर्थान्तरप्रतीतिहेतुर्वाच्यलक्ष्यव्यङ्ग्यभेदभिन्नस्यार्थस्य यो व्यापारः सा व्यक्तिर्व्यञ्जनैव। अत्रावधारणेन व्याहृत्यादिव्यवच्छेदः; नाभिधादिनिरासः। यद्यर्थानां व्यञ्जकता न स्यात्, तर्हि वाक्यार्थप्रतीत्यनन्तरमर्थान्तरधीर्न स्यात्। ततस्तत्प्रतीतिहेतुर्व्यञ्जनैवेति निष्कर्षः। शब्दस्यापि व्यञ्जकत्वं विद्यत एवेत्याह — अर्थस्येति। तत्रोपपत्तिमाह — न हीति। मानान्तरोपनीतानां प्रत्यक्षादिप्रमाणप्राप्तानां नावगतचरं न ज्ञातपूर्वमेव। किन्तु शब्दप्रतिपादितानामर्थानामेवावगतमिति शब्दस्यापि व्यञ्जकत्वमस्त्येवेति भावः। वक्त्रादिवैशिष्ट्यज्ञानादर्थव्यञ्जकत्वं काव्यप्रकाशे द्रष्टव्यमित्याशयेनाह — प्रपञ्चितमिति। राजधानीविपणिविरचितस्वादुफलश्रवणमात्रेण[5] न कोऽपि तृप्यतीति अस्माभिस्तान्यत्र क्रमेण विलिख्यन्ते —

१. बूद्धि° – मातृका। २. यदा – मातृका। ३. °शब्दे काकुस्वरविकारः – मातृका। ४. विविक्तादितथा – मातृका। ५. °मात्रस्य – मातृका।

मन्दरः

वक्तृवैशिष्ट्यज्ञानस्य सहकारित्वं यथा—

'अइपिहुलं जलकुंभं [१]घेत्तूण समाम[२]दह्मि सहि तुरिअम् ।
[३]समसेअसलिलणी[४]सासणी[५]सहा [६]वीसमामि खणम् ॥'

(अतिपृथुलं जलकुम्भं गृहीत्वा समागताऽस्मि सखि ! त्वरितम् । श्रमस्वेदसलिलनिःश्वासनिःसहा विश्रमामि क्षणम् ॥) (का.प्र. ३.१)

इदमुपपतिना नदीतीरे सद्योभुक्तमुक्तायाः कस्याश्चिद् वचनम् ॥

अत्र वाच्यार्थेन तादृशवक्तृवैशिष्ट्यज्ञानवतां प्रतिभावतां चौर्यरतगोपनं व्यज्यते ॥

बोद्धव्यवैशिष्ट्यज्ञानस्य यथा —

"ओण्णिद्दं[७] दोब्बल्लं चिन्ता[८] अलसत्तणं [९]सणीससिअम् ।
मह मन्दइणीए किदे सहि तुह वि अहह परिहवइ ॥"

(औन्निद्र्यं दौर्बल्यं चिन्ताऽलसत्वं सनिःश्वसितम् ।
मम [१०]मन्दभागिन्याः कृते सखि त्वामप्यहह ! परिभवति ॥)
(का.प्र. ३.२)

इदं स्वनायिकाभिलाषिणीं दूतीं प्रति नायिकावचनम् । अत्र तादृग्दूतीरूपबोधयितव्यवैशिष्ट्यज्ञानवतां दूत्या नायकोपभोगो व्यज्यते ।

काकुवैशिष्ट्यज्ञानस्य यथा —

"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।

---

पाठ. घोत्तूण – मन्दर° । २. समाअदम्हि – मन्दर° । ३. समस्से° – मन्दरः ।
४-५-६. सर्वत्रापि पूर्वदीर्घस्य ह्रस्वत्वं सकारस्थ च द्वित्वं – मन्दर° ।
७-८-९. उण्णिद्दं, चिन्दा सणिसमसिअं, °भाग्यायाः – मन्दरपाठः ।

मन्दरः

विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥'' (वे. सं. १.११)

इदं सहदेवं प्रति संरब्धस्य भीमस्य वचनम्। खिद्यतेऽनेनेति खेदो मन्युस्तम्। अत्र 'मयि' इति 'कुरुषु' इति च पदद्वयं काकुस्थानम्। ततश्चोभयत्र प्रश्नमभिव्यज्य काकौ विश्रान्तायां तद्वैशिष्ट्यज्ञानवतां खिन्ने कोपस्यायुक्तत्वात् 'खिन्न' इतिपदार्थेन 'मयि कोपो न युक्तः' इत्ययमर्थः, तथा– 'अनेकापकारकारिषु कुरुषु कोपो युक्तः इत्ययमर्थश्च व्यज्यते।

वाक्यवैशिष्ट्यज्ञानस्य यथा —

''तइआ मह गण्डत्थल [1]णिहिदं दिठ्ठिं [2]णाणेसि अण्णत्तो।
एहि [3]सच्चेअ अहं [4]ते अ कवोलो[5] ण[6] सा दिठ्ठी ॥'' (का.प्र. ३.४)

[तदा मम गण्डस्थलनिहितां[7] दृष्टिं नानैषीर[8]न्यतः।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥]

इदं प्रत्यक्षदृष्टस्वकपोलप्रतिबिम्बितसखीसन्दर्शनोत्सुकं नायकं प्रति नायिकावचनम्। अत्र वाक्यवैशिष्ट्यज्ञानात् प्रकृतवाक्यार्थेन मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाभूत्, प्रचलितायां तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं तवेति व्यज्यते।

वाच्यवैशिष्ट्यज्ञानस्य यथा —

''उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरिततरुणीविभ्रमो नर्मदायाः।

१. णिमिदं का.द्य.°। २. ण णेसि – का.द्य.°। ३-४-५-६. सच्चे अहं, ते, कवोले न, मन्दरपाठाः। ७. निमग्नां – का.द्य.°। ८. रन्तत्र – का.द्य.°।

मन्दरः

किञ्चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥'' (का.प्र. ३.९)

इदं नायिकां प्रति सौन्दर्याभिमानिनो नायकस्य वचनम्। अत्र बहुविधवाच्यवैशिष्ट्याद् 'रतार्थं प्रविश'इति व्यज्यते।

अन्यसन्निधिवैशिष्ट्यज्ञानस्य यथा —

''[1]णोएइ अण्णद्द[2]मना अत्ता मं घरभरम्मि सअलम्मि।
खणमेत्तं जइ [3]संझाए [4]केवलं होइ ण होइ [5]वीसामो ॥''

[नोद[6]यत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले।
क्षणमात्रं यदि सन्ध्यायां [7]केवलं भवति न भवति विश्रामः ॥] (का.प्र. ३.६)

अत्र तटस्थं कामुकमुद्दिश्य कस्याश्चित् स्वैरिण्या वचनम्। अत्र तटस्थोपपतिसन्निधिवैशिष्ट्यज्ञानवतां प्रकृतवाक्यार्थेन 'सन्ध्या सङ्केतकालः' इति व्यज्यते।

प्रकरणज्ञानस्य यथा —

''सुब्बइ समाअ[8]मिस्सदि तुज्झ पिओ अज्ज [9]प्पहरमेत्तेण।
[10]एव्वं अ कित्ति चिठ्ठसि ता सहि सज्जेसु करणिज्जम् ॥''

[श्रूयते समागमिष्यति तव प्रियोऽत्र प्रहरमात्रेण।
एवमेव किमिति तिष्ठसि [11]तस्मात् सखि! सज्जय करणीयम् ॥] (का.प्र. ३.७)

इदं सखीं प्रति सखीवचनम्। अत्राभिसरणप्रवृत्तिप्रकरणज्ञानवतां प्रकृतवाक्यार्थेन 'अद्य उपपतिं प्रति अभिसरणनिवारणं व्यज्यते।

पाठ. णोल्लेइ, २. अणोल्लमणा, ३. संझाइ – इति काव्यप्रकाशे पठ्यन्ते। ४. न पठ्यते – काव्य.। ५. विस्समी – मन्दर°। ६. नुदत्यना° – काव्य°। ७. न पठ्यते – काव्य°। ८. समाग°, काव्य°। ९. पहर° – का°। १०. एमे – का°। ११. तत् – का°।

मन्दरः

देशवैशिष्ट्यज्ञानस्य यथा —

"अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥" (का.प्र. ३.८)

इदं सख्या निवारिताहमेकैवात्र स्थितेति समाश्वस्तां सखीं प्रति कस्याश्चिद् वचनम् । 'अस्मी'त्यहमर्थेऽव्ययम् अत्र वाच्यार्थः सखीमात्र-विषयः । अत एव 'सख्य' इति बहुवचननिर्देशः । व्यङ्ग्यार्थस्त्वसाधारण-सहचरीविषयः । तथा च एवंविधेन वाक्यार्थेन विविक्तदेशवैशिष्ट्यावगमात् प्रच्छन्नकामुकोऽत्र प्रेषणीय इति व्यज्यते ।

कालवैशिष्ट्यज्ञानस्य यथा —

"गुरुअणपरवसप्पिअ किं बणामि तुहं मन्दबाइणी अ अइम् ।
अज्ज प्पवासं वच्चसि वच्च सअं विआ मुणासि करणिज्जम् ॥" (का. प्र. ३.४)

([1]गुरुजनपरवशप्रिय किं भणामि [2]त्वां मन्दभागिनी [3]चाहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव [4]जानासि करणीयम् ॥')

अत्र गुरुजनपरवशेति विपरीतलक्षणा । ततश्च तत्पारवश्याभावेऽपि अद्य वसन्तकाले यदि व्रजसि तदाहं न भवामि, तव तु न जानामि गतमिति व्यज्यते । आदिशब्दसङ्गृहीतचेष्टावैशिष्ट्यज्ञानस्य यथा —

'द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।

---

पाठ. अस्थ प्राकृतपद्यं त्वित्थं पठ्यते काव्यप्रकाशे –
"गुरुअणदरवस पिअ किं भाणमि तुह मंदभाइणी अहकम् ।
अज्ज पवासं वच्चसि वच्च सअ जेव्व सुणसि करणिज्जम् ॥" इति
२. तव, ३. अहकम्, ४. श्रोष्वसि, इति काव्यप्रकाशपाठः ॥

मन्दरः

आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते ॥'' (का.प्र.३.१०)

अत्र चेष्टाभिः प्रच्छन्नकामुकविषयो वाचामगोचरोऽनुरागो व्यज्यते ।

एवमेव वक्त्रादीनां मिथो द्वयोर्योगे द्विकवैशिष्ट्यं त्रयाणां त्रिकवैशिष्ट्यमित्यादि ज्ञेयम् ।

तत्र द्विकवैशिष्ट्यज्ञानस्य यथा —

''[1]अत्ता तह्न णिमज्जदि एह्न अहं दिवस एव्व पुलोएसु ।
मा पहिअ रत्तिअन्धअ [2]सेज्जए मह णिगज्जसि हि ॥''
(ध्वन्या. प्रथम.)

[[2]श्वश्रूस्तत्र निषीदति अत्राहं दिवस एव विलोकय ।
मा पथिक रात्र्यन्ध(क) शय्यायामावयोः शयिष्यति ॥]

इदं कस्याश्चिद् विदग्धायाः प्रोषितभर्तृकायाः सञ्जातकामं शयनप्रदेशं प्रार्थयमानं पथिकं प्रति वचनम् । अत्र वाच्यार्थेन स्वैरिणीजारलक्षणवक्तृबोद्धव्यवैशिष्ट्यज्ञानवतां 'निःशङ्कं विहरिष्यसी'ति तदाकूतं व्यज्यते । वक्त्राद्यनेकज्ञानवैशिष्ट्यस्य यथा —

---

पाठ. १. सिज्जाए -- मातृका ।

1. पद्यमिदमित्थं पठ्यते --
अत्ता एत्थ णिमज्जइ एत्थ अहं, दिअसअं पलोएहि ।
मा पहिअ रत्ति अन्धअ सेज्जए मह णिमज्जसिहि ॥'' ध्वन्यालोके ।
पद्यमिदं तु हालकविरचितगाथासप्तशतीस्थम् । तत्र च–
''एत्थं णिमज्जइ अत्ता एत्थ अहं एत्थ परिअणो सअलो ।
यन्थिअ रत्तीअन्धअ मामह सअण णिमज्जहि सि ॥'' इति पठ्यते ॥
2. (श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय ।
मा पथिक रात्र्यन्ध(क) शय्यायामावयोः शयिष्ठाः ॥)'' ध्वन्या. ॥
गाथासप्तशत्यां (७.६७) तु --
(अत्र निमज्जति श्वश्रूरत्राहमत्र परिजनः सकलः ।
पथिक रात्र्यन्धक मावयोः शयने निमङ्क्ष्यसि ॥) इति ॥

मन्दरः

"दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वनमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥"

अत्र "वाच्यार्थेन प्रसिद्धातिचाराया वक्त्र्याः क्षणमिति कालस्य, एकाकिनीति वाच्यस्य, तद्वनमिति देशस्य, नीरन्ध्रास्तनुमित्यादिवाक्यस्य च वैशिष्ट्यज्ञानवतां-सङ्केतकालजिज्ञासुं कामुकं प्रति इदानीमेव तस्मिन् वने समागन्तव्यम् । तत्र नलग्रन्थिलेखनेनान्यथासिद्धिसम्भवान्नखक्षतादिकरणपूर्वकं यथेच्छमुपभोक्तुं शक्यत" इति व्यज्यते ।

एवं लक्ष्यव्यङ्ग्ययोरपि व्यञ्जकत्वमुदाहार्यम् ।
तत्र लक्ष्यस्य व्यञ्जकत्वे वक्त्रादिसहायो यथा –

"वत्स ! मा गच्छ सहसा हालिकस्य निवेशनम् ।
तत्र दृष्टिविषा कापि फणिन्यास्त इति श्रुतम् ॥"

अत्र हालिकबालिकायां फणिनीति लक्षणया निर्देशः । ततश्च मातुर्वक्त्र्याः, पुत्रस्य बोधयितव्यस्य तद्गेहं प्रत्यभिसरणप्रस्तावस्य च वैशिष्ट्यज्ञानवतां 'सर्वथा तस्याः परिहरणीयत्वं' व्यज्यते ।

व्यङ्ग्यस्य व्यञ्जकत्वे वक्त्रादिसहायो यथा —

'फलानि दिश भव्यानि निवेश्य मणिबन्धने ।
बिम्बोष्ठि, चुम्बनैरेवमालि, लालय मा शुकम् ॥'

अत्र बिम्बफलभ्रान्त्या शुकस्तवाधरं खण्डयिष्यतीति व्यङ्ग्यम् । तेन सख्या वक्त्र्या नायिकाया बोधयितव्यायाः शुकलालनप्रस्तावस्य बिम्बोष्ठीति वाच्यस्य च वैशिष्ट्यज्ञानवतां ते पत्युरन्यथाप्रतीतिर्न भविष्यतीति व्यज्यते ॥

अस्माभिस्तु तत्सर्वमर्थशक्तिमूलध्वनावन्तर्भवतीति न पृथक्-सम्भ्रमः क्रियते ॥

[1]इति श्रीमत्त्रिभुवनपवित्रहरित(स)गोत्रावतंसवाराणसीवंश-पद्माकरप्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्याय-पर्वतनाथसूरिपण्डितमण्डलेश्वरसूनुना श्रीयल्लमाम्बागर्भरत्नाकरपारि-जातेन निर्मलाचारपूतेन चतुर्दशविद्याविभूषणवता धर्मसङ्ख्यावता विरचिते श्रीमद्रघुकुलतिलकयशोघनसारसुरभिते साहित्यरत्नाकर-नामन्यलङ्कारशास्त्रे व्यञ्जकशब्दार्थवृत्तिनिरूपणं नाम चतुर्थ-स्तरङ्गः ॥

*आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मन -
स्त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरैरङ्गीकृताडम्बरः ।
तादृङ्निर्मलधर्मसूरिकवितासोल्लासकल्लोलिनी -
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः ॥

---

नौका

उपसंहारं क(रिष्यता) स्वेनानुदाहरणे बीजमाह – अस्माभिस्त्वति । 'पृथक्सम्भ्रमः' प्रत्येकोदाहरणप्रयत्न इत्यर्थः ॥

---

मन्दरः

नन्वत्रार्थव्यञ्जकत्वोदाहरणाद् 'एकेन चरितार्थत्वात्' इत्यादिनोक्तप्रतिज्ञाभङ्गः स्यादित्याशङ्क्य तत्सर्वमपि ध्वनितरङ्गोदाहरिष्यमाणार्थशक्तिमूलध्वनिष्वन्तर्भव-तीत्याह – अस्माभिस्त्वति । 'पृथक्सम्भ्रमः पृथगुदाहरणसंरम्भः' ॥

---

१. गद्यमिदं न पठ्यते -- मधु. । *पद्यमिदं न पठ्यते – ख०

धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
सञ्जातो यल्लमाम्बाकृतसुकृतफलं पर्वतेशस्य भाग्यम् ।
काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतु -
स्तस्यालङ्कारशास्त्रे रघुपतिविभुकेऽयं [1]तुरीयस्तरङ्गः ॥

नौका

धर्मान्तर्वाणीत्यादि । फलं फलभूतः । भाग्यं भाग्यस्वरूपः । तुर्यश्चतुर्थः। तरङ्गो जीयादिति शेषः । 'तुर्य' इत्यत्र – 'चतुरश्छयतावाद्यक्षरलोपश्च' (कात्या. वा. ९९) यत्प्रत्ययाद्यक्षरलोपौ । शिष्टं स्पष्टम् सुगमम् ॥

इति श्रीमत्त्रिभुवनपवित्रविचित्रचरित्रचर्लान्ववाय-
सुधासिन्धुसुधामयूखायमानश्रीमद्धर्मान्तर्वाणि-
पौत्रस्य श्रीसूरमाम्बासहचरश्रीलक्ष्मणसूरि-
सूनोः श्रीमद्वेङ्कटसूरिणः कृतौ साहित्य-
रत्नाकरव्याख्याने नौकाख्याने चतुर्थो-
व्यञ्जनातरङ्गः ॥

श्रीमल्लोहितगोत्रलक्ष्मणबुधः श्रीसूरमाम्बापतिः
श्रीमद्वेङ्कटनामसूरिणममुं प्रासूत सूनुं च यम् ।
नौकेषा महती च तस्य विवृतिः साहित्यरत्नाकर -
प्रोच्चैस्तुर्यतरङ्गरिङ्गणधियामालम्बनं स्याच्चिरम् ॥

इतीत्यादि ॥

मन्दरः

इति श्रीमल्लादिलक्ष्मणसूरिविरचिते साहित्यरत्नाकर-
व्याख्याने मन्दराख्याने चतुर्थः प्रस्थः ॥६॥
इति चतुर्थो व्यञ्जनातरङ्गः ॥

पाठ. १. यं च तुर्यस्तरङ्गः -- नौका ।

# साहित्यरत्नाकरे

## पञ्चमो गुणतरङ्गः

गुणनिरूपणे प्रसङ्गसङ्गतिः —

[1]तत्र ' सगुणालङ्कृती काव्यं पदार्थौ दोषवर्जितौ ' (सा.र. २.३०) इति काव्यसामान्यलक्षणे [2]पदार्थयोर्विशेष्यतया प्रधानत्वात् तरङ्गत्रयेण पदार्थौ न्यरूपिषाताम् । [3]तदनन्तरं तद्विशेषणानां गुणालङ्कारदोषाभावरूपाणां त्रयाणां मध्ये गुणालङ्कारयोर्भावरूप[4]त्वादादौ तयोरुपादानम् । तत्रापि रसे समवायवृत्त्योपस्कारकाणां गुणानां संयोगवृत्त्योपस्कारकेभ्योऽलङ्कारेभ्योऽन्तरङ्गत्वात् तेषामादावुद्देशः कृत [5]इत्युद्देशानुसारेण गुणास्तावदादौ निरूप्यन्ते ॥

---

### नौका

अथ वृत्तानुकथनपूर्वकं सङ्गतिं प्रदर्शयन् गुणनिरूपणं प्रतिजानीते— 'तत्र सगुणे'त्यादिना निरूप्यन्ते' इत्यन्तेन । तत्रेति सामान्यलक्षण इत्यनेनान्वितम् । वक्ष्यमाणलक्षणाभिप्रायेणाह — रसे समवायवृत्त्येत्यादि । इदं च स्फुटीकरिष्यत्युपरिष्टात् । उपस्कारकाणां शोभाहेतूनाम् ॥

---

### मन्दरः

इत्थं शब्दार्थौ निरूप्य सङ्गतिप्रतिपादनपूर्वकं गुणनिरूपणं प्रतिजानीते-तत्रेति । तत्र तस्मिन् । न्यरूपिषातां निरूपितावभूताम् । तत्रापीति । उपस्कारकाणां शोभावहानाम् । अन्तरङ्गत्वात् प्रधानत्वात् ॥

---

पाठ. 1. आदौ 'आस्थामन्दिरम्' इति पद्यं पठ्यते -- ख., 'तत्रे'ति न पठ्यते – मधु. । २. शब्दार्थयोः – मधु. । ३. अनन्तरं – मधु. । ४. °रूपतयादौ – मधु. । ५. इत्युद्देशक्रमेण – मधु., क्रमानुसारेण – ख. ।

**शब्दार्थयोः गुणालङ्कारवैशिष्ट्यसमर्थनम् –**

ननु 'सगुणालङ्कृती' इति विशेषणमनुपादेयमिति चेत्, कुतोऽनुपादेयता ? तत् किमव्यापकत्वाद् [1]अचारुताहेतुत्वाद् अन्यतरवैयर्थ्याद् वा ? नाद्यः; [2]निर्गुणालङ्कारशब्दार्थेभ्यो व्यावर्तकत्वात्। न द्वितीयः; तेषामुभयेषामपि कविता[3]कामिनी[4]कामनीयककारणतयोपादेयत्वे विवादाभावात्। उक्तं हि –

---

नौका

नन्वियं गुणनिरूपणप्रतिज्ञा अनुपपन्ना, काव्यसामान्यलक्षणे — 'सगुणालङ्कृती' इति विशेषणस्य प्रयोजनाभावेन अनुपादेयत्वादिति शङ्कते – ननु सगुणेति। तद् दूषयितुमनुपादेयत्वे हेतुं पृच्छति सिद्धान्ती[1], 'कुतोऽनुपादेयता' इति। हेतुं त्रेधा विकल्पयति — तत् किमिति। तत्राद्यं दूषयति– नाद्य इति। द्वितीयं दूषयति — न द्वितीय इति। उभयेषामपीति। गुणानामलङ्काराणां चेत्यर्थः। रामणीयकं शोभा। गुणालङ्कारयोश्चारुताहेतुतायां भोजराजसंवादमाह — उक्तं हीति। युवतेरिति। अलङ्कारविकल्पकल्पनाभिः

---

मन्दरः

ननु केषाञ्चिन्मते रमणीयार्थकशब्दस्यैव काव्यत्वाभ्युपगमेन अदोषयोः शब्दार्थयोरेव समग्रत्वात् किं गुणालङ्कारवैशिष्ट्यनेत्याशयेन शङ्कते–न्विति। नन्वित्यादिना चेदित्यन्तेन शङ्काग्रन्थः। 'कृत' इत्यादिना 'कृतकरत्वाभावेन द्वयोरप्युपादेयत्वं सिद्धम्' इत्यन्तेन परिहारग्रन्थः। आद्यं परिहरति – नाद्य इति। कृत इत्यत्राह — निर्गुणेति। अयं भावः — 'तस्य गुणालङ्काररहितयोः शब्दार्थयोः काव्यव्यवहारनिरासकवादावश्यकत्वम्' इति। द्वितीयं

---

पाठ. १. अचारुताया हेतुत्वात् – मधु.। २. 'निर्गुणालङ्कारेभ्यो' इत्येव – मधु.। ३. °कामिनीकमनीयताहेतुत्वे – मधु.। ४. °रामणीयक° – नौका.।

---

१. सिद्धान्तिमतानुपादेयतेति – मातृका°।

"युवतेरिव रूपमङ्ग ! काव्यं स्वदते शुद्धगुणं तदप्यतीव ।
विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः ॥
यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनाया
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते ॥"
इति । (काव्यालङ्कारसूत्रे ३.१.२)

---

**नौका**

अलङ्कारविशेषसृष्टिभिः विहितप्रणयं [1]सत् कृतसख्यं [2]सत्, तद्युक्तमित्यर्थः । अतीव स्वदते अत्यन्तं मनो हरतीत्यर्थः । एवमन्वयमुक्त्वा व्यतिरेकमाह– यदीत्यादि । वचो गुणेभ्यः च्युतं भवति[3] यदि तदेति[4] शेषः । तदा वपुरिव वपुःसदृशं [भवति] । तादृशं वपुरिव न मनोज्ञमित्यर्थः । किञ्च गुणशून्यं वचः समाश्रिता अलङ्कारा अपि यौवनशून्यदेहाश्रित[5]हारादिवन्न मनोज्ञा इत्याह– अपीति । जनदयितान्यपि जनमनोहराण्यपि दुर्भगत्वम् असौन्दर्यं संश्रयन्त इत्यर्थः ॥

---

**मन्दरः**

परिहरति — न द्वितीय इति । तत्र हेतुं प्रतिपादयति — तेषामिति । तत्रालङ्कारिकसम्मतिं दर्शयति — युवतेरिति । 'अङ्गे'त्यामन्त्रणे । शुद्धगुणं केवलगुणयुक्तम्, काव्यं युवतेस्तरुण्या रूपं कर्णपत्रकङ्कणहारकेयूराद्यलङ्कार- राहित्येऽपि मनोहरं सौन्दर्यमिव स्वदते । सहृदयेभ्य इति शेषः । तत् सगुणं काव्यं निरन्तराभिरलङ्कारविकल्पकल्पनाभिः उपमाद्यलङ्कारविशेषविच्छि- त्तिभिः विहितप्रणयं युक्तं सत् अतीव स्वदत इत्यन्वयः । व्यतिरेकेणाप्याह– यदीति । वचः कविवाक्यं वपुरिव भवतीत्यन्वयः । जनस्य दयितानि इष्टान्यपि अलङ्करणान्युपमाद्यलङ्काराः । निर्गुणकाव्याश्रयाणीनि भावः । दुर्भग- त्वम् अशोभावहत्वम् । 'इती'त्यस्य 'उक्तं हि' इति पूर्वेण सम्बन्धः ॥

---

१-२. सती – मातृका । ३, भवती – मातृका । ४. तदिति -- मातृका ।
५. °श्रिता° -- मातृका ।

तृतीयेऽपि[1] किमुभयोरभेदादन्यतरवैयर्थ्यम् ? कृतकरत्वाद्वा ? आद्येऽपि चारुताहेतुत्व[2]साम्यादभेदः ? परस्परव्यावर्तकधर्माभावाद् वा। नाद्यः, यत्किञ्चिद्धर्मसाम्येनाभेदे[3] सर्वस्याप्यभेद[4]प्रसङ्गः। न द्वितीयः, [5]असिद्धेः। तथाहि —

---

नौका

एवं विकल्पद्वयं दूषयित्वा — 'अन्यतरवैयर्थ्याद्वा' इति तृतीयविकल्पं दूषयति — तृतीये किमिति। उभयोः अलङ्कारगुणयोः। 'कृतकरत्वात्' इतरकृतप्रयोजनकारित्वादित्यर्थः। 'उभयोरभेदादन्यतरवैयर्थ्यम्' इति प्रथमविकल्पमपि द्वेधा विकल्पयति – [1]आद्येऽपीति। 'चारुताहेतुतासाम्यादभेदः' इति प्रथमविकल्पं निरस्यति — नाद्य इति। [2]तत्रापि प्रसक्तिं हेतुमाह— यत्किञ्चिदिति। अभेदप्रसङ्ग इति। पृथिवीत्वादियत्किञ्चिद्धर्मसाम्येन घटपटादीनामभेदः स्यादित्यर्थः। 'परस्परव्यावर्तकधर्माभावाद् [3]वा अभेदः' इति द्वितीयं (विकल्पं) दूषयति — न द्वितीय इति। असिद्धेरिति। व्यावर्तकधर्माभावोऽसिद्ध इत्यर्थः। इममेव हेतुं प्रपञ्चयति — तथा हीत्यादिना।

---

मन्दरः

तृतीयं द्वेधा विकल्प्य तत्राद्यमपि तथा विकल्प्य परिहरति — तृतीयेऽपीति। यत्किञ्चिदिति। 'अभेदे' अभेदाङ्गीकारे सतीत्यर्थः। अयं भावः- 'गुणालङ्कारयोश्चारुताहेतुत्वसाम्यादभेदाभ्युपगमे पार्थिवत्वसाम्याद् घटपटयोः, शृङ्गित्वसाम्याद् गोमहिषयोरप्यभेदप्रसङ्गात् तयोः तादात्म्यं न सिद्ध्यति' इति। असिद्धेरिति। अयमाशयः — गुणालङ्कारयोरन्योन्यव्यावर्तकधर्मसद्भावादभेदो

---

पाठ. १. न पठ्यते - नौका। २. हेतुसाधर्म्याद् - मधु.। ३. °नाभेदप्रतिपादने - मधु.। ४. °प्रसक्तेः - मधु.। ५. अप्रसिद्धेः - मधु.।

---

१. अन्येऽपीति – मातृका। २. तत्रापि प्रसक्ति – मातृका। ३. वा बिवि भावः। अभेद इति। द्वितीयं - मातृका।

[1]अत्र केचन भोजराजादयः – 'काव्यव्यवहारप्रवर्तका गुणाः तच्चारुताहेतवोऽलङ्काराः' इति व्यावर्तकधर्ममाहुः । [2]तन्नोपपद्यते । तत् किं सर्वे गुणास्तत्प्रवर्तकाः ? कतिपये वा ? नाद्यः; 'रीतिरात्मा काव्यस्य' (काव्या. सू. १.२.६) इति [3]हि तन्मतम् । रीतयश्च [4]गुणश्लिष्टवचनरचनात्मिकाः । ताश्च तिस्रः – गौडी,

---

**नौका**

वक्ष्यमाणस्याभिप्रेत[1]व्यावर्तकधर्मस्य दार्ढ्यार्थं भोजराजाद्यभिप्रेतं गुणालङ्कारव्यावर्तकधर्मं दूषयितुं तन्मतमनुभाषते — अत्र केचनेति । काव्यव्यवहारप्रवर्तकत्वं गुणसामान्यलक्षणम्, काव्यचारुताहेतुत्वमलङ्कार(सामान्य)लक्षणमिति तन्मतनिष्कर्षः । तन्मतं दूषयति — तन्नोपपद्यत इति । तत्र गुणलक्षणं [2]विकल्पयति — तत् किं सर्व इति । तत्राद्यं निरस्यति — नाद्य इति । अत्र हेतोर्वक्ष्यमाणस्याव्याप्तिरूपस्यासिद्धिवारणार्थं तन्मतमुपन्यस्यति – 'रीतिरात्मा' इत्यादिना 'इति हि स्थितिः' इत्यन्तेन । एवमुपन्यस्य परमते[3] अव्याप्तिमाह — तत्रेति । तस्मिन् सति, एवं सिद्धान्ते सतीत्यर्थः । अव्याप्तिरिति ।

---

**मन्दरः**

न सम्भवतीति । तर्हि तयोः किं व्यावर्तकमित्याकाङ्क्षायामाह — तथा हीति । वदिति । तद् भोजादिवचनम् । तन्मतं द्वेधा विकल्प्य तत्रानुपपत्तिं दर्शयति — तदिति । 'तत्' तर्हीत्यर्थः । आद्यं परिहरति — नाद्य इति । तत्र तन्मतप्रतिपादनपूर्वकं हेतुं प्रतिपादयति – रीतिरिति । तन्मतं तेषां

---

पाठ. १. न पठ्यते - मधु. । २. तन्न घटते - मधु. । ३. न पठ्यते - ख. ४. गुणविशिष्ट॰ - मधु. ।

---

१. ॰भिप्रेतस्यावर्तक॰ - मातृका । २. वर्णयति - मातृका । ३. परमतमव्याप्ति॰ - मातृका ।

वैदर्भी पाञ्चाली चेति। तत्र समग्रगुणा वैदर्भी, ओजःकान्तिमती गौडी, [1]माधुर्यसौकुमार्यधुर्या [2]पाञ्चालीरीतिरिति हि स्थितिः। [3]तत्र गुणसाकल्यस्य काव्यव्यवहारप्रवर्तकत्वे गौडीपाञ्चाल्योरव्याप्तिः। न द्वितीयः, अतिव्याप्तेः। यत्किञ्चिद्गुणसत्तामात्रेण यत्र कुत्रापि काव्यव्यवहारप्रसङ्गात्।

एवमलङ्कारलक्षणमपि दूषणीयम्॥

---

नौका

तथा च गौडीपाञ्चाल्योरपि काव्यात्मतया सर्वगुणाभावात् लक्षणमव्याप्तमिति भावः। 'कतिपय' इति द्वितीय(विकल्प)मतिव्या[1]प्त्या वारयति — न द्वितीय इति। 'अतिव्याप्तेरिति हेतुं विशदयति — यत्किञ्चिद्गुणेति। काव्यव्यवहारप्रसङ्गादिति। तथा च — [2]"अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः' इत्यादौ प्रसादप्रभृतियत्किञ्चिद्गुणसत्तामात्रेण काव्यव्य-

---

मन्दरः

भोजराजादीनां मतम्। अस्तु किं तत इत्यत्राह — रीतयश्चेति। तत्रेति। 'तत्र' तथा सतीत्यर्थः। गुणसाकल्यस्य सकलगुणानाम्। अयं भावः — 'समस्तगुणाः काव्यव्यवहारप्रवर्तकाश्चेत् काव्यात्मभूतयोः गुणद्वयोपेतयोश्च गौडीपाञ्चाल्योः तत्साकल्याभावेन अव्याप्तिरूपदोषापत्तेराद्यविकल्पोऽनुपपन्न' इति। द्वितीयं परिहरति — न द्वितीय इति। कुत इत्याह — अतिव्याप्तेरिति। कुतोऽतिव्याप्तिरित्यत्राह — यत्किञ्चिदिति। अयं भावः — 'अद्रावत्र

---

पाठ. १. ससौकुमार(र्य)माधुर्या – मधु.। २. 'पाञ्चालीति स्थितिः" इत्येव - मधु.। ३. तथा चात्र - मधु.।

---

१. °मव्याप्त्या - मातृका। २. 'आद्रावत्व प्रज्वलत्वग्निरुच्चैः प्राज्यः प्रोद्यन्नुज्ज्वलत्वेष धूमः' इति मातृका।

गुणालङ्कारसामान्यलक्षणे –

**वयं तु ब्रूमः –**

**समवायवृत्त्या रसोपस्कारकत्वं गुणसामान्यलक्षणम् ।**
**संयोगवृत्त्या रसोपस्कारकत्वमलङ्कारसामान्यलक्षणम् ॥**

---

**नौका**

वहारः स्यादिति भावः । एवं गुणलक्षणं दूषयित्वा अलङ्कारलक्षणेऽप्येतदतिदिशति — एवमिति । दूषणीयमिति । किं सर्वेऽलङ्काराः काव्यस्य चारुतामापादयन्ति; कतिपये वा ? नाद्यः, कुत्रापि सकलालङ्काराणामसम्भवेन चारुतैव काव्यस्य न सिद्ध्येत्[1] । न द्वितीयः, तथा च सति – 'चैत्र इव मैत्रो गच्छति' 'राजते भोजते कीर्तिः पुनः सन्यासिदन्तवत्' इत्यादावुपमालङ्कारसत्त्वात् सहृदयानां चारुतया काव्यव्यवहारः स्यादिति दूषणीयमिति भावः ॥

एवं परमतं दूषयित्वा स्वाभिप्रेतं गुणालङ्कारयोः व्यावर्तकधर्मं वक्तुं प्रतिजानीते – वयं तु ब्रूम इति । तत्र गुणलक्षणमाह – समवायेति । समवायसम्बन्धेन वृत्त्या वर्तनेन । तथा च काव्यात्मरससमवेतत्वे सति रसोत्कर्षा-[2]धायकधर्मत्वं गुणसामान्यलक्षणमित्यर्थः । अलङ्कारलक्षणमाह — संयोग-

---

**मन्दरः**

प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येव धूमः' इत्यादावोजःप्रभृतिगुणसद्भावेन काव्यव्यवहारप्रसङ्गात् कतिपयानां तत्प्रवर्तकत्वमप्यनुपपन्नमिति । एवमिति । तद्दूषणप्रकारस्तु किं सर्वेऽप्यलङ्कारास्तच्चारुताहेतवः ? कतिपये वा ? नाद्यः, तत्र तत्र कतिपयालङ्कारमात्रसद्भावेनाव्याप्तेः । न द्वितीयः, अतिव्याप्तेः । 'वह्नेः स्फुलिङ्ग इव भानुरयं चकास्ति' 'चण्डालैरिव युष्माभिः साहसं परमं कृतम्' इत्यादिषूपमादीनां तच्चारुताहेतुत्वप्रसङ्गादिति ॥

---

१. सिद्ध्येति - मातृका । २. दायकत्व॰ - मातृका ।

[1]समवायसंयोगपदाभ्यां गुणालङ्कारयोः परस्परव्यावृत्तिः सिद्धा। रसाः शृङ्गारादयो नव वक्ष्यमाणलक्षणाः। [2]तद्व्यतिरिक्तव्यतिरिक्तोपस्कारकत्वमिह लक्षणद्वये विवक्षितम्॥

---

**नौका**

त्येति। संयोगेन वृत्त्या, वर्तनेनेत्यर्थः। काव्याङ्गशब्दार्थसंयुक्तत्वे सति रसोत्कर्षहेतुत्वमलङ्कारलक्षणमित्यर्थः। अत्र संयोगसमवायपदयोः व्यावृत्तिमाह — समवायेति। व्यावृत्तिः सिद्धेति। काव्यात्मकरससमवेताः तदुत्कर्षहेतवो धर्माः गुणाः कथिता इति। तेनैवेदं व्याख्यातं च – 'आत्मनि शौर्यादय इव समवायवृत्त्या अङ्गिनि रसे स्थिताः उत्कर्षहेतवो भवन्ति माधुर्यादयो गुणाः। अलङ्कारास्तु हारादय इव कण्ठादीनां, संयोगवृत्त्या शब्दार्थरूपाणामङ्गानामतिशयमादधाना रसमुपस्कुर्वन्ति' इति। ननु – 'रसाः के'। इत्यपेक्षायामाह — रसा इति॥

अयं भावः तर्हि कथं व्यावृत्तिरित्याकाङ्क्षायामाह—वयमिति। समवायवृत्त्येति।

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥'

---

**मन्दरः**

आत्मन एव शौर्यादयो नाकारस्य यथा, तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम् (का. प्र. ८.६६) इति। 'उपस्कुर्वन्ति तं सन्त येऽङ्गद्वारेण जातु चित्। हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः।' ये वाच्यवाचकलक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनमुपस्कुर्वन्ति ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽप्युपकारका हारादय इवालङ्काराः। यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसिताः' (का. प्र. ८.६७) इति च काव्यप्रकाशकारवचनात् समवायस्थित्या माधुर्यादीनां संयोगस्थित्योपमादीनां च रसोपस्कारकत्वमित्युपस्कारकत्वतौल्येऽपि समवायसंयोगसम्बन्धाभ्यां व्यावृत्तेः सिद्धत्वात् परस्परव्या-

---

पाठ. एवं च समवाय° – मधु.। २. 'तदुपस्कारकत्वम्' इत्येव – मधु.।

गुणानां रसधर्मत्वव्यवस्थापनम् –

नन्वत्र सर्वेषां गुणानां रसोपस्कारकत्वेऽसम्भवः। तत्त-द्गुणानां तत्तद्रसप्रतीतिनियतेर्वक्ष्यमाणत्वात्। कतिपयानां त्वव्याप्तिरित्यात्मीय एव बाणो भवन्तं प्रहरतीति चेन्, मैवम्। रसातिरिक्ते गुणानामवर्तनेनातिव्याप्ते[1]रभावात्। न हि गुणा गुणिनं विहायान्यत्र समवयन्तीति [2]दृष्टचरम्॥

---

नौका

किं लब्धम्? तत्राप्यसम्भवातिव्याप्त्योः सत्वादित्याशयेन लक्षणं दूषयति — नन्वत्रेति। अतिव्याप्त्य[1]भावादिति। 'रसातिरिक्ते[2]गुणासत्त्व' रूपस्य हेतोर[3]सिद्धिं व्यतिरेकमुखेन परिहरति — न[3] हि गुणा इति न[4] हीति दृष्टमित्यनेनान्वितम्॥

---

मन्दरः

वर्तकधर्माभावात् तयोरभेद इति द्वितीयविकल्पोऽप्यनुपपन्न इति। नन्वस्तु रसोपस्कारकत्वम्; ते कति? किंस्वरूपा इत्यत्राह — रसा इति। 'विभावानुभावसात्त्विकव्यभिचारिसामग्रीसमुल्लसितः स्थायी भावो रसः' इत्यादिना रसतरङ्गवक्ष्यमाणलक्षणा इत्यर्थः। ननु कुत्रचिद् रसशब्दस्य स्थायिभावपरत्वाभ्युपगमात् भावस्यैव भाविनीं वृत्तिमाश्रित्य 'रस'शब्दव्यवहारयोग्यत्वाच्च भावोपस्कारकत्वमपि भवेदित्याशङ्क्य विवक्षितार्थमाह — तदिति। तेभ्यः शृङ्गारादिभ्यः व्यतिरिक्ता भावाः तेभ्यो व्यतिरिक्ताः शृङ्गारादयः तदुपस्कारकत्वमिति भावोपस्कारकत्ववारणाय तद्भिन्नभिन्नोपस्कारकत्वमत्र विवक्षितमिति॥

---

पाठ. १. अतिव्याप्त्यभावात् – नौका. मधु.। २. दृष्टम् – मधु. नौका.।

---

१, २, ३, ४. व्याप्त्यभावे रसातिरिक्तगुणाः सत्त्वरूपस्य हेतोः सिद्धिं व्यतिरेकमुखेन परिहरति – सह गुणा इति – मातृका। ५. सहेति – मातृका।

गुणानां वर्णधर्मत्वनिरासः

ननु माधुर्यादयो गुणा वर्णेषु प्रतीयन्ते। यत्र सुकुमार-वर्णविन्यासस्तत्र माधुर्यप्रतीतिः, [1]अन्यत्र नेत्यन्वयव्यतिरेकाभ्यां वर्णमात्र[2]धर्मत्वावगमात्। अतोऽसम्भव इति चेन्, मैवम्। तत्र

---

नौका

ननु रसोपस्कारकत्वमिति लक्षणं गुणेष्वस[1]म्भवि माधुर्यादिगुणाना-मन्वयव्यतिरेकाभ्यां वर्णधर्मत्वावगमेन[2] न रसधर्मत्वम्, वामनादिभिः वर्ण-

---

मन्दरः

नन्वयं प्रकारोऽपि दुष्ट एव। किं सर्वे गुणास्तदुपस्कारकाः? उत कतिपये वा? नाद्यः; असम्भवात्। न द्वितीयः; अतिव्याप्तेरित्याशयेन सोपहासमाक्षिपति – नन्विति। अयं भावः – माधुर्यस्य सम्भोगविप्रलम्भक-रुणशान्तरसाभिव्यञ्जकत्वम्, ओजसो वीररौद्रवीभत्सभयानकरसानुकूलत्वमित्या-दिनियमस्य वक्ष्यमाणत्वादाद्यविकल्पेऽसम्भवः। कतिपयानां रसोपस्कारक-त्वोक्तौ चित्रकाव्यगतेष्वपि तेषु तदुपस्कारकत्वप्रसङ्गात् द्वितीयविकल्पेऽतिव्या-प्तिश्चेति भवता प्रदर्शितः कुमार्गो भवन्तं बाधत इति चेदिति। परिहरति–– मैवमिति। तत्र हेतुमाह – रसातिरिक्त इति। अयं भावः – नीरसकाव्ये गुणाः स्थित्वा रसोपस्कारकाश्चेत् अतिव्याप्तिर्भवेत्, रसरहितस्थले गुणानामव-र्तनात् नातिव्याप्तिः'इति। तत्रोपपत्तिमाह – न हीति। अयं भावः – 'गुणगुणिनोः समवायः' इति नियमान्माधुर्यादीनां गुणानां गुणिनो रसान् विसृ-ज्यान्यत्र समवायो न दृष्ट इति। एतेन तत्तद्गुणानां तत्तद्रसप्रतीतिनियमादे-वासम्भवपरिहारः सिद्ध एवेत्यूह्यम्॥

---

पाठ. अतोऽत्र – मधु.। २. °मात्रधर्मत्वादिति चेन्न – इत्येव – मधु.।

---

१. °म्भववि – मातका। २. °गमेन रसधर्मत्वाश्यामतादिभिः वर्णधर्मत्वा°– मातृका।

**माधुर्यविशिष्टरसस्य [1]व्यङ्ग्यत्वेन व्यङ्ग्यगतमाधुर्यस्य व्यञ्जके [2]समारोप्य प्रतीतेः[3]। [4]तत्परिशीलनशालिनां तु रसिकाणां रससमवायि*तया तदुत्कर्षाधायिनो माधुर्यादयोऽनुभवपद्धतिमध्यासते।**

---

**नौका**

धर्मत्वाभिधानाच्चेत्याशङ्कते — ननु माधुर्यादय इति। माधुर्यादिगुणानां वर्णधर्मताप्रतीतेरन्यथोपपत्तिं कथयन् रसधर्मतां व्यवस्थापयति – मवमिति। तत्रेति। यत्र वर्णधर्मताप्रतीतिस्तत्रेत्यर्थः। समारोप्य प्रतीतेरिति। तथा च उपचारतया वर्णधर्मता[1]प्रतीतिरिति भावः। 'तत्परिशीलनशालिनां ? गुणविमर्शकानामित्यर्थः। रससमवायतयेति। रसः समवायो येषां तेषां भावस्तत्ता तया। रससमवेतत्वेनेत्यर्थः। अध्यासत[2] इति। तथा च– 'माधुर्यादयो रसधर्माः' तदुत्कर्षहेतवे सति तत्समवेतगुणत्वात्;यो यत्समवेतगुणः

---

**मन्दरः**

ननु माधुर्यादयो रसधर्मा इत्यनुपपन्नम्। तेषां वर्णमात्रधर्मत्वात् समवायसम्बन्धेन रसोपस्कारकत्वरूपगुणसामान्यलक्षणमसम्भवाक्रान्तमिति शङ्कते — नन्विति। परिहरति — मैवमिति। कुत इत्यत आह– तत्रेति। यत्र वर्णधर्मताप्रतीतिस्तत्रेत्यर्थः। माधुर्येति। अयमाशयः – 'विशिष्टरसस्य व्यङ्ग्यत्वेन वर्णानां व्यञ्जकत्वेन च व्यङ्ग्यगतमाधुर्यस्य व्यञ्जके वर्णसमूहे समारोपः। वस्तुतस्तु रसधर्मत्वमेवेत्यतो नासम्भवः' इति। तत्रानुभव एव प्रमाणमित्याशयेनाह — तत्परिशीलनेति। अत एवेति। रससमवायितया तदुत्कर्षाधायकत्वादेवेत्यर्थः। माधुर्यादीनां वर्णधर्मत्वभ्रान्ति

---

पाठ. १. व्यङ्ग्यत्वे माधुर्यव्यञ्जके समारोपणेन प्रतीतेः – मधु.। २. समारोप्यत्वप्रतीतेः – मन्दरः। ३. प्रतीतिः ख.। ४. अत एव तत्परिशीलन° – मधु.।
* °समवायतया – नौका.।

---

.१ धर्मप्रतीति° – मातृका। २. अध्यासन्निति – मातृका।

अत[1] एवैतेषां गुणत्वव्यवहारः। यद्येते रसशरीर[2]भूतवाच्यवाचक-धर्मा एव स्युः, तर्हि न गुणाः स्युः। न [3]ह्यात्मधर्माः शौर्यादय इव शरीरमात्रसंसर्गिणोऽलङ्कारा गुणत्वेन व्यपदिश्यन्ते। ते [4]हि हारादय इव कण्ठादिषु संयोगितयैव [5]शब्दार्थरूपेष्ववयवेषु उत्कर्षाधानद्वारा आत्मन इव रसस्यो[6]पस्कारिणः॥

---

### नौका

स तद्धर्म इति सामान्यमुखी व्याप्तिरिति- इदमनुमानं मानमत्रेति, अत्र तात्पर्यम्। अत्र हेतौ विशेष्यासिद्धिं [1]वारयति -- अत एवेति। व्यवहार इति। सर्वसम्प्रतिपन्न इति शेषः। अत्र विपक्षे हेतूच्छित्ति[2]बाधकतर्कमाह- यद्येत इति। वाच्यवा[3]चकधर्मा शब्दार्थधर्माः। तर्के इष्टापत्तिं व्यवहार-विरोधेन परिहरति — न [4]ह्यात्मधर्मा इत्यादिना। तर्हि कथं [5]व्यवह्रियन्ते! तत्राह – ते हीति। अलङ्कारा[6] हीत्यर्थः। संयोगितयैव संयुक्तत्वेनैव।

---

### मन्दरः

वारयति — यदीति। गुणाः गुणशब्दवाच्याः। काव्यात्मभूतरसधर्मत्वा-देव तेषां गुणत्वव्यवहार इति भावः। गुणालङ्कारवैलक्षण्यं विशदयति – न हीति। अयं भावः — 'यथा आत्मधर्माणां शौर्यादीनामेव गुणत्वव्यपदेशोऽनुरूपो न शरीरमात्रसंसर्गिणां हारादीनाम्, तथैव रसधर्माणां माधुर्यादीनामेव गुणत्वव्यपदेशः समुचितो, न वाच्यवाचकधर्माणामुपमादीनाम्'इति। ननु

---

पाठ. १. अतो ह्येषां – मधु.। २. °शरीरवाच्यवाचके धर्मा – मधु.। ३. न हि आत्यन्तिकधर्माः – मधु.। ४. न पठ्यते – मन्दर°। ५. शब्दार्थस्व-रूपेषु – मधु.। ६. उपस्कारकाः – मधु., उपकारिणः – नौका.।

---

१. हेतोः – मातृका। २. °च्छित्तिं बाधक° – मातृका। ३. वाच्यं वाचकं°–मातृका। ४. नन्वात्मधर्मा – मातृका°। ५. व्यवह्रियते तत्रापि हीति–मातृका°। ५. अलङ्कारेऽपि हीत्यर्थः – मातृका°।

गुणालङ्कारयोः पृथग्विवेकः –

**ननु गुणाः समवायवृत्त्या अङ्गिनि रसे स्थिताः। अलङ्कारास्तु संयोगवृत्त्या अङ्गमात्रगता इत्ययं विभागः कुत इति चेत्, [1]आत्मभूतरसं प्रति व्यवधानाव्यवधानाभ्यां[2] तथानुभवव्यवस्थापितत्वादिति ब्रूमः। माधुर्यादीनां वर्णैर्व्यज्यमानानां यदेवाव्यवधानेन**

---

नौका

'अवयवेषु' काव्यात्मभूतरसस्य अवयवेष्वित्यर्थः। उपकारिण इति। एवं च– अलङ्कारेषु [1]गुणत्वाव्यवहाराच्च तदुच्छित्तिरेवेष्टापत्तौ बाधिकेति हृदयम्॥

ननु माधुर्यादीनां समवायेन रसोपस्कारकत्वम्, अलङ्काराणामङ्गसंयुक्तत्वे[1]नेत्यत्र किं विनिगमकमिति शङ्कते –– ननु गुणा इति। व्यवधाना-

---

मन्दरः

कथं तर्हि रसशरीरभूतशब्दार्थगतानामुपमादीनां व्यवहितानां रसोपस्कारकत्वमित्यत्राह – त इति। ते उपमादयः। अयं भावः — यथा कण्ठाद्यवयवस्थितानां हारादीनां तत्तदवयवशोभातिशयसम्पादनद्वारेण आत्मोल्लासावहत्वं, तथा वाच्यवाचकगतानामुपमादीनां तदुत्कर्षाधानमुखेन रसोपस्कारकत्वमिति॥

ननु केयं विभागव्यवस्था? इत्याशङ्क्य – 'आत्मभूतरसम्'इत्यादिना अनुभवसिद्धेयमिति समाधत्ते––नन्विति। 'इती' विभाग इतीत्यर्थः। ननूभयेषामपि तेषां रसेषु समवायवृत्तित्वं संयोगवृत्तित्वं च किं रूपमित्यत्राह – माधुर्यादीनामिति। रहस्यमिति। आलङ्कारिकाकूतमित्यर्थः॥

---

पाठ. १. आत्मभूतं रसं – मधु.। २. '°धानाभ्यामिति ब्रूमः' इत्येव – मधु°॥

---

टिप्प. अङ्गसंयुक्तत्वेनेति। रसोपस्कारकत्वमित्यनुषज्यते।

---

१. गुणव्यवहाराच्च – मातृका।

रसपोषकत्वं तदेव[1] तेषां रसे समवायवृत्तित्वम्। उपमादीनां तु वाच्यवाचकोपस्कारकाणां यदेवाभिधादिव्यापारव्यवधानं, तदेव[2] तेषां संयोगवृत्तित्वमिति रहस्यम् ॥

औपचारिकोऽयं गुणेषु शब्दधर्मत्वव्यवहारः –

ननु यदि गुणा रसधर्मा एव न शब्दधर्माः, कथं[3] तर्हि तद्विशेषणत्वम्? असम्बन्धादिति चेत्, रसधर्माणामपि तेषां शब्देष्वारोपेण सम्बन्धोपपत्तेः। दृश्यते ह्यन्यधर्माणामेव [4]ह्रस्वत्वादीनामारोपितसंसर्गेण वर्णविशेषणत्वं [5]यथार्थव्यवहारजनकत्वं च।

---

**नौका**

व्यवधाने इति समाधत्ते — आत्मभूतेति। काव्यस्येत्यादिः। उक्तार्थे सिद्धान्तमाह — माधुर्यादीनामिति। अव्यवधानेन साक्षाद्वाचकोपस्कारेण ॥

माधुर्यादीन् स्वव्यञ्जकेषु वर्णेषु आरोप्य वर्णधर्मतां व्यवहरन्ति वामनादयः? तथा च – आरोपितसम्बन्धमात्रेण तेषां वर्णधर्मता, वस्तुतस्तु रसधर्मा एव त इति सिद्धान्तयति — रसधर्माणामपीति। अत्रानुकूलं दृष्टान्तान्तरमाह– किञ्च लोक इति। तत्रैव आकार एव। व्यवहारमेवाभिनयति — सोऽयमाकारः शूर इति। उक्तगुणानां रसधर्मत्वमुपसंहरति — युक्तमिति ॥

---

**मन्दरः**

ननु कथं तर्हि रसमात्रधर्माणां माधुर्यादीनां — 'सगुणालङ्कृती' (सा.र. २.२४) इति शब्दार्थविशेषणत्वमित्याशङ्क्य — औपचारिकोऽयं व्यवहार इति समाधत्ते — नन्विति। असम्बन्धात् शब्दार्थाभ्यां सह सम्बन्धाभावात्। अत्र दृष्टान्तमाह — दृश्यते हीति। अन्येषामचां धर्माः

---

पाठ. १. तदेतेषां – मधु.। २. तदेतेषां – मधु.। ३. तर्हि कथं – मधु.। ४. दाहादीना° – मधु.। ५. यथार्थं व्यवहार° – मधु.।

अतोऽन्यधर्माणामपि गुणानां वर्णविशेषणत्वं[1] न विरुद्ध्यते । किञ्च लोके पृथुलभुजत्वविपुलोरस्कत्वादिना [2]आकारविशेषेण [3]कस्यापि शौर्यमवगम्य — [4]अन्यत्राशूरेऽपि तमेवाकारमव[5]लोकयन्त:तत्रैव[6] शौर्यं व्यव[7]हरन्ति सरसाः — 'सोऽयमाकारः शूरः' इति ।

अतो व्यञ्जके व्यङ्ग्यधर्मारोपदर्शनान्माधुर्यादेर्वर्णनिष्ठताप्रतीते-रौपाधिकत्वाद् युक्तं — 'रससमवेता गुणाः' इति ॥

'कृतकरत्व'निरासः -

नापि '[8]कृतकरत्वात्'इति तृतीये[9] द्वितीयः । गुणकृतचारु-ताया अलङ्कार[10]कृतचारुताविलक्षणत्वेन [11]कृतकरत्वाभावात्

---

**नौका**

प्राथमिकम् — 'अन्यतरवैयर्थ्याद्वा' इति तृतीयविकल्पं द्वेधा विकल्प्य आद्यो दूषितः, कृतकरत्वाद्वेति द्वितीयोऽवशिष्टः, तं दूषयति – नापीति ।

---

**मन्दरः**

तेषाम् । वर्णविशेषणत्वं ककारादिवर्णधर्मत्वम् । यथार्थो वास्तविको यो व्यवहारः 'ककारस्य दीर्घो, गकारस्य दीर्घः' इत्यादिः तज्जनकत्वं तत्सम्पादकत्वं च । दृष्टान्तान्तरमाह — किञ्चेति । अत इति । व्यञ्जके आकारे व्यङ्ग्यभूतस्य धर्मस्य शौर्यस्यारोपदर्शनात् । 'औपाधिकत्वात्' माधुर्यादिगुणा-श्रयभूतरसद्वारकत्वादित्यर्थः । गुणालङ्काराणामेवं व्यावृतिसद्भावात् 'परस्परव्या-वर्तकधर्माभावादभेदः' इति द्वितीयविकल्पोऽप्यनुपपन्न इति पूर्वेण सम्बन्धः ॥

---

पाठ. १, '°बिशेषणत्वम्' इत्येव – मधु. । २. °विशेषणेन – मधु. । ३. कस्य-चनापि – मधु. । ४. अन्यत्र शूरे तमेवा° – मधु. । ५. °मवलोक्य – मधु. । ६. यत्र तत्रापि – मधु. । ७. व्यवहरन्ते – मधु. । ८. कृत-करणादिति – मधु. । ९. तृतीयेऽपि – मधु. । १०. °कृतवैलक्षण्येन' – इत्येव – मधु. । ११. °करणाभावात् – मधु. ।

तथा हि — अलङ्कारा [1]ह्यङ्गिनि रसे विद्यमाने तदङ्गभूतशब्दार्थ-वैचित्र्याधानद्वारेण प्राचुर्येण रसोपस्कारकाः। यथा हारादयः [2]कण्ठाद्यवयव[3]सौन्दर्यातिशयाधानद्वारेणा[4]ङ्गिनोऽतिशयमा[5]दधति। क्वचिदविद्यमाने रसे[6] शब्दार्थवैचित्री*जननमात्रेणापि पर्यवस्यन्ति। यथा चित्रे प्रतिमायां[7]वा अविद्यमानेऽप्यात्मनि हारादयः। न

---

**नौका**

कृतकरत्वादिति द्वितीय इत्यनेनान्वितम्। हेतुमाह — गुणकृतेति। उभय-चारुतयोर्वैलक्षण्यमिहोपपादयति — तथा हीत्यादिना। ननु — यत्र रसो नास्ति तत्रालङ्काराणां किं कार्यम्! तत्राह — क्वचिदिति। 'तत्र' काव्य इत्यर्थः। यत्र चित्रकाव्ये स्फुटप्रतीतिको रसोऽस्ति तत्रो[1]क्तिवैचित्र्यमात्रविश्रान्ता अलङ्कारा इत्यर्थः। तत्र दृष्टान्तमाह — यथा चित्र इति। आलेख्य इत्यर्थः। व्यङ्ग्येत्यादिः। 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः।(३.३.१७८) नन्वेवं चेदव्याप्तिः स्यादिति शङ्कते — अव्याप्तिरिति। तत्र रसाभावेन

---

**मन्दरः**

तृतीये द्वितीयं परिहरति — नापीति। कृतं करोतीति कृतकरः तस्य भावस्तत्त्वं तस्मात्। कुत इत्यत आह — गुणेति। उक्तमर्थं विशदयति — तथा हीत्यादिना। प्राचुर्येण अतिशयेन। यथेति। अङ्गिनः आत्मनः। क्वचिदिति। यथेति। हारादयः कण्ठाद्यवयवशोभावहा इत्यर्थः। तथेति पूर्वेण सम्बन्धः। यत्तदोर्नित्यसम्बन्धात्। नन्वविद्यमानेऽपि रसे शब्दार्थ-

---

पाठ. १. 'हि' न पठ्यते – मधु.। २. करचरणाद्यवयव – °मधु. ख.। ३. °सौन्द-र्याधानद्वारेणा° – मधु.। ४. °द्वारा – मधु.। ५. °मापादयन्ति – ख.। ६. रसे तत्र – नौका.। ७. प्रतिमायां विद्यमानेऽङ्गिनि वा – मधु.। * वैचित्र्य° – मधु.।

---

१. तत्रोक्त° – मातृका.।

चैतावता संयोगवृत्त्या रसोपस्कारकत्वरूपस्यालङ्कारसामान्यलक्षणस्य नीरसकाव्यगतेष्वलंकारेष्वव्याप्तिरा[1]शङ्कनीया । तथाविधस्थले रसशब्दस्य व्यङ्ग्यव्यञ्जकजातीययोरभेदा[2]ध्यवसायेन प्रवृत्तत्वात् । गुणाः पुनर्विद्यमाने रसे तं[3]पुष्णन्ति । अविद्यमाने तु स्वयमेव न विद्यन्ते । [4]रसपोषकत्वं तु[5] दूरतोऽपास्तम् ।

इत्थं गुणालङ्कारयोश्चारुताहेतु[6]तायां वैलक्षण्यात् कृतकरत्वाभावेन द्वयोरप्युपादेयत्वं सिद्धम् ॥

---

**नौका**

तदुपस्कारकत्वाभावादिति भावः । अव्याप्तिं परिहरति — तथाविधेति । चित्रकाव्य इत्यर्थः व्यङ्ग्येत्यादि । व्यङ्ग्यो रसः व्यञ्जकजातीयाः शब्दाः एतयोरे[1]वाभेदाध्यवसायतः शब्देष्वेव रसव्यवहारेण शब्दोपस्कारकाणामलङ्काराणां (र)सोपस्कारकत्वमक्षतमेवेति नाव्याप्तिरित्यर्थः । एवमलङ्काराणां रसोपस्कारकत्वमुपपाद्य गुणानां तदाह — गुणाः पुनरिति । एतावता प्रतिपादितमर्थं निगमयति — इत्थं गुणेति ॥

---

**मन्दरः**

वैचित्रीजननमात्रपर्यवासानोक्तौ चित्रकाव्यस्थालङ्कारेषु संयोगसम्बन्धेन रसोपस्कारकत्वमित्यलङ्कारसामान्यलक्षणमव्याप्तमित्याशङ्क्य समाधत्ते — न चेति । 'नीरसकाव्यगतेषु' — 'स्वच्छन्दोच्छलदच्छ' (काव्य प्र. १.४) इत्यादिचित्रकाव्यस्थितेष्वित्यर्थः । कुत इत्यत आह – तथाविधेति । व्यङ्ग्यो रसः

---

पाठ. १. शङ्कनीया – ख. । २. अभेदेन – मधु. । ३. न पठ्यते – मधु. । ४. अन्यथा स्वयमेव – मधु. । ५. इत्युभयपोषकत्वं – मधु. । ६. न पठ्यते – मधु. ।

---

१. एतयोरिव भेद० – मातृका. ः

गुणसङ्ख्याने मतवैविध्यम् –

काव्यप्रकाशकाराद्यास्त्रीन् गुणान् पर्यजीगणन् ।
तांश्चान्यान् सप्त भोजाद्यास्तांश्चतुर्दश चापरे ॥

[1]"माधुर्यौजःप्रसादास्त्रय एव गुणाः" इति काव्यप्रकाशकारादयः प्राहुः । तांश्चा[2]न्यानपि श्लेषसौकुमार्यार्थव्यक्तिसमतौदार्यकान्तिसमाधीन् सप्त भोजराजादयः[3] । [4]तान् दश चान्यांश्चतुर्दश विद्यानाथादयः ॥

---

**नौका**

इत्थं गुणानामावश्यकत्वेन निरूपणीयत्वे स्थिते तत्र वादिविप्रतिपत्तिं श्लोकतो निबध्नाति –– काव्यप्रकाशकाराद्या इति ॥

तत्तन्मतेषु के ते गुणा इत्यपेक्षायां तान् विशदयति — माधुर्येत्यादिना । भोजराजादय इति । तथा च तन्मते दश गुणा इति ज्ञेयम् । विद्यानाथादिमते श्लेषा[1]दिगत्यन्ताश्चतुर्विंशतिर्गुणा इति ज्ञेयम् ॥

---

**मन्दरः**

व्यञ्जकजातीयः शब्दोऽर्थश्च तयोः । अयं भावः — नीरसकाव्यगतालङ्कारेषु व्यञ्जकजातीयोपस्कारकत्वस्य विद्यमानत्वेन व्यङ्ग्यव्यञ्जकजातीययोरभेदसम्भावनया व्यङ्ग्योपस्कारकत्वस्यापि विद्यमानत्वान्नाव्याप्तिरिति । गुणेष्वने[2]वम्भाव इत्याह — गुणा इति । इत्थमिति । अयं भावः — गुणालङ्कारकृतयोश्चारुतयोर्विलक्षणत्वेन नान्यतरवैयर्थ्यमिति ॥

---

पाठ. १. तथाहि माधुर्यौ° – मधु. । २. एतांश्च – मधु. । ३. प्राहु:' इत्यधिकम् – मधु. । ४. 'एतान् चतुर्दश चान्यान् एवं चतुर्विंशतिगुणान् विद्यानाथादयः प्रोचुः' – इति – मधु. ।

---

१. श्लेषाद्या° – मातृका. । २. °ष्वनैवम्भाव – मातृका ।

गुणाः –

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वं तथा कान्तिरुदात्तता ॥

ओजः सुशब्दता प्रेय और्जित्यमथ विस्तरः ।
समाधिः सौक्ष्म्यगाम्भीर्ये संक्षेपो भाविकं तथा ॥

सम्मितत्वं तथा प्रौढिरुक्ती रीतिस्तथा गतिः ॥

इति ॥

तत्र माधुर्यादयस्त्रयः सर्व[1]सम्प्रतिपन्नाः ॥

---

नौका

तत्र काव्यप्रकाशकृन्मतं सिद्धान्तयितुं गुणमये सम्प्रतिपत्तिमाह – तत्र माधुर्यादय इति ॥

तत्रादौ माधुर्यं लक्षयति — आनन्दनिष्यन्दित्वमिति । आह्ला[1]दैकमयत्वमित्यर्थः । एतस्य व्यञ्जक[2]माह — तस्य प्राचुर्येणेति । पृथ[3]गिति । पृथक्पदता दीर्घसमासाभाव इति वामनः[1] । एतच्च शृङ्गारकरुणशान्तानां धर्म इत्याह – इदं चेति ॥

---

मन्दरः

तस्माद् गुणालङ्कारयोर्द्वयोरप्यावश्यकत्वेन निरूपणीयत्वे सत्युद्देशानुसारेणादौ गुणान् निरूपयितुं मतभेदेनाह – – 'काव्यप्रकाशकाराद्याः' इति ॥

---

पाठ. १. °प्रतिपाद्यः – मधु. ।

---

१. आहारैक° – मातृका. । २. °मिह – मातृका । ३. पृथक् पृथक्पदता – मातृका. – मधु. ।

---

टिप्प. 1. वामन इति । 'पृथक् पदानि यस्य पृथक्पदः तस्य भावः पृथक्पदत्वम् । समासदैर्घ्यनिवृत्तिपरं चैतत्" (का. सू. ३.१.२०) इति तेनोक्तत्वादिति भावः ।

१. माधुर्यम् -

आनन्द[1]निष्यन्दित्वं माधुर्यम्। तस्य प्राचुर्येण [2]पृथक्पद-तालक्षणः शब्दधर्मो[3] व्यञ्जकः। इदं च सम्भोगविप्रलम्भकरुण-शान्तानुरूपम्॥

२. ओजः -

ओजः [1]पुनर्दीप्त्या[2]त्मक[3]चेतोविस्तारहेतुः। [4]तद्व्यञ्जकं समासभूयस्त्वम्। वीररौद्रबीभत्सभयानकेषु चैतत् प्रयोज्यम्॥

---

नौका

ओजो लक्षयति — ओज इति। दीप्तिः प्रज्वलनम्। तदा[1]त्मको यश्चेतोविस्तारः चित्तविकारः, तत्कारणमित्यर्थः। अत्र दीप्त्यात्मकचेतो-विस्तारहेतुरिति पाठः। दीप्त्यात्मकं चेतो[2]विस्तारहेतुरिति तु प्रामादिकः पाठः। एतस्य दीर्घसमासत्वं व्यञ्जकमित्याह — तद्व्यञ्जकमिति। एतस्या[3]-श्रयान् रसानाह — वीररौद्रेति॥

---

मन्दरः

बहुसम्मतत्वादादौ काव्यप्रकाशकृन्मतानुसारेण माधुर्यादीनां त्रयाणामपि क्रमेण लक्षणोदाहरणान्याह — आनन्दनिष्यन्दित्वमिति। रचनावैचित्र्यप्रयु-क्तानन्दवाहित्वमित्यर्थः। तत् केन व्यज्यत इत्यत्राह — तस्येति। किमा-श्रयं तदित्यत्राह — इदं चेति॥

---

पाठ. १. °निस्पन्दित्वं – मधु.। २. °पृथक्पृथक्पदलक्षणः – मधु.। ३. धर्म-स्तस्य व्यञ्जकः – मधु.। ४. पुनः पुन° – मधु.।

---

१. तदात्मकं यच्चेतो° – मातृका.। २. चेतोविस्तारा तु – मातृका.। ३. एतस्याः श्रेयान् – मातृका.।

३. प्रसाद :–

यश्चित्तं ह्यश्रुतेऽह्नाय शुष्केन्धनमिवानलः ।
स प्रसादो मतः सर्वरससाधारणस्थितिः ॥
[1]तस्य प्रसिद्धार्थत्वं व्यञ्जकम् ॥

१. माधुर्यस्योदाहरणम् :–

**माधुर्यं यथा —**

---

नौका

प्रसादं लक्षयति — य इति । रौद्राद्यभिप्राये[1]णेदम् । शृङ्गारादिषु[2] तु स्वच्छाम्बुवदिति द्रष्टव्यम् । अत एवोक्तं काव्यप्रकाशे (८.७०) –

'शुष्केन्धनाग्निवत् स्वच्छजलवत् [3]सहसैव यः ।
व्याप्नोत्य[4]न्यत् प्रसादोऽसौ सर्वत्र [5]विहितस्थितिः ॥

इति । तत्र –– [6]'अन्य'दित्यनेन चित्तमुच्यते । एतस्य व्यञ्जकमाह– तस्येति । प्रसादस्येत्यर्थः ॥

---

मन्दरः

ओजो लक्षयति – ओज इति । दीप्त्यात्मकः समासभूयस्त्वप्रयुक्त-सावधानतारूपो यश्चेतोविस्तारः तस्य हेतुः ॥

प्रसादं लक्षयति — य इति । स्पष्टम् ॥

---

पाठ. १. "प्रसिद्धार्थकशब्दः तस्य व्यञ्जकः" – मधु. ।

---

१. °भिप्रायेण' इत्येव – मातृका. । २. °दिषु स्व. . . बुवदिति – मातृका । ३. समासैव – मातृका. । ४. °त्यन्यप्रसादो – मातृका. । ५. सर्वत्र हितस्थितिः– मातृका. । ६. अक्र° – मातृका. ।

रामेऽभिमुखे सीता [1]व्रीडाद् विमुखी [2]तमेव मणिभित्तौ ।
[3]दृष्ट्वा ततोऽपि विमुखी समन्दहासं प्रियेण परिरेभे ॥१॥

२. ओजस उदाहरणम् –

ओजो यथा —

शुम्भच्छुण्डालशैलाविरलपरिगलद्दानधारा[4]झराणि
भ्राम्यत्कूजद्रथाङ्गान्यसुरहरियुतान्युग्रखड्गचाहृतानि ।

---

**नौका**

एतांस्त्रीन् क्रमेणोदाहरति — माधुर्यं यथेत्यादिना ॥

राम इति । परिरेभे आलिङ्गिता । परिरम्भ इति पाठस्तु प्रामादिकः । अत्र सम्भोगशृङ्गारो रसः । सर्वेषां पृथक्पृथक्पदत्वान्माधुर्यं गुणः । इदमार्या-वृत्तम् । लक्षणं तूक्तम् ॥१॥

ओज उदाहरति – शुम्भदिति । [1]शुम्भन्तः शोभमानाः । 'शुभ शुम्भ दीप्तौ'[1] । (धा.पा. १३२२-२३) ये शुण्डाला गजाः त एव शैलाः ।

---

**मन्दरः**

माधुर्यमुदाहरति — राम इति । परिरेभे परिरब्धा । अत्र सम्भोग-शृङ्गारो रसः । पृथक्पदत्वप्रयुक्ताह्लादत्वं चास्तीति माधुर्यम् ॥१॥

---

पाठ. व्रीडाविमुखी – मधु. ख. । २. तथाऽप्यहो सुमुखी – मधु. । ३. "दृष्ट्वा स्वाभरणमणौ रमणसहस्रं प्रियेण परिरेभे" इत्युत्तरार्धमेव भिद्यते – मधु. । ४. °धराणि – मधु. ।

---

टिप्प. 1- मतभेदेन दीप्त्यर्थकत्वमप्यनयोरिति ज्ञेयम् । उक्तं च सिद्धान्तकौमु-द्याम् – 'शुभ शुम्भ भाषणे । भासने इत्येके' इति ।

---

१. शुम्भवः – मातृका. ।

आकर्णाकृष्टचापच्युतनिबिडतरोच्चण्डकाण्डप्रकाण्ड —
ज्वालामालाकरालो दहति रघुशिखी वैरिसेनावनानि ॥२॥

प्रसादस्योदाहरणम् -

**प्रसादो यथा —**

---

नौका

[1]तेभ्य इत्यादि स्पष्टम्। रथाङ्गानि[2] चक्राणि चक्रवाकपक्षिविशेषाश्च। 'कोक[3]श्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः (२.५.२२)। असुरा एव हरयः सिंहाः तैर्युतानि। खङ्गिनो मृगविशेषाः आयुधधराश्च। काण्डप्रकाण्डाः बाणसङ्घाः त एव ज्वालामालाः ताभिः करालो भीषणः। अत्र समासदैर्घ्याद् ओजो गुणः। रसस्तु भयानक इति ज्ञेयम् ॥२॥

---

मन्दरः

ओज उदाहरति — शुम्भदिति। आकर्णकृष्टात् चापात् च्युताः निबिडतरा उच्चण्डाश्च ये काण्डप्रकाण्डा बाणश्रेष्ठास्त एव ज्वालामालास्ताभिः करालो भयङ्करः रघू राघव एव शिखी दावाग्निः। शुम्भन्तः शोभमानाः शुण्डाला एव शैलाः तेभ्यः अविरलं यथा तथा परिगलन्त्यो दानधारा एव झराः प्रवाहा येषु तानि। भ्राम्यन्ति कूजन्ति च रथाङ्गानि चक्राण्येव भ्राम्यत्कूजद्रथाङ्गाः तादृग्विधचक्रवाका येषु तानि। असुरा एव हरयः सिंहाः तैर्युतानि। उग्राः खङ्गिनःखङ्गधरा एव तादृशा मृगविशेषास्तैरावृतानि। वैरिसेना रावणसैन्यान्येव वनानि दहति। अत्र समस्तवस्तुविषयं सावयवं रूपकम्। रौद्रो रसः। समासभूयस्त्वं चास्तीति समन्वयः ॥२॥

---

१. तेष्वित्यादिः - मातृका। २. चक्रवाकपक्षिविशेषा चक्राणि - मातृका
३. '-चक्राङ्गचाः सारसो हंसः" - मातृका।

चरन्तमम्बरे दृष्ट्वा रामेण प्रेरितं खगम् ।
अहीना वैरिणो भीत्या मुञ्चन्ति न-गराण्यहो ॥३॥

न हि गुणत्वं भावत्वनियतम् –

एते त्रयो भावरूपाः । इतरेषु[1] केचिद् भावाः । केचि-द्भावरूपाः । उभयेषामपि गुणत्वं युक्तम् । न हि काणादतन्त्र

---

नौका

प्रसादमाह — चरन्तमिति । खगं गारुडास्त्रम् । अहीनाः श्रेष्ठाः वैरिणो नगराणि स्वस्वपुराणि भीत्या मुञ्चन्ति । वैरिणः शत्रवः, अहीनां सर्पाणाम् इनाः श्रेष्ठाः सर्पश्रेष्ठा गराणि विषाणि न मुञ्चन्तीति ध्वन्यते । अहो आश्चर्यम् । अत एवात्राद्भुतो रसः । [1]अत्र प्रसिद्धार्थत्वात् प्रसादो गुणः ॥३॥

अथ केषाञ्चिद् गुणानामभावरूपतां वक्तुमुदाहृतगुणत्रयस्य भावरूपता-माह — एत इति । इतरेषु 'माधुर्यमोजःप्रसादश्च'इत्येतत्त्रयातिरिक्तेषु । केचिदभावरूपा इति । दोषाभावरूपा इत्यर्थः । उक्तं च विद्यानाथेन[1]–

---

मन्दरः

प्रसादमुदाहरति – चरन्तमिति । खगं बाणम् । 'अजिह्मगखगाशुगाः' इत्यमरः (२.४.८७) । अहीनाः महान्तः वैरिणः शत्रवः । 'अहो' बाणदर्शन-मात्रेण ते स्वपुराणि परित्यजन्तीत्याश्चर्यम् । आकाशे भ्रमन्तं गरुडं दृष्ट्वा महोरगा गरलानि न मुञ्चन्तीति व्यज्यते । अत्र केवलश्लिष्टशब्दनिबन्धन-पररूपरितम् । भयानको रसः । प्रसिद्धार्थपदप्रयोगश्चास्तीति प्रसादः ॥३॥

---

पाठ. १. केचिच्च – मधु. ।

---

१. अन्ये – मातृका ।

---

टिप्प. 1. प्रतपरुद्रीये गुणप्रकरण इत्यर्थः ।

इव गुणत्वं भावत्वनियतमलङ्कारशास्त्रे[1] सर्वसम्प्रतिपन्नम्। [2]उपस्कारकत्वमात्रेण गुणत्ववादात्॥

---

**नौका**

'ये[1] तु दोषाभावतया गुणत्वमिच्छन्ति, तेषामेव सौकुमार्यादयो गुणत्वेन सम्मताः' (प्र.रु. ६.१) इति। तत्र श्रुतिकटुदोषाभावः सौकुमार्यम्। ग्राम्यदोषाभावः कान्तिः। न्यूनाधिक(पद)दोषाभावः सम्मितत्वम्। अनुचितार्थनिरास उदात्तता। विसन्धिनिरास औजित्यम्। पतत्प्रकर्षाभावो रीतिः। क्लिष्टनिरासः प्रसादः। अश्लीलाभाव उक्तिः[2]। च्युतसंस्कृत्यभावः सौशब्द्यम्। क्रमभङ्गाभावः समता। परुषदोषाभावः प्रेयः' इत्येते अभावरूपाः। एतद्भिन्नास्तु भावरूपा इति विवेकः। नन्वेतेषामभावरूपत्वे कथं गुणत्वं तस्य भावत्वनियतत्वादित्यत आह — उभयेषामपीति। गुणत्वं भावत्वनियतमेव दर्शनान्तरे; अस्मन्मते तु न तथेत्याह — न हीति। तर्हि किंनिबन्धनं गुणत्वं तत्राह — उपस्कारकत्वमात्रेणेति। रसोपस्कारकत्वेनेत्यर्थः॥

---

**मन्दरः**

अथ गुणानां भावाभावरूपताप्रतिपादनपूर्वकं केषाञ्चित् केषुचिदन्तर्भावं दर्शयति — एत इति। त्रयो माधुर्यौजःप्रसादाः। इतरेष्विति। केचिद् गाम्भीर्यादयः भावरूपाः। स्वत एवोत्कर्षहेतुत्वादिति भावः। केचिदिति। केचित् सौकुमार्यादयः। अभावरूपाः दोषाभावस्वरूपा इत्यर्थः। यथाह विद्यानाथः — केषाञ्चित् दोषपरिहारकत्वेन गुणत्वम्। केषाञ्चित् स्वत एवोत्कर्षहेतुत्वाद् गुणत्वम्' (प्र.रु. ६.१) इति। 'श्रुतिकटुरूपदोषनिराकरणाय सौकुमार्यं सम्मतम्। ग्राम्यदोषनिराकरणाय कान्तिः स्वीकृता।

---

पाठ. १. शास्त्रेषु प्रतिपन्नम् – मधु.। २. उपस्कारमात्रेणैव गुणत्वात् – मधु.।

---

१. एतद्दोषा° – मातृका। २. पुष्टिः – मातृका।

अर्थव्यक्तेः प्रसादेऽन्तर्भावः –

तत्रार्थप्रतिपादने वाक्यस्य निरा[1]काङ्क्षत्वेन परिपूर्तौ [2]झटित्यवबोधकत्वमर्थव्यक्तिः ॥　इयं प्रसिद्धार्थव[3]स्तुरूपात् प्रसादान्नातिरिच्यते ॥

---

नौका

अथ केषाञ्चिद् गुणानामुक्तेष्वन्तर्भावं तत्तद्गुणस्वरूपकथनपूर्वकमाचष्टे- [1]तत्रार्थेत्यादिना ।　तेषु मध्य इत्यर्थः ॥

---

मन्दरः

अपुष्टार्थनिराकरणायार्थव्यक्तिर्मता ।　न्यूनाधिकपदनिराकरणाय सम्मतत्वं मतम् ।　अनुचितार्थनिराकरणार्थमुदात्तता स्वीकृता ।　विसन्धिनिराकणायौर्जित्यं मतम् ।　पतत्प्रकर्षनिराकरणाय रीतिरिष्टा ।　क्लिष्टपरिहाराय प्रसादो मतः ।　अश्लीलपरिहारार्थमुक्तिः स्वीकृता ।　च्युतसंस्कारपरिहारार्थं सौशब्दयमिष्टम् ।　प्रक्रमभङ्गनिराकरणाय समता मता ।　परुषदोषनिवृत्त्यर्थं प्रेयो मतम्' (प्र.रु. ६.१) इति च ।　नन्वस्तु भावरूपाणां गुणत्वम्; दोषाभावप्रयोजनकत्वात् कथमभावरूपाणामित्याशङ्क्य द्वयानामपि गुणत्वमालङ्कारिकैरभ्युपगतमित्याह — उभयेषामिति ।　ननु काणादैर्भावरूपाणां रूपादीनामेव गुणत्वमुक्तम्, नाभावरूपाणामित्याशङ्क्याह — न हीति ।　भावत्वनियतं भावत्वव्याप्यम् ।　सर्वसम्प्रतिपन्नं न हीत्यन्वयः ।　तर्ह्यभावरूपाणां कुतो गुणत्वमित्यत्राह — उपस्कारकत्वमात्रेणेति ।　शब्दार्थोपस्कारकत्वेनैवेत्यर्थः ॥

अथ नवकपक्षानुसारेणोदाहर्तुं श्लेषादीनां पञ्चदशगुणानां केषुचिदन्तर्भावमाह — तत्रेति 'प्रसादान्नातिरिच्यते' प्रसादेऽन्तर्भवतीति भावः ॥

---

पाठ.　१. निराकाङ्क्षचणत्वेन – मातृका ।　२. झडित्यव° – मन्दर. ।　३ बस्त्वरूपा° – मधु. ।

---

१. तत्राबेत्या° – मातृका ।

**औदार्योदात्ततौर्जित्यानि ओजस्यन्तर्भवन्ति –**

विकटाक्षरबन्धत्वमौदार्यम् ॥
श्लाघ्यविशेषणयोग उदात्तता ॥
गाढबन्धत्वमौर्जित्यम् ॥
एते त्रय ओजस्यन्तर्भूताः ॥

**प्रौढ्यादयः –**

१. परिपाकवत्युक्तिः प्रौढिः ॥
२. विदग्ध[1]भणितिरुक्तिः ॥
३. संक्षेपेणार्थस्योक्तिः संक्षेपः ॥
४. अनेकार्थ[2]शब्दोक्तिः सौक्ष्म्यम् ॥
५. उक्तार्थसमर्थनोक्तिर्विस्तरः ॥
६. यावदर्थपदोक्तिः सम्मितत्वम् ॥
७. प्रियतरवस्तूक्तिः [3]प्रेयः ॥
८. आरोहावरोहाभ्यामतिरम्योक्तिर्गतिः ॥
९. अवैषम्येण[4] पादचतुष्टयेऽप्यर्थकथनं समता ॥

---

**नौका**

औदार्यौर्जित्योदात्ततानां तिसृणामोजस्यन्तर्भावं वक्तुं तेषां क्रमेण स्वरूप-याह — विकटेत्यादिना । "विकटाक्षरबन्धत्वं च नर्तन(बुद्धयुत्पादक)पद-विन्यासः' (प्रता. गुण.) इति कुमारस्वामी[1] । श्लाघ्यैः तत्तद्वर्णनीय[2]समुचितैः

---

पाठ. १. फणिति°–नौका. । २. °शब्दस्योक्तिः–मधु. । ३. प्रेयान्–मधु. ख. । ४. अवैषम्येन – मन्दर. ख. ।

---

१. °स्वामिश्लाघ्यैः – मातृका । २. °नीयमुचितैः – मातृका ।

**प्रौढ्यादीनामुक्तावन्तर्भावः –**

**एषामष्टानामुक्तिरूपत्वाद्　वैदग्ध्यवदुक्ति[1]रूपगुणेऽन्तर्भाव इत्यष्टानामेकत्वम् ॥**

---

**नौका**

विशेषणैर्योग उदात्तता । [1]और्जित्यं नाम गाढबन्धत्वम् । 'तच्च विसन्धि-[2]वैलक्षण्येन'' (प्रता. गुण.) इति स्वामी । अन्तर्भूता इति । दीप्त्यात्मक-चित्तविकारहेतुत्वादित्यर्थः ॥

प्रौढिं लक्षयति — परिपाकवतीति । परिपाको वैचित्र्यविशेषः । विस्तरकथनयो[1]र्यस्यार्थस्य संक्षेपेणोक्तिः संक्षेप इत्यर्थः। विस्तरं लक्षयति उक्तार्थेति । विस्तर इति । समर्थ(न)प्रपञ्चस्य शब्दात्मकत्वेन – 'प्रथने वावशब्दे' (पा. ३.३.३३) इति घञः प्रतिषेधे 'ऋदोरप्' (पा. ३.३.५७) इत्यप्प्रत्ययः 'स तु शब्दस्य विस्तरः' इत्यमरः । यावदिति । यावन्तोऽर्था यावदर्थमिति तद्धितान्तेन विग्रहः । तदुक्तं हरदत्तेन — 'यावदित्यव्ययं चास्ति तद्धितान्तश्च विद्यते । अतो नित्यसमासेऽपि तद्धितान्तेन विग्रहः ।' इति । 'यावदव-धारणे' (पा. २.१.८) इत्यव्ययीभावः । यावदर्थं पदानि यस्याः सा, सा च सा उक्तिरिति यावदर्थपदोक्तिः । अभिधेयापेक्षया यत्रैकमपि पदं न न्यूनं नात्यधिकं तत् सम्मितत्वमिति भावः । एतेषामन्तर्भावमाह -- एषामष्टाना-मिति । उक्तिरूपेति । 'विदग्धफणितिरुक्तिः' इति लक्षिते उक्तिरूपे गुणे अन्तर्भाव इत्यर्थः ॥

---

**मन्दरः**

परिपाकवतीति । 'प्रौढिरुक्तेः परीपाकः' (प्र. रु. गुण.) इति विद्यानाथः । परिपाको वैचित्र्यविशेषः । यावदर्थेति । यावन्तोऽर्था यावदर्थमिति

---

१. °कथनयोः यस्या° – मातृका ।

---

पाठ. 1. °रूपे–मधु. 2. ओजौर्जित्यं – मातृका ।

२. °वैलक्षण्यमिति – मातृका ।

समाधेर्न गुणत्वम् –

अन्यधर्मस्यान्यत्रारोपणं समाधिः । [1]अस्यारोपगर्भेषु रूपकादिष्वन्तर्भाव इति न गुणत्वम् ॥

नापि श्लेषस्य गुणत्वम् –

अनेकपदानामेकपदप्रतीतिविषयत्वं श्लेषः ॥
अयं तु शब्दश्लेषे[2]ऽन्तर्भाव्यत इति न गुणः ॥

कान्त्यादीनां तु गुणत्वमेव –

१. [3]बन्धोज्ज्वलता कान्तिः ॥
२. शब्दसाधुत्वं सुशब्दता ॥

---

नौका

अथ समाधिस्वरूपं वदन् अस्य रूपका[1]दिष्वलङ्कारेषु अन्तर्भावात् गुणत्वमेव नास्तीत्याह – अन्यधर्मस्येत्यादिना ॥

---

मन्दरः

तद्धितान्तेन विग्रहः । तदुक्तं हरदत्तेन — 'यावदित्यव्ययं चास्ति तद्धितान्तश्च विद्यते । अतो नित्यसमासेऽपि तद्धितान्तेन विग्रहः । (पदमं. पृ. ३६९) इति । 'यावदवधारणे' (पा. २.१.८.) यावदर्थं पदानि यस्यां सा तथोक्ता, सा च सा उक्तिश्च । अभिधेयापेक्षया यत्रैकमपि पदं न न्यूनं नाप्यधिकं तत् सम्मितत्वम् । एषामिति । प्रौढ्यादीनामष्टानामुक्तावन्तर्भाव इत्यर्थः ।

---

पाठ. १. अस्यान्यधर्मारोपपरेषु – मधु. । २. °न्तर्भवतीति–मधु., °न्तर्भूत इति–ख. । ३, °ज्ज्वलत्वं–मधु. ।

---

1. रूपकत्वालङ्कारेषु – मातृका ।

३. [1]गूढार्थत्वं गाम्भीर्यम् ॥

४. [2]भावाद् या वाग्वृत्तिः सा भाविकम् ॥

५. प्रक्रमनिर्वहणं रीतिः । एते पञ्चापि पृथग्गुणाः ॥

सुकुमारताया माधुर्यान्तर्भावः –

सानुस्वारकोमल[3]वर्णता सुकुमारता ॥
इयं माधुर्ये[4]ऽन्तर्भूता ॥

ततश्च —

गुणनवकसङ्ग्रहः –

ओजःप्रसादमाधुर्या[5]ण्युक्तिकान्तिसुशब्दताः ।
गाम्भीर्यं भाविकं रीतिमूचुः केचिद् गुणान् नव ॥

---

नौका

एवं श्लेषस्यापि शब्दश्लेषालङ्कारान्तर्भावान्न गुणत्वमित्याह — अनेकपदानामिति । एवं केषाञ्चिदन्तर्भावमुक्त्वा [1]अनन्तर्गतपृथग्गुणान् [2]लक्षयन्नाह– बन्धोज्ज्वलतेत्यादिना । [3]यदभावे [4]चिरन्तनचित्रच्छायेव प्रबन्धच्छाया भवति, तदौज्ज्वल्यम् । सैव कान्तिरित्यर्थः । तदुक्तम् — औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविपश्चितः । पुराणचित्रस्थानीयं येन शून्यं कवेर्वचः ॥'' इति ॥

सौकुमार्यस्य माधुर्येऽन्तर्भावमाह — [5]सानुस्वारेति । तदेवमन्तर्भावमुक्त्वा – 'गुणा नवैव'इति वादिनां मतेन नव गुणान् परिगणयति—ततश्चेत्यादिना ॥

---

पाठ. १. गाम्भीर्यं नाम गूढार्थता – मधु. । २. 'भावाढ्या वाग्वृत्तिः भाविकम्'– मधु. । ३. °वर्णत्वम् – मधु. । ४. °न्तर्भवति – मधु. । ५. °ण्युक्तिः कान्तिः सुशब्दता – मधु. ।

---

१. अनन्तर्गता° – मातृका. । २. लक्षणयन्–मातृका. । ३. यथाभावे–मातृका. । ४. °चित्त° – मातृका. । ५. नानु° – मातृका. ।

कान्त्यादीनामुदाहरणानि –

[1]तत्र कान्तिर्यथा –

ताराहारहराचलाम्बरसरिन्नीहारहीरामरा –
हारासारपटीरसौवरकरिन्यक्कारभारोद्धुरा ।
कीर्तिः कार्तिकचन्द्रमूर्ति[2]र्विजयिस्फूर्तिस्त्वदीया गुणा
राम ! श्रीरघुराम ! काममकरोद् दीप्रा दिशः प्रायशः ।।४।।

---

नौका

तत्र ओजः प्रसादमाधुर्याण्युदाहृतानि । (अथ) कान्तिगुणमुदाहरति –– तत्र कान्तिर्यथेति । ('तत्र') तेषु मध्य इत्यर्थः ।।

ताराहारेति । तारा नक्षत्राणि । 'नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वाऽस्त्रियाम्' इत्यमरः (१.३.२१) । हारा मुक्तामालाः, [1]हराचलः कैलासः अम्बर[2]सरित् वियद्गङ्गा, नीहारो हिमं, हीरो वज्रम्, अमराणां देवानामाहारोऽन्नं सुधा तस्या आसारो धारासम्पातः, [3]पटीरः श्रीचन्दनं, सुवः सुवर्लोकः स्वर्गः [4]तत्सम्बन्धी सौवरः । 'तस्येदम्' (पा. ४.३.१२०) इत्यण । स चासौ करी च सौवरकरी [5]ऐरावतः । एतेषां न्यक्कारः तिरस्कारः तद्रूपो यो भारः [6]तेनोद्धुरा उत्कृष्टभारयुक्ता । धूरेव धुरा[7], [8]'आपं चैव हलन्तानाम्'

---

मन्दरः

'ततश्च' तथा अन्तर्भावे सतीत्यर्थः । ओज इति । स्पष्टम ।।

ओजः प्रभृतीनां त्रयाणामुदाहृतत्वात् अवशिष्टान् षडप्ययथाक्रममुदाहर्तुकामः प्रथमं कान्तिमुदाहरति — तारेति । सुवःसम्बन्धी सौवरः स चासौ

---

पाठ. १. पङ्क्तिरियं तारेति पद्यं च न पठ्यते – मधु. । २. °विजय°–ख. ।

---

१. हाराचलः–मातृका. । २. अम्बरा सरिद्विय°–मातृका. । ३. पाटीरः–मातृका. । ४. तत्सम्बन्धि – मातृका. । ५. विरावतः – मातृका. । ६. तेनोद्धुरौ – मातृका. । ७. धुट् – मातृका. । ८. आवं – मातृका. ।

रीतिः –

रीतिर्यथा —

[1]कल्याणकेलिकलना कविपुङ्गवानां
कौतूहलं किमपि कञ्जविलोचनानाम् ।

---

नौका

(सि.कौ. अव्य. प्र.) [इत्युक्तेः][1] । एतेषां [1]तिरस्कारिणी । [2]एतत्सदृशीति यावद् । जयति द्वेष्टि तिरस्करोतीत्यादिषु उपमेति दण्डी[3] । [4]कार्तिकेत्यादि विशेषणं स्पष्टम् । एवंविधा त्वदीया कीर्तिः गुणैः दयादानादिसुगुणैः [5]आराम मनोहरेति । हे [6]गुणाराम ! हे श्रीरघुराम ! कामम् अत्यर्थं दिशः [7]दिङ्मण्डल प्रायशो भूरिशः दीप्राः प्रकाशमानाः अकरोदित्यर्थः ॥४॥

रीतिमुदाहरति – रीतिर्यथेति ॥

---

मन्दरः

करी च सौवरकरी च तेषां न्यक्कारे न्यक्काररूपे भारे उद्धुरा अनर्गला । तारादीनां तिरस्कारो मदधीन इति भारवाहिनी । तद्वदतिधवलेति यावत् । गुणानामाराम आश्रयभूत । अत्र बन्धस्योज्ज्वलत्वात् कान्तिः ॥४॥

---

पाठ. 1. पद्यमिदमपि न पठयते – मधु ।

---

टिप्प. 1. वस्तुतस्तु – अत्र – उत्कृष्टा धूर्यस्याः सा उद्धुरा । ऋक्पूरब्धू° – (पा. ५.४.७४) इत्यादिना समासान्त 'अ' प्रत्ययः एव युक्तः । अत एव न 'आपं चैव हलन्तानाम्' इत्यन्तानुधावनापेक्षेति ॥

2. काव्यादर्शे २.६१ इत्यत्र तेनोक्तात्वादिति भावः ॥

---

१. तिरस्कारेण – मातृका । २. एतत्सन्दन्शेति – मातृका । ३. कीर्तिके° मातृका । ४. दाम – मातृका । ५. गुणराम – मातृका । ६. दिङ्मण्डलाः – मातृका ।

कीर्त्युद्गमः कमलबन्धुकुलोद्भवानां
कस्योत्सवं न कुरुते भुवि कोसलेन्द्रः ॥५॥

अत्र प्रक्रान्तस्य ककारस्य पुनःपुनर्निर्वहणाद् रीतिः ॥

उक्तिः –

उक्तिर्यथा —

मन्दोदरीविलोचनबाष्पोत्कटवृष्टिपूर्वदिग्वात्या
क्षोणीनग्नङ्करणक्षुरप्र[1]दीप्रा [2]प्रभाति कापि कला ॥६॥

अत्र नामग्रहणमकृत्वापि रामप्रत्यायनेन वैदग्ध्य[3]प्रकटनाद् भवत्युक्तिः ।

---

नौका

कल्याणकेलीति । व्याख्यातोऽयं प्राक् लक्षणातरङ्गे (३.२२) ॥५॥

[1]अत्र रीतिगुणमुपपादयति – [2]अत्र प्रक्रान्तस्येति ॥

उक्तिमुदाहरति — उक्तिर्यथेति ॥

---

मन्दरः

रीतिमुदाहरति – कल्याणेति । व्याख्यातमेतत् ॥५॥

रीतिमुपपादयति — अत्रेति ॥

---

पाठ. १. °दीप्ता – ख° । २. विभाति – मधु° । ३. °प्रकटनेन – मधु° ।

---

१. अत्रिरिति° - मातृका° । २. अत्रि° - मातृका° ।

भाविकम् -

**भाविकं यथा —**

**असारं संसारं जहिहि विरसारम्भबहुलं**
**मम भ्रातश्चेतः परिचिनु वचोऽतः परमिदम् ।**

---

**नौका**

मन्दोदरीति । मन्दोदरी रावणसती तस्या विलोचन[1]बाष्पो नेत्रजलं [2]स एवोत्कटवृष्टिर्धारा [3]वर्षः तस्य पूर्वदिग्वात्या प्राचीदिग्वायुभूता । पाशादित्वात् [1]यप्रत्ययः। यथा पूर्ववायोः वृष्टिसम्पादकत्वम्, तद्वद् रावणवधेन मन्दोदरीनयनबाष्पसम्पादकत्वात् पूर्ववायुत्वोपचारः । यद्यप्यत्र–'बाष्पो नेत्रजलोष्मणोः' इत्यमरोक्त्या (३.३.१३०) [4]बाष्पपदमेव लोचनजलवाचकमिति पृथग् लोचनपदमनर्थकमेव; तथापि विशिष्टवाचकानां पदानां सति (पृथग्) विशेषण[5]वाचकपदसमवधाने विशेष्यमात्रपरत्वस्य — 'सकीचकैर्मारुतपूर्णरन्ध्रैः' (रघु. २.१२) इत्यत्र — '[2]कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः' (अमर. २.४.१६१) इति कोशात् मारुतपूर्णरन्ध्रत्वविशिष्टवेणुबोधककीचकपदे दृष्टत्वाद् बाष्पपदं जलमात्रपरं द्रष्टव्यम् । नग्ना दिगम्बरा, अनग्ना नग्ना क्रियन्ते यैस्ते नग्नङ्करणाः । 'आढ्यसुभग' (पा. ३.२.५६) इत्यादिना कृञः करणे ख्युन् । 'अरुर्द्विषद्' (पा. ६.३.६७) इति मुमागमः । क्षोण्याः भूमेः नग्नङ्करणाः क्षोणीसर्वस्व-

---

**मन्दरः**

उक्तिमुदाहरति — मन्दोदरीति । क्षोण्याः नग्नङ्करणः, अम्बरभूतस्यार्णवस्यापहाराद् दिगम्बरत्वसम्पादको यः क्षुरप्रः बाणविशेषः तेन दीप्रा प्रकाशमाना । काऽप्यनिर्वाच्या कला व्यक्तिः ॥६॥

---

टिप्प. 1. पाशादिभ्यो यः (पा. ४.२.४९) इति विहित इत्यर्थः । 2. वेणवः कीचकाः – इति मुद्रितकोशपाठः ॥

---

१. °बाष्पा - मातृका° । २. सैवौ° . मातृका । ३. °वर्षं - मातृका° । ४. बाष्पजलमेव - मातृका । ५. विशेषवाचकपदसमवधानविशेषमात्र° - मातृका° ।

महोदारे धीरे भुवनभरधौरेयविभवे
गुणारामे रामे दशमुखविरामे कुरु रतिम् ॥७॥

---

नौका

हारिणः दानवाः तेषु विषये [1]क्षुरप्रवत् छुरिकावत् दीप्रा प्रकाशमाना। सकल-दानवसं[2]हारिणीति यावत्। एवम्विधा काऽप्यनिर्वाच्या कला राममूर्तिः प्रभाति, प्रकाशत इत्यर्थः। इदमार्यावृत्तम्। लक्षणं तूक्तम् ॥६॥

अत्रोक्तरूपं गुणं विशदयति — अत्र नामग्रहणमिति ॥

भाविकमुदाहरति – असारमिति। जहिहीति। 'ओ हाक् त्यागे' विध्यर्थे लोट्। 'सेर्ह्यपिच्च' (पा. ३.४.८७) इति हिः[3]। '[4]आ च हौ' (पा. ६.४.११७) इतीत्व[1]म्। परिचिन्विनि। परिशीलयेत्यर्थः। परि-पूर्वात् चिनोतेः प्रार्थनायां लोट्। 'उतश्च' (पा. ६.४.१०६) इति हेर्लुक्। धौरेयविभव इति। 'धुरो यड्[5]ढकौ' (पा. ४.४.१०७) इति ढक्। 'किति[6] च' (पा. ७.२.११७) इत्यादिवृद्धिः ॥७॥

---

मन्दरः

योजयति — अत्रेति ॥

भाविकमुदाहरति –– असारमिति। स्पष्टम् ॥७॥

---

टिप्प. 1. इत्वमिति। इदीतोश्चकारेणानुकृष्टत्वादिति भावः। अत एव – 'जहाहि जहीहि जहिहि' इति रूपत्रयं साधु।

---

१. क्षुरप्रं क्षुरप्रकत् - मातृका°। २. हारिणेति - मातृका। ३. हः-- मातृका। ४. अचहाविति - मातृका। ५. यकढकौ - मातृका। ६. क्ङिति - मातृका।

अत्राभिमतार्थप्रवर्तनीये चेतसि प्रियरूपभावनावशात् 'भ्रातर्'इति [1]वाग्वृत्तिरिति भाविकम् ॥

गाम्भीर्यम् -

गाम्भीर्यं यथा -

प्रायेण मार्गणै रामो नामरारीनमीमरत् ।
छित्वाऽङ्गान्यकरोत् किन्तु पलायनपरायणान् ॥८॥

अत्र निजकुलकूटस्थस्य [2]मार्ताण्डस्य मुहुर्मुहुर्मण्डलभेदो मा भूदि[3]त्यभिसन्धानात्मकस्या[4]मरद्विषदमारणकारणस्यार्थस्य [5]गूढत्वाद्
गाम्भीर्यम् ॥

---

नौका

अत्र भाविकं विशदयति — अत्राभिमतेत्यादिना ॥

गाम्भीर्यमाह — प्रायेणेति । अमरारीन् राक्षसान् नाभीमरत्, न हिंसितवानित्यर्थः ॥८॥

अत्र गाम्भीर्यं स्पष्टयति — अत्र निजकुलेत्यादिना ॥

---

मन्दरः

गाम्भीर्यमुदाहरति — प्रायेणेति । नामीमरत् न मारयामास ॥८॥

योजयति — अत्रेति ॥

---

पाठ. १. वाग्वृत्तिकं – मधु । २. रवेर्मण्डल° – इत्येव – मधु । ३. °दित्यनुसन्धाना° – मधु । ४. °स्यामरारिमारण° – मधु । ५. च्युतत्वाद्–मधु ।

सौशब्द्यानुदाहरणे निमित्तम् –

[1]उक्तोदाहरणान्येव [2]सौशब्द्यस्योदाहरणानि [3]द्रष्टव्यानि ॥

उपसंहारः –

एवं सूक्ष्मधियां मार्गमाश्रित्योदाहृतं मया ॥

ग्रन्थकर्तृमते गुणाः –

माधुर्यौजःप्रसादास्तु [4]सौशब्द्येन समन्विताः ॥
गुणाश्चत्वार एवैते मम सूक्ष्मतरेक्षितुः ॥
त्रय एवेति [5]वाऽत्यर्थं मनसे रोचते [6]मतम् ॥

---

नौका

सौशब्द्यमुदाहृतप्रायमेवेत्याह — [1]उक्तोदाहरणान्येवेति ॥
निष्कृष्टं स्वमतमावेदयन् तरङ्गमुपसंहरति — एवमित्यादिना श्लोकद्वयेन ॥

---

मन्दरः

लाघवार्थमुदाहरणमन्तरेण सौशब्द्योदाहरणं दर्शयति — उक्तेति ।

प्रागुदाहृतैः माधुर्यौजःप्रसादैः सह एते षडपि मिलित्वा नव गुणा निरूपिताः । अथास्य मतं प्रतिपादयन् निगमयति — एवमिति । त्रय एवेति मतं वा अत्यर्थं मनसे रोचत इति सम्बन्धः ॥

इति इत्यादि ॥

---

पाठ. १. प्रोक्तो° – मधु° । २. सौशब्दा (ब्द्या) देः – मधु । ३. न पठ्यते– मधु । ४. सौशब्देन – मधु° ख. । ५. त्वत्यर्थं – मधु° । ६. मम–मधु° ।

---

१. उक्तोदा° – मातृका ।

पुष्पिका —

[1]इति श्रीमत्त्रिभुवनपवित्रहरित (स) गोत्रावतंसवारणासीवंश-पद्माकरप्रभातभानुना पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्याय-पर्वतनाथसूरिसूनुना श्रीयल्लमाम्बागर्भरत्नाकरपारिजातेन निर्मला-चारपूतेन चतुर्दशविद्याविभूषणवता श्रीधर्मसङ्ख्यावता विरचिते श्रीमद्रघुकुलतिलकयशोघनसारसुरभिते साहित्यरत्नाकरनामन्य-लङ्कारशास्त्रे गुणनिरूपणं नाम पञ्चमस्तरङ्गः ॥

[2]आस्थामन्दिरमिन्दिराप्रणयिनो देवस्य रामात्मन —
स्त्वङ्गत्तुङ्गतरङ्गरिङ्गणभरैरङ्गीकृताडम्बरः ।
ताद‍ृङ्निर्मलधर्मसूरिकवितासोल्लासकल्लोलिनी —
पूर्णः कर्णमनोहरो विजयते साहित्यरत्नाकरः ॥

*धर्मान्तर्वाणिवर्यस्त्रिभुवनविदिते वारणास्यन्वये यः
[3]सञ्जातः पर्वतेशाच्छुभगुणगणभूर्यल्लमाम्बासुगर्भे ।
काव्यालङ्कारकृष्णास्तुतिरविशतकोन्नाटकादिप्रणेतु —
स्तस्यालङ्कारशास्त्रे रघुपति[4]विभुके पञ्चमोऽयं तरङ्गः ॥

---

पाठ. १. गद्यमिदं न पठ्यते – मधु° ख° । २. पद्यमिदं न पठ्यते – मधु° ख° ।
३. 'सञ्जातो यल्लमाम्बाकृतसुकृतफलं पर्वतेशस्य भाग्यम्' – मधु° ।
४. °चरिते – मधु° । *पद्यमिदं न पठ्यते – ख° ।

**नौका**

इति श्रीमत्त्रिभुवनपवित्रविचित्रचरित्रचर्लान्ववाय -
सुधासिन्धुसुधामयूखायमानश्रीमद्धर्मान्तर्वाणि
[१]पौत्रस्य श्रीसूरमाम्बासहचर लक्ष्मण -
सूरिसूनोः श्रीमद्वेङ्कटसूरिणः कृतौ
साहित्यरत्नाकरव्याख्याने
नौकाख्याने [२]गुणनिरूपणं नाम पञ्चम-
स्तरङ्गः ॥६॥

श्रीचर्लान्वयदुग्धसिन्धुजनितः श्रीसूरमाम्बापतिः
श्रीमद्वेङ्कटनामसूरिणममुं प्रासूत सूनुं च यम् ।
तस्यैषा महती कृतिर्गुणवतां नौकाभिधानं चिरं
जीयात् पञ्चमसङ्ख्यया विरचिता तेषां कृते[३] भूतले ॥

---

**मन्दरः**

इति श्रीमल्लादिलक्ष्मणसूरिविरचिते साहित्य -
रत्नाकरव्याख्याने मन्दराख्याने गुणनिरूपणं नाम पञ्चमः
प्रस्थः ॥

इति प्रथमो भाग : समाप्तः

--

---

१. पवित्रस्य – मातका ।　　२. गुणवता – मातृका ।　　३. कृतिर्भूतले – मातृका ।

## साहित्यरत्नाकरप्रथमभागस्थोदाहरणश्लोकसूची

## संस्कृतपरिषद्ग्रन्थावली

### A. General Series

| | ग्रन्थ | मूल्यं |
|---|---|---|
| १.१ | ज्ञानचतुर्विंशी | १.५० |
| २.२ | पण्डितराजकाव्यसंग्रहः | १०.०० |
| ४.३ | ऋग्र्थसारः | ३.०० |
| ६.४ | संस्कृतकविजीवितम्-प्रथमो भागः | ४.५० |
| ७.५ | क्षेमेन्द्रलघुकाव्यसंग्रहः | १६.०० |
| ८.६ | नरकासुरविजयव्यायोगः | ३.०० |
| ९.७ | सीतारामविहारकाव्यम् | ४.०० |
| १०.८ | दानोद्द्योतः - प्रथमो भागः | ६.५० |
| 11.9 | Descriptive Catalogue of skt. Mss. | 30.00 |
| १३.१० | आर्यासप्तशती | ८.५० |
| १४.११ | विक्रमोर्वशीयम् - टीकत्रयोपेतम् | ८.०० |
| १५.१२ | दानोद्द्योतः - द्वितीयो भागः | ८.५० |
| १६.१३ | दानोद्द्योतः - तृतीयो भागः | १२.५० |
| १७.१४ | काशिका - प्रथमो भागः | २५.०० |
| १८.१५ | वृत्तरत्नाकरः - टीकाचतुष्टयोपेतः | १२.०० |
| १९.१६ | गीतगोविन्दम् - टीकात्रयोपेतम् | १४.०० |
| २०.१७ | काशिका - द्वितीयो भागः | ३०.०० |

### B. Popular Series

| | | |
|---|---|---|
| 3.1 | Stories from Kathasaritsagara PART I. | 2.00 |
| 5.2 | Gems from Sanskrit Literature | 1.50 |
| 12.3 | Stories from Kathasaritsagara PART II. | 5.00 |